श्रीः

वेदान्तग्रन्थरत्नमाला. २.

श्रीमहाभारतान्तर्गत-

# श्रीमद्भगवद्गीता

## द्वितीयषट्कम्.

श्रीरामानुजभाष्येण, तद्व्याख्यया श्रीकवितार्किकसिंह-
सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्तदेशिकविरचितया
तात्पर्यचन्द्रिकया, श्रीशङ्करभाष्येण, श्री-
मदानन्दतीर्थभाष्येण, जयतीर्थमुनि-
विरचितया तद्व्याख्यया च
अनुगतम्.



श्रीमदित्यादि श्रीशैलाद्यङ्कि लक्ष्मीनृसिंहकुमार-
कुमारतातार्यकविभूषणैः प्रत्यवेक्षितम्.
अयोध्या - रामानुजसंयमिभिः प्रसादित-
प्रमाणाकरविशिष्टम्.
श्री. अ. वी. नरसिंहाचार्य, ति. चे. नरसिंहाचार्याभ्यां
परिशोधितम्.

---

इदञ्च
आर्. वेङ्कटेश्वरसभाध्यक्षैः स्विकायाम्
आनन्दमुद्राशालायां मुद्रितं
विजयताम्.
1911.





ANANDA PRESS, MADRAS.

VOL. II. 

श्रीः

# श्रीभगवद्गीताद्वितीयषट्कश्लोकानामकारादिक्रमः.



# सप्तमोऽध्यायः.

—— ⁘ ——

**रा॥प्रथमेनाध्यायषट्केन परमप्राप्यभूतस्य परस्य ब्रह्मणो निरवद्यस्य निखिलजगदेककारणस्य सर्वज्ञस्य सर्वभूतस्य सत्यसङ्कल्पस्य महाविभूतेः श्रीमतो नारायणस्य प्राप्त्युपायभूतं तदुपासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमुक्तम्।इदानीं मध्यमेन षट्केन—परब्रह्मभूतपरमपुरुषस्वरूपं तदुपासनं च**

---

**ता॥**षट्कसङ्गतिमाह—**प्रथमेने**ति। **परमे**त्यादिना **वक्तु**मित्यन्तेन द्वितीयषट्कार्थ उक्तः। ततःपरं प्रथमषट्कार्थः। प्रथमेनाध्यायषट्केनोक्तमित्यन्वयः। 'मामुपेत्य'[1] इत्यादीनामर्थं दर्शयति—**परमप्राप्यभूतस्ये**ति। तेन परिशुद्धजीवमात्रव्यावर्तनम्। परमप्राप्यत्वे हेतुः परब्रह्मत्वादिकम्। 'परम्ब्रह्म परन्धाम'[2] इत्यादिक वक्ष्यति। पुरुषोत्तमत्वप्रकरणादीनामर्थो निरवद्यत्वम्।एतेनाचिद्गता विकाराः चिद्गताः क्लेशादयश्च परिहृताः। 'अहं[3] सर्वस्य प्रभवः' इत्यादेरर्थमाह—**निखिले**ति। चिदचिदात्मकं सर्वं जगत्प्रति निमित्तोपादानभूतस्येत्यर्थः। एव परमप्राप्यस्यैव कारणत्वप्रतिपादनाद्व्योमातीतमतन्निरस्तम्। निमित्तोपादानत्वोपयुक्त 'मत्तः[4] परतरम्' इत्याद्यभिप्रेतं सर्वज्ञत्वादिकम्। **सर्वभूतस्य**—सर्वान्तर्यामितया सर्वशरीरकस्येत्यर्थः। 'सर्वं[5] समाप्नोषि ततोऽसि सर्वः' इति हि वक्ष्यति। 'भूमिरापः'[6] इत्यादिना विभूत्यध्यायादिना च वक्ष्यमाणं महाविभूतित्व नारायणशब्दनिर्वचनमपि—**परमप्राप्यभूतस्य**...**विभूते**रित्यादिना सूचितम्।एतदुक्त भवति—परत्वान्निरवद्यत्वात्पितृत्वाद्धितवेदनात्।अन्तरात्मतया दोषप्रतिक्षेपक्षमत्वतः॥ भोगलीलार्थनिस्सीमविभूतिद्वययोगतः।श्रीमत्त्वादप्युपास्योऽय प्राप्यो नारायणः परः॥इति। **प्राप्त्युपायभूतन्तदुपासन**मिति—परमात्मोपासनमेव तत्क्रतुन्यायात्तत्प्राप्त्युपायः;जीवज्ञानं कर्मानुष्ठानं च तन्निर्वर्तकत्वेन परम्परयोपाय इति भावः। अङ्गप्राप्त्रोर्वचनानन्तरमङ्गिप्राप्ययोः प्रतिपादनमिति सङ्गत्यभिप्रायेणाह—**इदानी**मिति। पूर्वोक्तात्परिशुद्धात्मनो व्यावृत्तिं वक्ष्यमाणवैभवसङ्ग्रहं चाभिप्रेत्याह—**परब्रह्मभूतपरमपुरुषस्वरूप**मिति। एतेन तत्त्वपरेषु सामान्यब्रह्मशब्दस्य विशेषे स्थितिर्दर्शिता। अथ मोक्षोपाय[7]परेषु वेदान्तवाक्येषु वेदनोपासनादिशब्दानां विशेपपर्यवसानमाह—**तदुपासनञ्च भक्तिशब्दवाच्य**मिति। एव वाक्यद्वयेन षट्कद्वयसङ्ग्रहश्लोकावप्यर्थाद्व्याख्यातौ। तथाहि—'ज्ञानकर्मात्मिके[8] निष्ठे योगलक्षे सुसंस्कृते। आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते। मध्यमे भगवत्तत्वयाथात्म्यावाप्तिसिद्धये। ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः' इति। **आत्मज्ञानपूर्वके**त्यनेन सुसंस्कृतशब्दो व्याख्यातः; बुद्धिविशेषसंस्कृतत्वं हि प्रागेवोपपादितम्। 'योगलक्षे' 'आत्मानुभूतिसिद्ध्यर्थे' इत्यत्र योगो विषयान्तरेभ्यश्चित्तवृत्तिनिरोधः; तज्जन्यसाक्षात्कारस्त्विहात्मानुभूतिशब्देनोच्यत इत्यपौनरुक्त्यमित्यभिप्रायेण—**याथात्म्यदर्शन**मित्युक्तम्।तत्त्वयाथात्म्यशब्दविवरणं—**परब्रह्मभूते**त्यादि। तत्त्वशब्दोऽत्र स्वरू-

---

**प्र-पा॥** १. गी. ८-१६॥ २. गी. १०-१२॥ ३. गी. १०-८॥ ४. गी. ७-७॥ ५. गी. ११-४०॥ ६. गी. ७-४॥ ७. अनुष्ठेयपरेषु. पा॥ ८. गीतार्थसंग्रहे. २, ३॥

रा॥भक्तिशब्दवाच्यमुच्यते। तदेतदुत्तरत्र*'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'इत्यारभ्य †'विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते। ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति संक्षिप्य वक्ष्यते। उपासनं तु भक्तिरूपापन्नमेव परप्राप्त्युपायभूतमिति वेदान्तवाक्यसिद्धम्। ‡'तमेव विदित्वाऽतिमृत्युमेति'§'तमेवं विद्वानमृत इह भवति' इत्यादिनाभिहितं वेदनम्*'आत्मा वा अरे द्रष्टव्यः...निदिध्यासितव्यः'†'आत्मानमेव लोकमुपासीत'‡'सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'

ता॥पपरः। 'याथात्म्यं'यथावस्थितः प्रकारः। भक्तेः कर्मानुष्ठानसाध्यात्मदर्शनहेतुकत्वम् अष्टादशे वक्ष्यत इत्याह—**तदेतदिति**। ननु '[१]तमेव विदित्वातिमृत्युमेति' इत्यादिबलाद्वेदनमात्रेण मोक्षः प्रतीयते; अस्तु वा 'उपासीत'इतिबलादुपासनरूपेण वेदनेन मोक्षः;तथापि न भक्त्या मोक्ष इति क्वचिदपि श्रुतम्। कर्मसमुच्चयश्च श्रुतिसिद्धो दुस्त्यजः; परमपुरुषविषयस्यैवोपासनस्य मोक्षसाधनत्वमित्यपि दुर्वचम् , रुद्रेन्द्राद्युपासनस्यापि मोक्षसाधनत्वेनाथर्वशिरःप्रतर्दनविद्यादिषु श्रुतेरित्याद्याशङ्क्याह **उपासनं त्विति**। उपासनमेव न तु ज्ञानमात्रमित्येका प्रतिज्ञा; तत्रापि भक्तिरूपापन्न, नोपासनमात्रमिति द्वितीया; एवंविधमुपासनमेव, न तु कर्मसमुच्चितमिति तृतीया; तच्च परविषयमेवेति चतुर्थी। एषा तु **परप्राप्त्युपायभूतमि**त्यनेन तत्क्रतुन्यायात्सूचिता। **वेदान्तवाक्यसिद्धमिति** एतच्चतुष्टयमपि वेदान्तवाक्यैरेव सिद्धम् , न तु कल्प्यम्, नाप्युपबृंहणसापेक्षमिति भावः। तत्र प्रथमा प्रतिज्ञां समर्थयते —**तमेवे**त्यादिना **अवगम्यत** इत्यन्तेन। 'श्रोतव्यो मन्तव्यः' इत्येतयोस्तु रागप्राप्तश्रवणमननानुवादरूपत्वात्तत्परित्यागेन'[२]द्रष्टव्यो निदिध्यासितव्यः'इति विध्यंश उपात्तः। ध्यानोपासनशब्दयोरेकार्थ्यन्दर्शयितुमुभयविशिष्टवाक्योपादानम्। '[३]द्रष्टव्यो.. निदिध्यासितव्यः'इत्यनयोर्भिन्नार्थत्वप्रसिद्धेरेकवाक्यस्थयोरेकार्थत्वे पौनरुक्त्यादिदोषाच्च दर्शनं ध्यानं च पृथगेव विहितमिति शङ्कायां तयोरपि सामान्यविशेषरूपतयैक्यमेवेति दर्शयितुं स्मृतिमात्रं दर्शनमात्रं च पृथक्सर्वग्रन्थिमोक्षहेतुतया वदतोरत एवैकार्थनिर्णायकयोर्वाक्ययोरुपादानम्। एतदुक्तं भवति-समानप्रकरणपठितविशेषे सामान्यशब्दानां पर्यवसानं न्यायसिद्धम् ; अतोऽत्र वेदनादिसामान्यशब्दानां ध्यानोपासनादिशब्दवाच्ये विशेषे पर्यवसानमभ्युपेत्यम्;ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपमिति 'ध्रुवा स्मृतिः'इत्यादिसिद्धम्; सा च ध्रुवा स्मृतिस्सर्वग्रन्थिविप्रमोक्षहेतुतया विहिता;दर्शनं च तद्धेतुतया विहितम्; न चेदमुपायद्वयं, गुरुलघुतारतम्यात्फलस्य चाविशिष्टत्वाल्लघौ सति नियमेन गुरोरपरिग्रहेणानुपायत्वप्रसङ्गात्, नच द्वारद्वारिभावः, एकस्मिन्वाक्ये विशिष्टैकविधिसम्भवे पृथग्विधेः परिग्रहायोगात्; नच दर्शने स्मृतिशब्देनोपचारे कश्चिद्गुणः; अतो ध्रुवास्मृतिरेव दर्शनशब्देन विशेषिता, स्मृतेश्च दर्शनसमानत्वं नाम विशदतमतया दर्शनसमानाकारत्वमेव। भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनसमानाकारता भीरुकामुकादिषु। यथा '[४]वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्। गृहीतधनुषं रामं पाशहस्तमिवान्तकम्'इत्यादि।तथा '[५]लीनेव प्रतिबिम्बितेव' इत्यादि।

प्र-पा॥ *गी. १८-४६॥ †गी.१८. ५३,५४॥
‡ श्वेता. ३-८॥ §पुरुषसूक्तं॥
*२बृ. ६-५-६॥ †बृ. १-४-१५॥
‡छा. ७-२६-२॥
१. श्वेता. ३-८॥ ३. छा. ७-२६-२॥
४. श्रीरामायणे. आरण्यकाण्डे. ३९-१४॥

५. मालतीमाधवे. ५ अङ्के॥'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च। सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिः चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया'॥ मालती कामयमानस्य माधवस्य वचनमिदम्॥

रा॥*"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिभिरैकार्थ्यात्स्मृतिसन्तानरूपं दर्शनसमानाकारं ध्यानोपासनशब्दवाच्यमित्यवगम्यते। पुनश्च †"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति विशेषणात् परेणात्मना वरणीयताहेतुभूतं स्मर्यमाणविषयस्यात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियरूपं स्मृतिसन्तानमेवोपासनशब्दवाच्यमिति हि निश्चीयते। तदेव हि भक्तिरित्युच्यते,‡'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिता॥ एव च स्मृतिदर्शनशब्दयोरैकार्थ्ये सिद्धे 'द्रष्टव्यो निदिध्यासितव्यः' इत्यनयोरेकवाक्यस्थयोरपि सामान्यविशेषरूपेणैकार्थ्यमेवेति। अथ द्वितीयां प्रतिज्ञामुपपादयितुमाह—**पुनश्चे**ति। एतदुक्तं भवति —।'नायमात्मा' इत्यादिना केवलश्रवणमनननिदिध्यासननिषेधः ,अत्यन्तनिषेधे त्वनेकप्रमाणविरोधात्। 'यमेवैषः' इत्यादिनापि वरणीयत्वहेतुभूतस्वक्रियासाध्यो गुणविशेषो विधीयते, ईश्वरस्वाच्छन्द्यमात्राभिधाने वैषम्यनैर्घृण्यादिदोषप्रसङ्गाच्छास्त्रानर्थक्याच्च। तथा सिद्धगुणाभिधानेऽपि शास्त्रानर्थक्यमेव, विधेयान्तराभावात्। स च वरणीयताहेतुस्साध्यो गुणो भक्तिरेव। प्रियतम एव हि वरणीयो भवति। परमात्मविषयप्रीतिमानेव परमात्मना वरणीयः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'[1] इति स्ववचनादिभिस्तथावगतेः - इति। तस्याश्च प्रीतेः स्वयमपि स्वादुतमत्वमुपायान्तरेष्वदृष्टपूर्वं दर्शयति -**स्मर्यमाणे**त्यादिना। 'या प्रीतिरविवेकानाम्' इत्यारभ्य 'तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि' 'कैनाकपृष्ठगमनं पुनरावृत्तिलक्षणम्। क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्' इत्यादिभिर्भगवद्भक्तेस्स्वादुतमत्वं सिद्धम्। स्मृतिस्सन्तन्यते यत्रेति वा, स्मृतेः सन्तानो यत्रेति वा स्मृतिसन्तानशब्देन प्रकृतं वेदन विशेष्यते इति नपुंसकत्वोपपत्तिः। पुल्लिङ्गतया वा पठितव्यम्। अस्त्वेव तथापि भक्तेर्मोक्षोपायत्वं कथमित्यत्राह—**तदेवही**ति। महनीयविषये प्रीतिरेव हि भक्तिरिति भावः। तत्र प्रमाणमाह—**स्नेहे**ति। महनीयविषये प्रीतिरेव हि स्नेहपूर्वमनुध्यानमिति भाव्यम्, अन्यथा स्नेहपूर्वस्वप्रियतमानुध्यानस्यापि भक्तित्वप्रसङ्गात्। एव भक्तिरूपत्वा-

**प्र-पा॥** *मुण्डकोप २-२-८॥ भिद्यतइति॥—हृदयग्रन्थि. हृदयस्य-मनसः, ग्रन्थयः-रागादय ; यद्वा 'मञ्चाः क्रोशन्ति' इतिवत् 'हृदय' शब्दस्तत्स्थजीवपर.। हृत्-स्थानमयतीतिव्युत्पत्तेर्वा; तस्य ग्रन्थिः - प्रकृतिसम्बन्ध . हृदयशब्दोपलक्षितंवा शरीरं ग्रन्थिः. संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थ। देहात्माभिमानादिरूपाविद्येत्यर्थ.। कर्माणि· पुण्यपापरूपाणि; अविद्यासञ्जनकमकृतप्रकृतिसम्बन्धानिश्चरिदर्शनसमानाकारोपासने - नेत्यर्थः। तस्मिन् दृष्टे परावरे पर अवरे यस्मात् परावरः सर्वोत्कृष्टा अपि ब्रह्मादयो यस्मात् निकृष्टा इत्यर्थः। परावरे-परावरशरीरक, सर्वात्मभूत इतिवार्थ· तादृशे तस्मिन्-दृष्टे-दर्शनसमानाकारज्ञानविषयीकृत इत्यर्थ॥ †मुण्डक, ३-२-३॥ १९२ पुटे.व्याख्यातम॥

‡लैङ्गोत्तरं॥ १. गी. ७-१७॥

२. वि.पु. १-२०-१९॥ याप्रीतिरविवेकाना विषयेष्वनपायिनी। त्वामनुस्मरतस्सा मे हृदयान्नापसर्पतु॥ १९॥या-यादृशी, प्रीतिः, विषयेषु तदासक्तानां, सा-तादृशी प्रीतिः, मे हृदयात् नापसर्पतु-मापयातु, हृदये सदा तिष्ठत्वित्यर्थः; केचित 'हृदयान्मापसर्पतु' इति पाठमङ्गीकृत्य माप हे लक्ष्मीपते, सा विषयप्रीतिः त्वामनुस्मरतो मे हृदयात् सर्पतु-निर्गच्छतु; तत्प्रीतौ सत्यां त्वदनुस्मरणायोगादित्यर्थ' इति॥

३.वि.पु.१ २०-१८॥ नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।तेषु तेष्वच्युता भक्ति रच्युतास्तु सदा त्वयि॥

४. वि. पु. २-६ ४४॥ "विष्णुसंस्मरणात् क्षीणसमस्तक्लेशसंचय। मुक्तिं प्रयाति"(२-६-४२) इत्याद्युक्तमुक्तिबीजभगवत्सङ्कीर्तनवतां देवेन्द्रत्वादिपदं विघ्न इत्याह—कनाकपृष्ठेति। शाश्वतफलप्रदस्य हरिकीर्तनस्य स्वर्गादिपद नश्वरत्वात् अननुरूपमित्यर्थः। नाकपृष्ठ-स्वर्गलोकः॥

रा॥धीयते'इत्यादिवचनात्।अतः*'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते'†'नाहं वेदैर्न तपसा न दानेन न चेज्यया।शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप'इत्यनयोरेकार्थत्व सिद्धं भवति । तत्र सप्तमे तावदुपास्यभूतपरमपुरुषस्वरूपयाथात्म्यं, प्रकृत्या तत्तिरोधानं, तन्निवृत्तये भगवत्प्रपत्तिः, उपासकविधाभेदा,ज्ञानिनश्श्रैष्ठ्यं चोच्यते॥

**श्रीभगवानुवाच—**

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥** १

ता॥नभ्युपगमे श्रुतिस्मृत्योः परस्परविरोधः। अभ्युपगमे तदुपबृंहणीयत्वोपबृहणत्वाभ्यां परस्परानुकूल्यमित्यभिप्रायेणाह—अत इति । वेदनशब्दनिर्दिष्टस्य मुक्त्युपायस्य भक्तिरूपत्वादित्यर्थः । परमपुरुषव्यतिरिक्तोपायनिषेधमुखेन तज्ज्ञानव्यतिरिक्तोपायनिषेधश्श्रुतौ सिद्धः । तद्भक्तिव्यतिरिक्तोपायनिषेधः स्मृतौ। तदेतद्भक्तिवेदनशब्दयोरैकार्थ्ये हि घटते । अन्यथा तु मिथो व्याघात इति । एव प्रतिज्ञाद्वय कण्ठोक्त्योपपादितम् , अन्यत्प्रतिज्ञाद्वय त्वर्थतः स्थापितम् । तथा हि—वेदनव्यतिरिक्तनिषेधात्समुच्चयपक्षो निरस्तः । कर्मापेक्षण त्वङ्गतयेति तत्तद्वाक्यार्थनिरूपणेन सिद्ध भवति । श्वेताश्वतरपुरुषसूक्तवाक्ययोरेकविषयतयोपादानात्सर्वशाखागतपुरुषसूक्तवाक्यैकार्थ्यं सर्वोपनिषदां दर्शितम् । तत्र च 'महान् प्रभुर्वै पुरुषस्सत्वस्यैष प्रवर्तकः' इत्यादिबलात्पुरुषविषयत्वमेव व्यक्तम् । शिवादिशब्दास्तु शुद्धिगुणयोगादिना परमपुरुषएव मुख्याः । अथर्वशिरःप्रतर्दनविद्यादिष्वपि रुद्रेन्द्राद्यन्तर्यामि परमपुरुषोपासनमेव विधेयमिति स्थापित शारीरके। **तत्रेति**—मध्यमषट्क इत्यर्थः। **उपास्यभूतेत्यनेन** प्रकृतसङ्गतिस्सूचिता । उपास्यभूतः परमपुरुषो हि षष्ठाध्यायान्तिमश्लोके 'माम्' इति प्रसक्तः । एतेन 'स्वयाथात्म्यं प्रकृत्यास्य तिरोधिश्शरणागतिः । भक्तभेदः प्रबुद्धस्य श्रैष्ठ्य सप्तम उच्यते' इति सङ्ग्रहश्लोकोऽपि व्याख्यातः ॥

अथ भजनीयतया 'माम्' इति प्रस्तुतं स्वात्मानं भजननिर्वृत्तये यथावस्थितमुपदिशामीति

**प्र-पा॥** *पुरुषसूक्तम् ॥ †गी ११-५३, ५४ ॥ १ श्वे.३-१२॥ २.गी. ६-४७॥ ३. गी.सं.॥

**शं॥' योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ' इति प्रश्नबीजम् उपन्यस्य स्वयमेव ' ईदृशं मदीयं तत्त्वम् , एवं मद्गतान्तरात्मा स्यात् ' इत्येतत् विवक्षुः भगवान् उवाच—मयि-वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य स मय्यासक्तमनाः हे पार्थ योगं युञ्जन् मनस्समाधानं कुर्वन् मदाश्रयः अहमेव परमेश्वरः आश्रयो यस्य स मदाश्रयः । यो हि पुरुषार्थेन केन चित् अर्थी स**

**आ॥ओं ॥ साधनं प्राधान्येनोक्तमतीतैरध्यायैः; उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधा-**

ज॥ज्ञानसाधनादन्यदुत्तराध्यायप्रतिपाद्यं वक्तुं'योगे त्विमां शृणु'इति प्रतिज्ञातमसमाप्य कथमर्थान्तरमुच्यत इत्याशङ्कां तावत्परिहरति—**साधनमिति**। ज्ञानस्येति शेषः। तत्र तत्र भगन्महिम्नोऽपि वर्णितत्वेन—**प्राधान्येनेत्युक्तम्**। प्राचुर्येणेत्यर्थः। उक्तमित्यनेन प्रतिज्ञातसमाप्तिं सूचयति। तच्च प्रतिज्ञान्तरकरणादवगम्यते । इदानीमुत्तरग्रन्थप्रतिपाद्यमाह—**उत्तरैस्त्विति** । अध्यायैरिति वर्तते। अनेन ज्ञानविज्ञानशब्दौ ज्ञेयभगवन्माहात्म्यपराविति सूचितम् । अत्रापि कचित्साधनस्योक्तत्वात् **प्राधान्येनेत्यु-**

**रा॥मय्याभिमुख्येन सक्तमनाः-मत्प्रियत्वातिरेकेण मत्स्वरूपेण गुणैश्च चेष्टितेन मद्विभूत्या विश्लेषे सति तत्क्षणादेव विशीर्यमाणस्वभावतया मयि सुगाढं बद्धमनाः,मदाश्रयः तथा स्वयं च मया विना विशीर्यमाणतया मदाश्रयो मदेकाधारः मद्योगं युञ्जन्—योक्तुं प्रवृत्तो योगविषयभूतं मामसंशयं - निस्संशयं समग्रं - सकलं यथा ज्ञास्यसि - येन ज्ञानेनोक्तेन ज्ञास्यसि. तज्ज्ञानमवहितमनाः शृणु ॥ १ ॥**

**ता॥**भगवानुवाच 'मय्यासक्त' इति।'आसक्त' इत्यत्रोपासनार्थमाभिमुख्यमुपसर्गविवक्षितमित्याह—**आभिमुख्येन**ति । तदेव सहेतुकं प्रपञ्चयति—**मत्प्रियत्वे**त्यादिना । अहं प्रियः प्रीतिविषयो यस्य स मत्प्रियस्तस्य भावस्तत्त्वम् । यद्वा, मम प्रियत्वातिरेकेण मत्प्रियत्वातिरेकेणेत्यर्थः । **मद्विभूति**शब्देनात्र भगवदसाधारणपरिजनपरिबर्हभूषणादीनि गृह्यन्ते, नतु विभूतिमात्रम् ,कदाचिदपि तद्विश्लेषायोगात् । यद्वा,विभूतित्वेनाननुभवो विभूत्या विश्लेषः। स्वरूपादिभिरपि हि विश्लेषो यथाभिलषितानुभवाभाव एव । **विशीर्यमाणस्वरूपतये**ति—कार्याक्षमत्वलक्षणशैथिल्येनेत्यर्थः । तेनचात्र मनो विशेष्यते । पौनरुक्त्यप्रसङ्गं परिहर्तुं—**स्वयं चे**त्युक्तम् । 'मदाश्रयः' इत्यत्राब्भक्ष इत्यादाविवावधारणं विवक्षितमिति दर्शयति — **मदेकाधार**इति । मदनुभवैकधारक इत्यर्थः । योगोपकारकं भजनीयविषयतत्त्वज्ञानमिहोच्यते, न तु योगस्य साक्षादनुष्ठानमित्यभिप्रायेण 'युञ्जन्' इति शत्रभिप्रेतमाह—**योक्तुं प्रवृत्त** इति। प्रारब्धापरिसमाप्तरूपवर्तमाने प्रारम्भोऽत्र विवक्षित इति भावः। योगात्पूर्वमेव तत्त्वतो ज्ञातव्यत्वार्थं—**योगविषयभूत**मित्युक्तम्। 'असंशयं समग्रम्' इत्युभयं क्रियाविशेषणम् । समग्रशब्दो निस्संशयत्वाय सर्वप्रकारविशिष्टत्वपर इति दर्शयितुं-- **सकल**पदम्;विशेषदर्शनेन हि संशयनिवृत्तिः। 'तच्छृणु'इति प्रतिनिर्देशवशादुत्तरश्लोकालोचनया उक्तिश्रवणयोरेकविषयत्वसिद्धेश्चात्र ' यथा ' इतिशब्दो ज्ञानपर इत्यभिप्रायेण—**येन ज्ञानेनोक्तेन ज्ञास्यसी**त्युक्तम् । उक्तेन वक्ष्यमाणवाक्यप्रतिपाद्येनेत्यर्थः । श्रूयमाणविषयस्यादृष्टचरत्वाच्छ्रोतुरवधानकरणं प्रथमश्लोकप्रयोजनमिति दर्शयति—**अवहितमना** इति ॥

**शं॥तत्साधनं कर्म अग्निहोत्रादि,तपः,दानं वा किंचित् आश्रयं प्रतिपद्यते, अयं तु योगी माम् एव आश्रयतेप्रतिपद्यते, हित्वा अन्यत् साधनान्तरं मय्येव आसक्तमनाः भवति। यः त्वम् एवंभूतः सन् असंशयं समग्रं समस्तविभूति*बलशक्त्यौदार्यादिगुणसंपन्नं मां यथा**

**आ॥न्येनाह। आसक्तमनाः—अतीव स्नेहयुक्तमनाः।मदाश्रयः—भगवानेव सर्वं मया कारयति, स एव मे शरणम् , तस्मिन्नेवाहं स्थित इति स्थितः । असंशयं समग्रमिति क्रियाविशेषणम् ॥ १ ॥**

**ज॥**क्तम् । संगतिस्तु प्रथमश्लोक एवोक्ता । अनेन द्विविधेन योगेन यज्ज्ञातव्यं तच्छृण्वित्युक्तत्वात् । आसक्तमनाःसंबद्धमनाः इति प्रतीतिनिरासायाह —**आसक्ते**ति।अतीवेत्याङोऽर्थः।संबन्धमात्रस्य योगानङ्गत्वादिति भावः।भगवदाश्रयत्वं सर्वसाधारणं कथं योगिनो विशेषणमित्यत आह —**मदाश्रय** इति। शरणं रक्षकः इति स्थित इति जानन्निति यावत्।असंशयं समग्रम् इत्युभय भगवद्विशेषणत्वेन भास्करो व्याख्यातवान् 'संशयरहितम् समग्रं कृत्स्नं माम् ' इति । अपरस्तु 'समग्रमित्येव समग्रं समस्तविभूति बलशक्त्यैश्वर्यादिगुणसम्पन्नं मां संशयमन्तरेण'इति । तन्निरासार्थमाह—**असंशय**मिति।तव समग्रं यथा भवति ; तथेत्यर्थः। न हि भगवतः संशयराहित्यमिदानीं वक्तव्यम् ; न च भगवान्समग्रोऽन्येन केनचिच्छक्यो ज्ञातुम् , स्वयमेवात्मनात्मानं वेत्थ त्वमिति वक्ष्यमाणत्वादिति भावः ॥ १ ॥

**पा ॥** * बलशक्त्यैश्वर्यादि॥

**ज्ञानं तेऽहं सविज्ञानम् इदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते ॥** २

रा॥अहं ते मद्विषयमिदं ज्ञानं विज्ञानेन सहाशेषतो वक्ष्यामि; विज्ञानं-विविक्ताकार-विषयं ज्ञानम् । यथाहं मद्व्यतिरिक्तात्समस्तचिदचिद्वस्तुजातान्निखिलहेयप्रत्यनीकतया नानाविधानवधिकातिशयासङ्ख्येयकल्याणगुणगणानन्तमहाविभूतितया च विविक्तस्तेन विविक्तविषयज्ञानेन सह मत्स्वरूपविषयज्ञानं वक्ष्यामि । किं बहुना ; यत् ज्ञानं ज्ञात्वा मयि पुनरन्यत् ज्ञातव्यं नावशिष्यते ॥ २ ॥

वक्ष्यमाणस्य ज्ञानस्य दुष्प्रापतामाह—

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥** ३

ता॥'तच्छृणु' इत्युक्तमर्थं पुनस्सावधानत्वातिशयसम्पादनायाहमपि सर्वज्ञस्सर्वशक्तिर्वक्ष्यामीति वदन् 'असंशयं समग्रम्' इत्युक्तमर्थं किञ्चिद्विशदयति—'ज्ञानंतेहम्' इतिश्लोकेन। ज्ञानविज्ञानशब्दयोः पौनरुक्त्यव्युदासाय उपसर्गसिद्धं विशेषं दर्शयति—**विज्ञानंहि विविक्ताकारविषयं ज्ञानमिति**। अत्र ज्ञानविज्ञानशब्दाभ्यां तज्जनकवाक्यलक्षणा। श्रोतव्यत्ववक्तव्यत्वे वा तज्जनकवाक्यद्वारा तत्रोपचरिते। **ज्ञानं ज्ञात्वेति**—ओदनपाकं पचतीतिवत्। एतेन विज्ञानशब्दस्यात्र निदिध्यासनविषयत्वं परोक्तं प्रत्युक्तम्। अर्थस्थितिपरिज्ञानं ह्यत्र 'यज्ज्ञात्वा' इत्यादिनापि व्यज्यते। अतस्स्वरूपनिरूपकनिरूपितस्वरूपविशेषकधर्मविषयतया ज्ञानविज्ञानशब्दयोरपुनरुक्तिः । उभयलिङ्गतयोभयविभूतिविशिष्टतया च वक्ष्यमाणं विविक्तत्वं दर्शयति—**यथाहमिति**। 'ज्ञानं तु विज्ञानगुणोपपन्नं कर्माशुभं पश्यति वर्जनीयम्' इत्यत्रापि विज्ञानशब्देनैतदेव विवक्षितम्, अतिशयितविषयज्ञानस्यान्यानादरहेतुत्वात् । 'अशेषतः' इत्येतस्यैव विवरणम् ज्ञानप्रशंसारूपं चोत्तरार्धं व्याख्याति—**किम्बहुनेति**। 'इह भूयः' इत्यस्यार्थो—**मयिपुनरिति** । अवश्यज्ञातव्यसमस्ताकारविशिष्टमिहोपदिशामीत्युक्तं भवति ॥ २ ॥

प्र-पा ॥ १. गी. ७-१ ॥ २.

शं॥येन प्रकारेण ज्ञास्यसि संशयमन्तरेण 'एवमेव भगवान्' इति, तत् शृणु उच्यमानं मया॥

तच्च मद्विषयं ज्ञानं ते—तुभ्यम् अहं सविज्ञानं - विज्ञानसहितं स्वानुभवयुक्तम्—इदं वक्ष्यामि-कथयिष्यामि अशेषतः—कार्त्स्न्येन। तत् ज्ञानं विवक्षितं स्तौति श्रोतुः अभिमुखीकरणाय—यत् ज्ञात्वा-यत् ज्ञानं ज्ञात्वा न इह भूयः पुनः अन्यत् ज्ञातव्यं पुरुषार्थसाधनम् अवशिष्यते-अवशिष्टं भवति । मत्तत्त्वज्ञो यः, स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वात् दुर्लभतरं ज्ञानम् ॥ २ ॥

कथम् इति ? उच्यते—मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चित् यतति प्रयत्नं

आ॥इदं मद्विषयं ज्ञानं विज्ञानं विशेषज्ञानम् ॥ २ ॥

ज॥ ननु ज्ञानं वक्ष्यते, नतूक्तम्, तत्कथम् 'इदम्' इति परामर्श इत्यत आह—**इदमिति** । 'माम्' इति स्वस्य प्रकृतत्वात् तत्सम्बन्धित्वेन ज्ञानमपि प्रकृतमिति भावः। 'सविज्ञानं...स्वानुभवसंयुक्तम्' इत्येतदपाकर्तुं विज्ञानपदार्थमाह—**विज्ञानमिति** । अस्यैव वक्ष्यमाणत्वादपरस्य तदभावादिति भावः ॥

रा॥**मनुष्याः-शास्त्राधिकारयोग्याः,तेषां सहस्रेषु कश्चिदेव सिद्धिपर्यन्तं यतते। सिद्धिपर्यन्तं यतमानानां सहस्रेषु कश्चिदेव मां विदित्वा मत्तस्सिद्धये यतते । मद्विदां सहस्रेषु कश्चिदेव तत्त्वतो यथावस्थितं मां वेत्ति । न कश्चिदित्यभिप्रायः । *'स महात्मा सुदुर्लभः' †'मां तु वेद न कश्चन' इति हि वक्ष्यते ॥ ३ ॥**

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥** ४

**अस्य विचित्रानन्तभोग्यभोगोपकरणभोगस्थानरूपेणावस्थितस्य जगतः प्रकृतिरियं**

**ता**॥पुनरपि प्रकारान्तरेण प्रशंसा क्रियत इत्यभिप्रायेणाह—**वक्ष्यमाणस्ये**ति।मनुष्यशब्दोऽत्र न जातिविशेषाभिप्रायः, देवादीनामप्यधिकारस्य शारीरके समर्थितत्वात्।अतस्सिद्ध्यर्थयतनयोग्यमात्राभिप्राय इति दर्शयति-**शास्त्राधिकारयोग्या** इति। सिद्ध्यर्थयतनमात्र प्रायेण सर्वसाधारणम्,अतः'सिद्धये' इत्यस्य 'कश्चित्'इत्युक्तविशेषान्वयाय-**सिद्धिपर्यन्तामि**त्युक्तम्।'मां वेत्ति'इत्युक्तवेदनस्य तदधीनसिद्धिपर्यन्तयतनार्थत्वं'यततामपि सिद्धानाम्' इत्यनुवादेनाभिप्रेतमित्याह – **मांविदित्वा मत्तस्सिद्धयेयतत** इति।प्राप्यस्यैव प्रापकत्वादिकमिह तत्त्वम् ।'तत्त्वत' इति विशिष्ट वेदन सामान्यतोऽपि वेदनमात्रे सत्येव हि भवति;अतो यततामपि सिद्धानां कश्चिन्मांवेत्ति,मद्विदिषु कश्चिन्मां तत्त्वतो वेत्ति इति वाक्यद्वयं विवक्षितमित्यभिप्रायेण-**सिद्धिपर्यन्तं यतमानाना** मित्यादिवाक्यभेदः। 'कश्चिन्मां वेत्ति'इत्यत्र कश्चिदेव वेत्ति,न द्वाविति विवक्षा व्यासभीष्माद्यनेकदर्शनादयुक्ता, कश्चिद्वेत्त्यैवेति विवक्षा चात्र निरर्थका,दौर्लभ्यवचनविरुद्धा च;अतोऽर्थस्वभावाद्वक्ष्यमाणसंवादाच्च फलितं दुर्लभत्वाभिप्राय दर्शयति-**नकश्चि**दिति॥

अथ 'भूमिः' इत्यादिना 'नत्वहंतेषु ते मयि' इत्यन्तेन स्वयाथात्म्यमुपदिश्यते । तत्र प्रथमं कार्यकारणरूपाचिद्विलक्षणत्व तच्छेषित्वादिमुखेन दर्शयति । भूम्यादीनां प्रकृतिकार्याणामत्र प्रकृतित्वेन उच्यमानत्वाद्व्यष्टिसृष्ट्यपेक्षया प्रकृतित्वमिह विवक्षितमित्यभिप्रायेणाह— **अस्ये**ति। केचिदाहुः—'अष्टौ-

**प्र-पा**॥*गी.७-१९॥ †गी.७-२६॥ १. गी.७-१२॥

२. गर्भोपनिषदि 'अष्टौप्रकृतयः षोडशविकाराः.' इति । अस्यार्थः विस्तरेण सुबालोपनिषद्भाष्ये श्रुतप्रकाशिकाचार्यैः प्रपञ्चितः तत्रद्रष्टव्यः । महाभारते शान्तिपर्वणिमोक्षधर्मे (३९५-अ) 'अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश। आसान्तु सप्तव्यक्तानि प्राहुरध्यात्मचिन्तकाः ॥१०॥ अव्यक्तंच महांश्चैवतथाऽहंकारएवच पृथिवी वायुराकाशमापोज्योतिश्चपंचमम्॥११॥ एता प्रकृतय स्त्वष्टौ विकारानपिमे शृणु।श्रोत्रंत्वक्चैव चक्षुश्च जिह्वाघ्राणंच पञ्चमम् ॥१२॥ शब्दस्पर्शश्च रूपञ्च रसो गन्ध स्तथैवच । वाक्चहस्तौच पादौच पायुर्मेढ्रन्तथैवच ॥१३॥एते विशेषा राजेन्द्रा महाभूतेषु पंचसु॥'इति। अत्र प्रकृतिगणनावसरे पृथिव्यादिपरिगणनात् तैश्शब्दैस्तन्मात्राण्येव गृह्यन्ते। भूततन्मात्रव्यतिरिक्तानां शब्दस्पर्शादीनां विशेषशब्दोक्तानां षोडशविकारान्तर्भावप्रतिपादनात्।तन्मात्राण्येवाष्टौ प्रकृतित्वेन,विषयेन्द्रियाण्येव षोडशविकारत्वेन विवक्षितानीति भगवतो भाष्यकारस्य हृदयमिति 'महा भूतान्यहङ्कारो बुद्धिरव्यक्तमेवच' (गी-१३-५)इत्यत्र भाष्येस्पष्टमवगम्यते। तत्र'क्षेत्रारम्भकद्रव्याणि'इति आरम्भकद्रव्यपदेन अष्टौ प्रकृतय इति प्रकृतिशब्दो व्याख्यातः ।'क्षेत्राश्रितानि तत्त्वानि' इति विषयेन्द्रियाणां षोडशानां साधारणाकार उक्ताः। अत. 'अष्टौ प्रकृतयः षोडश विकाराः' इतिवाक्ये विषयेन्द्रियाण्येव षोडशविकारत्वेन विवक्षितानीति ॥

शं॥**करोति सिद्धये—सिद्ध्यर्थम् । तेषां यततामपि सिद्धानां—सिद्धा एव हि ते ये मो-**

आ॥**दौर्लभ्यं ज्ञानस्याह—मनुष्याणामिति** ॥ ३ ॥

ज॥ननु ज्ञानादिवचनं प्रतिज्ञाय यत्किञ्चित्कथमुच्यत इत्यत आह—**दौर्लभ्यमि**ति । श्रोतुरादरजननार्थमिति शेषः । ज्ञानस्य दौर्लभ्ये विज्ञानस्य तत्सुतराम् ॥ ३ ॥

रा॥गन्धादिगुणकपृथिव्यप्तेजोवाय्वाकाशादिरूपेण मनःप्रभृतीन्द्रियरूपेण महदहङ्काररूपेण चाष्टधा भिन्ना मदीयेति विद्धि ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५

ता॥प्रकृतयः'इतिश्रुतेरिह भूम्यादिशब्दैस्तन्मात्राणि गृह्यन्ते,मनश्शब्देन मनसः कारणभूतोऽहङ्कारः;अहंकारशब्देन त्वहंकारवासनास्पदम् अव्यक्तं मूलकारणमिति।एव समस्तपदमुख्यार्थभङ्गक्लेशाद्व्यष्ट्यपेक्षया प्रकृतित्वं वरमिति भावः। यद्वा,प्रकृतिशब्देन मूलप्रकृतिरेवोच्यते:द्रव्यैक्यात्सैवाष्टधावस्थितेत्युच्यते;एषा हि पूर्वमेका पश्चादष्टधा परिणता । अत्र स्वोपदेशप्रवृत्तस्य प्रकृतेरष्टविधत्वोपदेशो न सङ्गतः; नच स्वकीयत्वात्तत्सङ्गतिः, तथात्वेनेतः प्रागनुपदिष्टत्वात् । अतः प्रत्यक्षादिसिद्धपृथिव्याद्याकारपरिणता प्रकृतिरिहानूद्यते ; स्वस्य तद्विलक्षणत्वतच्छेषित्वतन्नियामकत्वादिसिद्ध्यर्थं 'मे' इति तस्यास्स्वकीयत्वं विधीयत इत्यभिप्रायेणोक्तं—मदीयेति।'विद्धि' इति पृथिव्यादीनामितरेतरवैषम्यार्थं,भोग्यत्वसिध्यर्थमनुक्तानां तन्मात्राणां कार्यविशेषप्रदर्शनार्थं च—गन्धादिगुणकेत्युक्तम्। एतेन भूतोक्तिस्तन्मात्रोपलक्षणार्थेत्यपि दर्शितम्। तदभिप्रायेण-आकाशादीत्यादिशब्दोऽपि पठ्यते।तन्मात्राणां भूतानामप्यनतिविप्रकर्षात्संख्यानिवेशः।मनश्शब्दः करणभूतेन्द्रियवर्गोपलक्षणार्थं इति दर्शयितु-मनःप्रभृतीन्द्रियरूपेणेत्युक्तम्।बुद्ध्यहङ्कारशब्दयोरत्र ज्ञानगर्वाद्यर्थान्तरभ्रमव्युदासाय तत्त्वविशेषविषयत्वं ज्ञापयति महदहङ्काररूपेणेति।एवं समष्टिव्यष्टितत्त्वमखिलमुक्तं भवति।अत्र सम्बन्धसामान्यविहितापि षष्ठी स्वस्वामिलक्षणसम्बन्धविशेषपर्यवसिता ॥ ४ ॥

एवमचिद्विलक्षणत्वं प्रतिपादितम् ; अतथाभूताज्जीवादपि विलक्षणत्वं प्रतिपाद्यते, 'अपरे

शं॥क्षाय यतन्ते, तेषां कश्चित् एव हि मां वेत्ति तत्त्वतः—यथावत् ॥ ३ ॥

श्रोतारं प्ररोचनेन अभिमुखीकृत्याह—'भूमिः' इति पृथिवीतन्मात्रम् उच्यते, न स्थूला, 'भिन्ना प्रकृतिरष्टधा ; इति वचनात् । तथा अबादयोऽपि तन्मात्राण्येव उच्यन्ते । आपः अनलः वायुः खम् । 'मनः' इति मनसः कारणम् अहङ्कारो गृह्यते । 'बुद्धिः' इति अहङ्कारकारणं महत्तत्त्वम् । अहङ्कारः इति अविद्यासंयुक्तम् अव्यक्तम्। यथा विषसंयुक्तम् अन्नं विषम् उच्यते, एवम् अहङ्कारवासनावत् अव्यक्तं मूलकारणम् अहङ्कार इत्युच्यते, प्रवर्तकत्वात् अहङ्कारस्य । अहङ्कार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । इतीयं यथोक्ता प्रकृतिः मे मम ऐश्वरी माया शक्तिः अष्टधा भिन्ना भेदम् आगता॥

आ॥प्रतिज्ञातं ज्ञानमाह । महतोऽहङ्कार एवान्तर्भावः ॥ ४ ॥

ज॥'मनुष्याणाम्' इतिवदुत्तरमप्यन्यार्थमिति प्रतीतिनिरासार्थं प्रतिज्ञातयोरुभयोः किमादावुच्यत इत्यपेक्षायां चाह —प्रतिज्ञातमिति । असङ्गतिपरिहारायानन्यार्थताज्ञापनाय च ज्ञानस्य प्राथम्ये हेतुसूचनाय च-- प्रतिज्ञातमित्युक्तम्।प्रतिज्ञातत्वेन सङ्गतम् । प्रतिज्ञातमेवन, तु तदर्थम् । प्राथम्येन प्रतिज्ञातम् । *'रसोऽहम्' इत्यतः प्राक्तनग्रन्थसङ्ग्रहायादिपदम् । महत्तत्त्वमत्र नोपात्तं, तत्किं नास्त्येवेत्यत आह—महत इति। अहङ्कारे अहङ्कारशब्दार्थेऽन्तर्भावः। कार्यवाचिनाहङ्कारशब्देन कारणस्य महतोऽप्युपलक्षणमेव, नत्वभाव इत्यर्थः ॥ ४ ॥

*अत्र व्याख्यानुसारी पाठो नोपलभ्यते ॥

रा॥**इयं ममापरा प्रकृतिः; इतस्त्वन्याम् - इतोऽचेतनायाश्चेतनभोग्यभूतायाः प्रकृतेर्विसजातीयाकारां जीवभूतां परां-तस्या भोक्तृत्वेन प्रधानभूतां चेतनरूपां मदीयां प्रकृतिं विद्धि ; ययेदम् अचेतनं कृत्स्नं जगद्धार्यते ॥ ५ ॥**

**ता॥**यम' इति श्लोकेन। अपरा-अनुत्कृष्टा अप्रधानभूतेत्यर्थः।तुशब्दोऽत्यन्तवैलक्षण्यपरः।'इतः पराम्' इत्येतावतैव स्वरूपभेदे सुवचेऽप्यन्यशब्दो वैजात्यदृढीकरणार्थ इत्यभिप्रायेण—**अचेतनाया** इत्यादिकमुक्तम्। 'भोक्ताभोग्यम्' इत्यादिश्रुत्यनुसारेण भोक्तृत्वभोग्यत्वाभ्या परत्वापरत्वे दर्शिते।'इदं जगत्' इति प्रमाणसिद्धनिर्देशासङ्कोचात्—**कृत्स्न**मित्युक्तम् । तत्र 'इदम्' इति पराक्त्वनिर्देशेन सूचितम् अचेतनत्वम् । इदं च धारण जागरादिषु सङ्कल्पत इति प्रत्यक्षादिसिद्धम् ; अन्यदापि स्वरूपतो धारणमिति ॥ ५ ॥

**प्र-पा** ॥ १. श्वे. १-१२ ॥

**शा॥अपरा न परा, निकृष्टा, अशुद्धा अनर्थकरी, संसारबन्धनात्मिका इयम् , इतः अस्याः यथोक्तायाः तु अन्यां विशुद्धां प्रकृतिं मम आत्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो, यया प्रकृत्या इदं धार्यते जगत् अन्तःप्रविष्टया ॥ ५ ॥**

**आ॥अपरा—अनुत्तमा वक्ष्यमाणामपेक्ष्य । जीवभूता—श्रीः । जीवानां प्राणधारिणी चिद्रूपभूता सर्वदा सती 'एतन्महद्भूतम्' इति श्रुतेः । जगाद च 'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा । अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः । महान् बुद्धिर्मनश्चैव पञ्चभूतानि चेति ह । अवरा सा जडा श्रीश्च परेयं धार्यते तथा । चिद्रूपा सात्वनन्ता च अनादिनिधना परा । यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः। नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि।ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराट्'इति ॥५॥**

ज॥अपरशब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह- **अपरे**ति । अनुत्तमत्वस्य सापेक्षत्वात् किमपेक्षयेत्यत आह—**वक्ष्यमाणा**मिति । सन्निधानादिति भावः । जीवलक्षणां जीवत्वं प्राप्तामिति व्याख्याननिरासार्थमाह—**जीवभूते**ति । कथं सा जीवभूतेत्यत आह—**जीवाना**मिति । प्राणधारिणीत्येवोक्ते स्वप्राणधारिणीति प्रतीतिः स्यात् , तन्निरासार्थमुक्तम् —**जीवाना**मिति । सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणांस्तत्र धारयतीत्यर्थः । स्वप्राणधारिणी कुतो न स्यादित्यत आह--**चिद्रूपे**ति।ज्ञानात्मकविग्रहवती । यद्वा 'जीवप्राणधारणे' इत्यतो जीव शब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिमाश्रित्यार्थान्तरमनेनोक्तम् । भूतशब्दस्य सर्वदा सत्त्ववाचित्वे प्रयोग दर्शयति—**एत**दिति । प्रकृतिमपेक्ष्य श्रियः परत्वोपपादनार्थमेतत् । भूमिरित्यादेरभिमतमर्थं पुराणवाक्येन स्थापयति---**जगादचे**ति । देवस्यैव। सृज्यत इति सृष्टिः, कार्यं कार्यरूपेणेत्यर्थः । अनेन 'भूम्यादिशब्दैः पञ्च तन्मात्राण्येवोच्यन्ते, न स्थूलानि भूतानि , मन इति तत्कारणमहङ्कारः , बुद्धिरिति महत्तत्त्वमहङ्कार इति अविद्यासहितमव्यक्तं 'भिन्ना प्रकृतिरष्टधा' इति वचनात्'इति व्याख्यानं निरस्तम्। कार्यरूपेणाष्टधा भिन्नेति व्याख्यानसम्भवेन प्रसिद्धार्थपरित्यागायोगान्महत्यहङ्कारस्यान्तर्भावः इत्येवेति सम्बन्धः। **जडे**त्यवरत्वोपपादनम् । श्रीः **परे**त्यस्योपपादनमियं **धार्यते**तथेत्यादि।**अनन्ता** देशतः गुणतश्च । **परा**—मुख्या । **अनादिनिधना**—न त्वव्यक्तवद्विक्रियावती ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६

रा॥एतच्चेतनाचेतनसमष्टिरूपमदीयप्रकृतिद्वययोनीनि ब्रह्मादिस्तम्बपर्यन्तान्युच्चावच ·

ता॥एव समष्टिदशोक्ता; 'एतद्योनीनि' इत्यर्धेन तु व्यष्टिरुच्यते। 'अहंकृत्स्नस्य' इति तु समष्टिव्यष्ट्योस्सङ्कलितयोः कार्यत्वादिकथनम् 'सर्वाणि' भूतानि इति चिदचिन्मयकार्यनिर्देशात्। एतच्छब्दः प्रस्तुतप्रकार प्रकृतिपुरुषपरामर्शी : न तु प्रकृतिमात्रपर इति दर्शयति —**एतच्चेतने**त्यादिना । एतेन स्वरूपतो निर्विकारस्यापि चेतनस्य देवादिशरीरेन्द्रियतदधीनज्ञानक्रियाभोगादिविशिष्टवेषापेक्षया तत्पूर्वाचित्कल्पावस्थस्य प्रकृतित्वमुपपन्नमिति सूचितम् । व्याख्येये मदीयानीत्येतन्न दृश्यते ; तत्कथमत्र निर्दिश्यत इत्यत्राह—**मदीयप्रकृतिद्वययोनीनी**ति । शब्दाप्रयोगेऽपि वाक्यार्थसिद्धाविति शब्दः स्वकीयत्वपरामर्शार्थ इति भावः। भगवदभिप्रायस्थवचनरूपत्वादत्र मदीयशब्दोक्तिः। **तथे**त्यस्य तथासतीत्यर्थः। तस्यैव विवरणम् —**प्रकृतिद्वये**त्यादि । पूर्वोक्तशेषित्वादिसमुच्चयार्थो वा तथाशब्दः । प्रभवप्रलयशब्दावत्रोत्पत्तिलयस्थानपरौ। ननु 'अजामेका'[1] 'नित्योनित्यानां'[2] 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभा-[3]

**प्र पा** ॥ १. श्वेताश्वतरोप ४-५ ॥ 'अजामेका लोहितशुक्लकृष्णां बह्वी प्रजा सृजमाना सरूपाः । अजो ह्येको जुषमाणोऽनुशेत जहात्येना भुक्तभोगामजोऽन्य ' अजामित्यादि । तेजोबन्नलक्षणविकारगलोहितशुक्लकृष्णरूपयुक्तां, स्वसमानरूपाविविधभूतभौतिकस्रष्ट्री, मुत्पत्तिरहिता, कश्चिदविद्वान् उत्पत्तिरहितया तत्समानएवसन् तत्राऽभ्युध्या सेवमानः, तामनुसृत्यशते तिष्ठति; अपरो विद्वान् कश्चित्कालमभुक्त्वा उत्पन्नवैराग्यस्त्यजतीत्यर्थः ॥
२. श्वे ६-१६ ॥ ३ गी. १३ १९ ॥

**शा॥ एतद्योनीनि एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनी येषां भूतानां तानि एतद्योनीनि भूतानि सर्वाणि इति एवम् उपधारय जानीहि । यस्मात् मम प्रकृतिः योनिः**

**आ॥न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह—'अहम्' इति। प्रभवादेः सत्ताप्रतीत्यादेः कारणत्वात्तद्भोक्तृत्वाच्च प्रभव इत्यादि तथा च श्रुतिः 'सर्वकामः सर्व-**

ज॥नन्वत्रापरपरनिरूपणपूर्वकं भगवतः यत्परतरत्वं वक्तुमभिप्रेत, तत्र शरीरेन्द्रियविषयलक्षणाख्यकार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुम् 'एतद्योनीनि' इत्युक्तम् । इदानीमहं परतर इति वक्तव्यम् , इदं तु किमर्थमुच्यत इत्यत आह—**न केवल**मिति । पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वं परत्वं म इति स्ववशत्व चोक्त्वा 'ययेदं धार्यते जगदेतद्योनीनि' इति जगदाधारत्वकारणत्वे कथिते, तत्र प्रकृती एव भगवद्वशे, जगज्जन्मस्थितिलयास्तु प्रकृत्यधीना एव न भगवदधीना इति प्रतीतम्, तन्निरासार्थमेतदित्यर्थः । 'जगत्प्रातिममैश्वर्यम्' इत्येतावत् प्रकृतिद्वारकमुपचरितमिति यावत् । प्रकृत्योः कारणत्वादिकं मदायत्तमिति भावः । जगद्धर्मयोः प्रभवप्रलययोः साक्षाद्भगवदैक्यमुच्यत इति प्रतीतिनिरासार्थमाह—**प्रभवादे**रिति ॥ यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः, पित्रादेस्तद्भोक्तृत्वम् , तथा तद्भोक्तृत्वात् । भगवतः सर्वभोक्तृत्व कुत इत्यत आह —**तथा च**ेति । 'सर्वकामः' इत्यादेर्द्विरुक्तत्वात् एकं भोगविषयमिति ज्ञायते । काम्यन्त इति कामा द्रव्याणि । गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदमभि अभितः, आत्तो धृतः स्थित इत्यर्थः। न विद्यते वाक्य-

रा॥भावेनावस्थितानि चिदचिन्मिश्राणि मदीयानि सर्वाणि भूतानीत्युपधारय।मदीयप्रकृतिद्वययोनीनि हि तानि मदीयान्येव । तथा प्रकृतिद्वययोनित्वेन कृत्स्नस्य जगतः तयोर्द्वयोरपि मद्योनित्वेन मदीयत्वेन च कृत्स्नस्य जगतः अहमेव प्रभवोऽहमेव च प्रलयोऽहमेव च शेषीत्युपधारय । तयोश्चिदचित्समष्टिभूतयोः प्रकृतिपुरुषयोरपि परमपुरुषयोनित्वं श्रुतिस्मृतिसिद्धम्। *'महानव्यक्ते लीयते।अव्यक्तमक्षरे लीयते।अक्षरं तमसि लीयते। तमः परे देव एकी भवति'†'विष्णोस्स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र'‡'प्रकृतिर्या

ता॥वपि'इत्यादिषु सत्सु कार्यविषये कृत्स्नशब्देन प्रकृतिद्वयस्यापि सङ्ग्रहः कथमवगम्यत इत्यत्राह—**चिदचित्समष्टी**ति । प्रकृतिपुरुषयोः परमात्मनि प्रलयश्रुतिबलात्तयोस्तस्मादुत्पत्तिरपि श्रुतिसिद्धैव स्यादित्यभिप्रायेणोपादत्ते—**महानि**ति । प्रकृतिपुरुषयोः परमात्मनि लयो नाम क्षीरे नीरस्येव विभागानर्हस्संश्लेषविशेषः। तेन द्रव्यस्वरूपस्य नित्यत्वात् 'अजाम्' इत्यादेरविरोधः। उक्तार्थे स्मृतिमुदाहरति—**विष्णोरि**ति।परतोदिते परत उदित इत्यर्थः; आर्षस्सन्धिभेदः;यद्वा, स्मृतिरपीयं प्रलयपरैव,तत्प्रकरण-

**प्र-पा॥** *सुबाल.२-ख॥महानिति॥ महत्तत्त्वम् अव्यक्ते लीयते। गुणत्रयवैषम्यस्यानन्तरपूर्वावस्था गुणसाम्यम्, गुणसाम्यलक्षणम् - अव्यक्तम् । 'अव्यक्तमक्षरे लीयते'—यस्यामवस्थाया गुणसाम्यमपि अस्फुटम्, तदवस्थं चेतनसमष्टिगर्भं तत् अक्षरशब्देनोच्यते । नतु चेतनमात्रम् ; तस्याव्यक्तप्रकृतित्वतमोविकृतित्वायोगात् । अतस्सर्वं तत्त्वजातं चिदचिदात्मकं मन्तव्यम् ; 'प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्'इति पराशरवचनात्। अत्र तु चिद्गर्भवस्तुनि अक्षरशब्द उपचरित., प्रयोगेऽन्यथासिद्धे शक्त्यन्तरकल्पनाऽयोगात् । 'अक्षरन्तमसि लीयते'—चिद्गर्भत्वमचित्त्वमपि यत्र विवेक्तुमशक्यम्, तदवस्थमतिसूक्ष्मं प्रधानं—'तम·' शब्दाभिलप्यम् । अक्षराद्यवस्थाप्राप्त्यौन्मुख्यविशिष्टं तदेव विभक्तन्तमः । तदौन्मुख्यरहितमविभक्तन्तमः । परमात्मशरीरतयाऽपि चिन्तयितुमशक्यं सलिलविलीनलवणचन्द्रकान्तस्थसलिलसूर्यकान्तस्थवह्निकल्पं सर्वज्ञपरमात्मैकवेद्यमवतिष्ठते । 'तम परे देव एकी भवति'—महदाद्यवस्थाप्रहाणवत्तमसस्स्वप्रहाणाभावात् लीयत इत्यनुक्तिः । कार्योपयोगितया विभक्तन्तम कार्यानुपयुक्ताविभक्ततमस्येकीभवतीत्यर्थं । तमस्तत्त्वस्य परमात्मशरीरभावस्य 'यस्य मृत्युश्शरीरम्' इति वक्ष्यमाणत्वात् अविभक्ततमश्शरीरकपरमात्मनैकीभाव इति ॥

† वि-पु १-२-२४॥ 'विष्णोः विप्र । तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरन्तद्द्विज कालसंज्ञम्'॥ विष्णोः स्वरूपादिति—अत्र स्वरूपशब्दः रूपवचनः । उदिते-उद्भूते, आर्षस्सन्धिः। दिते इति पदच्छेदे विभक्ते इत्यर्थं । 'तस्मात्तमस्सञ्जायते' इति श्रुतेः । ते रूपे वियुक्ते-सृष्ट्यर्हसंयोगविरहिते यथा स्यातां तथा तस्यैव येनान्येन धृते स्तः तद्रूपान्तरं कालसंज्ञम् । ते (ये) न्येनेत्यार्षत्वात् साधुस्सन्धिः ॥

‡वि-पु. ६-४-३९, ४०. प्रकृतिरित्यादि-प्रकृतेः परमात्मनि लयः पुरुषे लयद्वारा 'अव्यक्तमक्षरे लीयते' इत्यादिश्रुतेः । विष्णुनामा स एव परमेश्वरो वेदेषु वेदान्तेषु च हिरण्यगर्भधातृप्रजापतिरुद्रेन्द्रसद्ब्रह्मात्मादिशब्दैर्गीयते । प्रकृतिरित्यादिश्लोकौ ब्रह्मपुराणेऽपि [१२३ अ. ३७, ३९] पठ्येते ॥

१ ४२४-पुटे व्याख्यातम् ॥

शं॥कारणं सर्वभूतानाम्, अतः अहं कृत्स्नस्य समस्तस्य जगतः प्रभवः उत्पत्तिः प्रलयः

आ ॥ कर्मा सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति। आह च—'स्रष्टा

ज॥मनुग्रहमन्तरेण यस्यासाववाक्यः । न विद्यते आदरः आश्चर्यबुद्धिर्यस्यासौ नादरः। अवाक्यश्चासौ नादरश्चेत्यवाक्यनादरः । कारणत्वादिनैवैक्यव्यपदेश इत्येतत्कुत इत्यत आह—**आह चे**ति । सुखरूपस्य सुखकारणस्य । ननु 'स्रष्टा पाता' इत्यादिकमयुक्तम्,कादाचित्कक्रियावेशे विकारित्वप्रसङ्गात्,

रा॥मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी।पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः। विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' इत्यादिका हि श्रुतिस्मृतयः ॥ ६ ॥

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**

यथा सर्वकारणस्यापि प्रकृतिद्वयस्य कारणत्वेन सर्वाचेतनवस्तुशेषिणश्चेतनस्यापि शेषित्वेन कारणतया शेषितया चाहं परतरः, तथा ज्ञानशक्तिबलादिगुणयोगेन चाहमेव

ता॥स्थत्वात्।' दो अवखण्डने' इत्यत्र दिते इति निष्ठान्त पदम्, पृथग्भूते इत्यर्थः।तेन प्रलयदशायामपि प्रधानपुरुषेश्वराणां मिथः स्वरूपभेदोऽस्त्येवेत्युक्त भवति।अदिते इतिवा पदच्छेदः; अपृथग्भूते इत्यर्थः; तेन विभागानर्हः संश्लेष उक्तो भवति, प्रलयप्रकरणस्थत्वादत्रापि पूर्वोत्तरोपादीयमानस्मृतिसमानार्थत्वाभिप्रायाच्च। स्वाभिमतार्थे स्फुटार्थं वचनमुदाहरति—**प्रकृति**रिति ॥ ६ ॥

'मत्तः परतरम्'इत्यत्र पूर्वोक्तस्यैवार्थस्य व्यतिरेकेण दृढीकरणमात्रपरत्वे मन्दप्रयोजनत्वम्,अहं परतर इत्येवंरूपेण पूर्वमनुक्तेश्च तद्व्यतिरेकनिषेधोऽपि नातीवोचितः। अतोऽनुपदिष्टापूर्वार्थपरत्वमेव शब्दस्य सम्भवदपरित्याज्यमित्यभिप्रायेणाह—**यथे**ति। पूर्वश्लोकस्थतथाशब्दोऽत्रानुषक्तः; ततश्चानन्तमहाविभूतियोगोऽनन्तगुणयोगे दृष्टान्तित इत्यभिप्रायेणाह – **तथाज्ञानशक्ती**ति।**शेषित्वेने**त्यन्तमर्थस्थितिप्रदर्शनम्; **कारणतया शेषितयाचे**ति परतरत्वप्रकारकथनमित्यपुनरुक्तिः। नन्वहमेवेत्यवधारणमशक्यम्,

प्र-पा ॥ १. दैवादिक: परस्मैपदि ॥

शं॥विनाशः; तथा प्रकृतिद्वयद्वारेण अहं सर्वज्ञः ईश्वरः जगतः कारणम् इत्यर्थः ॥ ६ ॥

यस्मात् एवं तस्मात्—मत्तः परमेश्वरात् परतरम् अन्यत् कारणान्तरं किञ्चित् नास्ति न विद्यते. अहमेव जगत्कारणम् इत्यर्थः, हे धनञ्जय यस्मात् एवं तस्मात् मयि सर्वाणि भूतानि सर्वम् इदं जगत् प्रोतम् अनुस्यूतम् अनुगतं ग्रथितम् इत्यर्थः, दीर्घ-

आ॥पाता च संहर्ता नियन्ता च प्रकाशिता। यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिस्स्तुतः। सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः।आगमिष्यत्सुखं चापि तच्चास्त्येव सदापि तु। तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च' इति नारदीये ॥ ६ ॥

अहमेव

ज ॥ भोगेन यद्भाव्यं सुखं तस्य पूर्वमभावेनापूर्णत्वप्रसङ्गाच्चेत्यत आह—**आगमिष्यदि**ति। यद्भोगेनागमिष्यत्सुखं तच्च सदाऽप्यस्त्येव, क्रियाश्च शक्तिरूपेण चेति चार्थः। तर्हि कथं भोगेन जातमित्युच्यत इति भावेन पृच्छति—**अपि त्वि**ति। उत्तरमाह—**तथापी**ति। सदा सद्भावेऽपि। यद्यपि प्रभवत्यस्मादिति प्रभवः, प्रलीयतेऽस्मिन्निति प्रलय इति शक्यते व्याख्यातुम्, तथाऽपि महिमातिशयलाभायैवं व्याख्यातम्। एतेन'यस्मान्मम प्रकृती योनी सर्वभूताना ततोऽह कृत्स्नस्य जगत: प्रभव: प्रलयस्तथा' इति व्याख्यानमपहस्तितं भवति ॥ ६ ॥

नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यम्; 'मत्तः' इति किमुच्यत इत्यतस्तात्पर्यमाह—**अहमेवे**ति। परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वमुक्तप्रायम्; किंत्वपरतत्त्व यथाऽनेकं भूम्यादिभेदेन, यथा च परतत्त्व 'मुक्तस्तु स्यात्पराभासः' इति वचनात्, तथा परतरमपि किमनेकमुत

रा॥परतरः।मत्तोऽन्यत्-मद्व्यतिरिक्तं ज्ञानबलादिगुणान्तरयोगि किञ्चिदपि परतरं नास्ति॥

**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥** ७

सर्वमिदं चिदचिद्वस्तुजातं कार्यावस्थं कारणावस्थं च मच्छरीरभूतं सूत्रे मणिगणवदात्मतयाऽवस्थिते मयि प्रोतम्-आश्रितम् *'यस्य पृथिवी शरीरम्' †'यस्यात्मा शरीरम्' ‡'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यात्मशरीरभावेनावस्थानं च जगद्ब्रह्मणोरन्तर्यामिब्रह्मणादिषु सिद्धम् ॥ ७ ॥

रा॥अतस्सर्वस्य परमपुरुषशरीरत्वेनात्मभूतपरमपुरुषप्रकारत्वात्सर्वप्रकारः परमपुरुष एवावस्थित इति सर्वैश्शब्दैस्तस्यैवाभिधानमिति तत्तत्सामानाधिकरण्येनाह—

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवस्सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥** ८

---

ता॥स्वस्मात्परतरनिषेधेऽपि समनिषेधाप्रतीतेरित्यत्राह—**मत्तोन्यदि**ति।**मद्व्यतिरिक्त**मिति—अयमभिप्रायः—'मत्तः'इति पञ्चमी न परतरमित्यनेनान्विता,तथा सत्यन्यशब्दानन्वयप्रसङ्गात्;अतो मत्तोऽन्यत्परतर नास्तीत्यन्वये अहमेव परतर इति फलितम्,ततश्च समाभ्यधिकदरिद्रत्वमुक्त भवति—इति।**ज्ञानबलादिगुणान्तरयोगि किञ्चिदपी**त्यनेन ब्रह्मेशानादयोऽधिकारिणः परिशुद्धात्मानश्च क्रोडीकृताः।एवं '[1]भूमिरापः' इत्यादिना निरपेक्षप्रकृतिपरिणामवादः, केवलचेतनसन्निधिमात्रपरिणामित्वं, प्रकृतिपुरुषयोरीश्वरं प्रत्यशेषत्ववादश्च निरस्तः। 'मत्तः परतरम्' इत्यनेन तु त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरप्रवाहेश्वरपक्षाः प्रतिक्षिप्ताः ॥ ६॥ ॥

अथ पूर्वोक्तसर्वोपादानत्वप्रसक्तसविकारत्वपरिहारार्थं पृथक्सिद्धप्रकृतिपुरुषादिवादनिरासार्थं च सर्वाधारत्वमुखेन सर्वशरीरित्वमुच्यते 'मयि' इत्यर्धेन। 'सर्वमिदम्' इत्यनेन सर्वावस्थसमस्तचिदचिद्वस्तुसङ्ग्रह इत्यभिप्रायेणोक्तं—**चिदचिद्वस्तुजात**मित्यादि।सूत्रमणिगणदृष्टान्तसामर्थ्यात्'प्रोतम्' इत्यनेन चानुप्रवेशाश्रयाश्रयिभावप्रतीतेश्शरीरलक्षणमपि सूचितमित्यभिप्रायेण—**मच्छरीरभूत**मित्यादिकमुक्तम्। एकस्यैव सर्वाधारत्वमनुप्रविष्टस्य गूढत्वमाधेयभूतप्रकृत्याद्यधीनस्थितिविरहश्च सूत्रदृष्टान्तसिद्धः। प्रोतशब्देन सूत्रवद्बहिर्व्याप्तयभावप्रतीतिव्युदासायाह—**आश्रित**मिति। अत्र सुबालोपनिषद्वाक्योपादानमन्तर्यामिणो नारायणत्वव्यक्त्यर्थमन्तर्यामिब्राह्मणानुक्ततत्त्वान्तरसङ्ग्रहार्थं च ॥ ७ ॥

---

*प्र-पा॥बृह ५-७-३ ॥ †शतपथब्रा १४-का. ५-प्रपाट. ६-अ. ५-ब्रा. ३०-वा ॥

‡सुबालोप. ७-ख. एष इति॥अस्यार्थः—अत्र भूतशब्दस्य सत्तावद्वस्तुवाचित्वात् उभयविभूत्यन्तर्गतं चिदचिद्वस्तुजातमनेन भूतशब्देन निर्दिश्यते। 'अपहतपाप्मा' इतिपूर्वोक्तेषु पृथिव्यादितमःपर्यन्तेषु वस्तुष्वन्तर्यामितया वर्तमानोऽपि तद्गतदोषैरसस्पृष्ट इत्यर्थः। दिव्यः—दिविस्थितः, परमपदनिलय इत्यर्थः। देव. द्योतनादिगुणविशिष्टः। एकः अद्वितीयः समाभ्यधिकरहित इत्यर्थः। एवम्भूतः क इत्यपेक्षायामाह—नारायण इति॥ १. गी. ७-४ ॥

---

शं॥**तन्तुषु पटवत्, सूत्रे च मणिगणा इव ॥ ७ ॥**

---

आ॥**परतरो मत्तोऽन्यत्परतरं न किञ्चिदपि ॥ ७ ॥**

ज॥त्वमेकएवेति जिज्ञासायामहमेव परतर इत्यनेनोच्यत इत्यर्थः। कथमनेनेदं लभ्यते, भगवत्प्रतियोगिकाधिक्यवन्निषेधस्यात्र प्रतीतेरित्यतो योजयति—**मत्त** इति। अन्यथा तरपोऽन्यशब्दस्य च वैयर्थ्यादिति भावः ॥ ७ ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १०
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११

---

**ता॥**एव 'भूमिरापः'इत्यादिना भेदश्रुत्यर्थः उपबृंहितः। 'मयि सर्वम्' इति तु घटकश्रुत्यर्थः। अथ तदुभयनिर्वाहिताभेदश्रुत्यर्थोपबृंहणं क्रियत इत्यभिप्रायेणाह-**अत** इति। केचित्'मयि सर्वमिदम्'इत्यस्य रसादिधर्मविशिष्टे मयि प्रोतमित्यर्थः, तद्विवरणं 'रसोहम्'इत्यादि—इति व्याचख्युः । तत्परिहारायाह—**सर्वस्यपरमपुरुषशरीरत्वेनेति**। परोक्ते त्वाधाराधेयभाववैपरीत्यादिदोष इति भावः। प्रकारवाचिशब्दानां प्रकारिणि पर्यवसानस्वाभाव्यं जातिगुणादिशब्देष्वपि सामान्यतस्सिद्धमिति दर्शयितुं प्रकारत्वोपादानम्। **अभिधानं**-मुख्यवृत्त्या बोधनम्। यद्यपि रसादिशब्दा लोके निष्कर्षकाः प्रयुज्यन्ते, व्यभिकरणतया चात्राबादिद्रव्योपादानम्; तथापि रसादीनां परमात्मशरीरभूतद्रव्यप्रकारत्वेन परमात्मनः प्रकारित्वाद्रसादिशब्दानां चात्र तत्समानाधिकरणतया प्रयोगात्तत्र निष्कर्षकत्वन्नास्तीत्यभ्युपगन्तव्यम् ।

**प्र-पा** ॥ १. गी ७-४ ॥ २. गी. ७-७ ॥

---

**शं॥रसः अहम्, अपां यः सारः स रसः, तस्मिन् रसभूते मयि आपः प्रोता इत्यर्थः । एवं सर्वत्र । यथा अहम् अप्सु रसः, एवं प्रभा अस्मि शशिसूर्ययोः । प्रणवः ओंकारः सर्ववेदेषु, तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दः सारभूतः, तस्मिन् मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावः पौरुषम् ; यतः पुंबुद्धिः नृषु, तस्मिन् पौरुषे मयि पुरुषाः प्रोताः ॥ ८ ॥**

---

आ॥**इदं ज्ञानं—रसोऽहमित्यादि विज्ञानम्। अबादयोऽपि तत एव। तथाऽपि रसादि-**

**ज॥**भूमिरित्यादिनेत्यत्रावधेरनुक्ते 'रसोऽहम्'इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात्,तन्निरासाय तत्समाप्तिमाह—**इदमिति** । एतावता ग्रन्थेन ज्ञानं निरूपितमित्यर्थः । कुतोऽत्र ज्ञानप्रकरणस्य समाप्तिरित्यत आह—**रसोऽहमिति** । इतिशब्दाद्यभावेऽपि प्रकरणान्तरारम्भ एव समाप्तिं गमयिष्यति । अलौकिकमाहात्म्यप्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायत इति भावः । प्रभवादेरित्युक्तन्यायेनैव रसोऽहमित्यादेरपि व्याख्यानं सिद्धम् । रसादीनां सत्तादिकारणत्वाद्भोक्तृत्वाच्च भगवान् रसादिरिति । नन्वबादयो धर्मिणो भगवदधीनास्तद्भोग्याश्चेत्यङ्गीक्रियते, न वा;नेति पक्षे'अहं कृत्स्नस्य'इत्युक्तविरोधः। आद्ये तु'अप्सु रसः'इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणस्यानुपपत्तिरित्यतः प्रथमं पक्षं तावदङ्गीकरोति—**अबादयोऽपीति** । धर्मिणोऽपि तदधीना एव तद्भोग्याश्चैव । ननु तत्रोक्तो दोष इत्यतः कारणत्वे तावद्विशेषशब्दोपादाने प्रयोजनमाह—**तथापीति** । यद्यपि धर्मिणोऽपि भगवदधीना एव, तथाऽपि धर्मिभ्यो निष्कृष्य धर्माणामुपादानं युज्यत इति शेषः । कथमित्यत आह **रसादीति** । रसादयश्च ते स्वभावा अबादीनामनागन्तुकधर्माश्चेति रसादिस्वभावास्तेषां साराणामबादिधर्मेषु सङ्ख्यादिषु श्रेष्ठानां च तेषामेवाबादिस्वभावभूतानां तद्धर्मेषु श्रेष्ठानां च रसादीनामिति

ता॥द्रव्योपादानं तु तत्रतत्र द्रव्ये प्रधानभूतरसगन्धादिप्रकारिभूतोऽहमिति ज्ञापनार्थम्।द्रव्यप्रकाराणां च तत्प्रकारत्व'काठिन्यवान्यो बिभर्ति'इत्यादिषु प्रयुक्तमिति भावः । रसस्य पृथिव्यां वृत्तौ सत्यामप्यपां रूपादिगुणान्तरसद्भावेऽपि'रसोऽहमप्सु'इति विशिष्योपादान तेजस्तत्त्वादब्रूपपरिणामस्य पूर्वतत्त्वानुत्पन्नरसप्रधानत्वात्। अन्यत्र च 'आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते' इत्यादिना च पृथिव्यादीनां गन्धरसाद्यधीनत्वमुक्तम् । एवमुत्तरत्रापि प्राधान्यतो विशेषनिर्देशे यथोचितं भाव्यम् । प्रभा स्वाश्रयातिरिक्तप्रसारितेजोद्रव्यविशेषः। प्रभयैव चन्द्रसूर्यौ जगदुपकारहेतुभूताविति तौ तत्प्रधानौ । सर्वेषां वेदानां बीजत्वादिना तेषु प्रणवः प्रधानभूतः। पौरुषं-पुरुषस्य भावः, यतः पुरुषबुद्धिरित्येके,सन्तानपरंपराहेतुभूत रेत इत्यपरे;यद्वा-पौरुप,सामर्थ्यं कर्तृत्वशक्तिरित्यर्थः,तयैव हि कर्तुरात्मनः कारकान्तरेभ्यः प्राधान्यम्। नृषु जीवेष्वित्यर्थः। यद्वा पौरुप पुंस्त्वम् ; स्त्रीनपुंसकव्यावृत्तः सत्त्वादिस्वभावविशेषः । नृशब्दश्च पुरुषपर्यायः। पुण्यो गन्धः-तुलस्यादिगन्धः, सुरभिगन्धमात्रं वा, तद्योगेन हि पृथिवी सत्त्वोन्मेषस्य सुखस्य वा हेतुर्भवति। विभावसुरग्निः। तत्र च तेजो-दाहकत्वशक्तिः। भूतशब्देनात्र शरीरिणो गृह्यन्ते। सर्वशब्देनात्र ब्रह्मशर्वादीनामपि सङ्ग्रहः। तेषु जीवन-प्राणनम् , प्राणस्थितिहेतुर्वा। येन सर्वाणि भूतानि जीवन्ति, भूतेषूपजीवनीय वा रूपम्। सर्वभूताना सनातन बीजं प्रकृतितत्त्वम्। अथवा प्रधानधर्मनिर्देशप्रकरणत्वाद्बीजशब्दोऽत्रोपादानत्वाख्यस्वभावपरः।सर्वेपा परिणामिद्रव्याणां स्वकार्यपरिणामसामर्थ्यमित्य-

प्र-पा॥१ वि-पु १-१४-२८॥ 'काठिन्यवान्यो बिभर्ति जगदेतदशेषतः।शब्दादिसंश्रयो व्यापी तस्मै भूम्यात्मने नमः' ॥ २ वि-पु ६-४-१४ ॥ 'आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्' इति पूर्वा ॥

शं॥**पुण्यः सुरभिः गन्धः पृथिव्यां च अहम्, तस्मिन् मयि गन्धभूते पृथिवी प्रोता। पुण्यत्वं गन्धस्य स्वभावत एव;पृथिव्यां दर्शितम् अबादिषु रसादेः पुण्यत्वोपलक्षणार्थम्। अपुण्यत्वं तु गन्धादीनाम् अविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति। तेजः दीप्तिः च अस्मि विभावसौ अग्नौ । तथा जीवनं सर्वभूतेषु, येन जीवन्ति सर्वाणि भूतानि तत् जीवनम् । तपश्च अस्मि तपस्विषु, तस्मिन् तपसि मयि तपस्विनः प्रोताः ॥९ ॥**

**बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरन्तनम् । किञ्च—**

आ॥**स्वभावानां साराणां च स्वभावत्वे सारत्वे च विशेषतोऽपि नियामकः;न त्वबादिनियमानुबद्धो रसादिस्तत्सारत्वादिश्चेति दर्शयति—अप्सु रसा इत्यादिविशेषशब्दैः । भोगश्च**

ज ॥ यावत् । स्वभावत्वेऽबादीनामिति शेषः । सारत्वेऽबादिधर्मेष्विति शेषः । रसादित्वेचेति चार्थः । स भगवानेव । विशेषतोऽपीत्यस्य व्यावर्त्यं—न त्विति । अनुबद्धोऽनुषङ्गसिद्धः । **तत्सारत्वादिश्चे**ति—तस्य रसादेरबादिधर्मेषु सारत्वमबादिस्वभावत्वं रसत्वादिकं चेत्यर्थः। यथा लोके कुविन्दादिः पटाद्रिद्रव्येष्वेव व्यापारवाननुभूयते, न तु तदीयेषु गन्धरसादिषु गुणेषु तद्धर्मेषु च गन्धत्वादिषु पृथग्व्यापारवान्; किं तु ते पटादिजन्मानुषङ्गिजन्मान एव ; न तथा भगवान् ; अपित्वबादेर्धर्मेषु रसादिषु तद्धर्मेषु च स्वभावत्वादिषु पृथक् प्रयत्नवान् , नत्वबादिनियमानुषङ्गिसत्तादिकास्त इति दर्शयितुं विशेषशब्दा उपात्ता इत्यर्थः । भोगपक्षेऽपि प्रयोजनमाह—**भोगश्चे**ति। अबादिभोगादप्यतिशयेन रसादेर्भोगः परमेश्वरस्येति दर्शयति । विशेषशब्दैरिति सम्बन्धः । र-

रा॥एते सर्वैविलक्षणा भावा मत्त एवोत्पन्नाः,मच्छेषभूताः,मच्छरीरतया मय्येवावस्थिताः;

ता॥र्थः। अथवा बीजं प्ररोहकारण जङ्गमस्थावरभूतानां तत्तदुपादानद्रव्यम्।बुद्धिः-अध्यवसायः,ज्ञानमात्रं वा । तेजस्विनः प्रतापशीलाः, तेषा तेजः - अनभिभवनीयत्वं, पराभिभवसामर्थ्यं वा। तेजोभिमान इति केचित्; प्रागल्भ्यमित्यपरे। बल-धारणादिशक्तिः।कामरागवशात्स्वकार्ये प्रवृत्तस्य बलस्य परपीडादिहेतुत्वाद्धर्मोपयुक्तशरीरादिधारणमात्रादिविषयत्वाय 'कामरागविवर्जितम्' इत्युक्तम् ।कामः—इच्छायाः काष्ठाप्राप्तदशा। राग इच्छा। यद्वा कामशब्दः काम्यपरः,तद्विषयो रागः कामरागः; भूतेषु-देवमनुष्यादिरूपेणावस्थितेषु जन्तुषु।धर्माविरुद्धः कामः—स्वदारप्रीत्यादिः।अथ'रसोऽहम्'इत्यादिसामानाधिकरण्यं सहेतुकमुपपादयति—एत इति । नचाय तदधीनसामर्थ्यप्रदर्शनार्थो 'राजा राष्ट्रम्' इत्यादिवदा

प्र-पा॥ १. गां ७-८ ॥

शं ॥ बुद्धिः विवेकशक्तिः अन्तःकरणस्य बुद्धिमताम् विवेकशक्तिमताम् अस्मि, तेजः प्रागल्भ्यं तद्वतां तेजस्विनाम् अहम् ॥ १० ॥

बलं सामर्थ्यं ओजो बलवताम् अहं,तत् च बलं कामरागविवर्जितं, कामश्च रागश्च कामरागौ—कामः तृष्णा असन्निकृष्टेषु विषयेषु, रागो रञ्जना प्राप्तेषु विषयेषु, ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलम् अहम् अस्मि; न तु संसारिणामिव तृष्णारागकारणम् अस्मि।किञ्च—धर्माविरुद्धः धर्मेण शास्त्रार्थेन अविरुद्धो यः प्राणिषु

आ॥विशेषतो रसादेरिति च उपासनार्थश्च।उक्तञ्च गीताकल्पे-'रसादीनां रसादित्वे स्वभावत्वे तथैव च । सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् । सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः। रसादिमानिनां देहे स सर्वत्र व्यवस्थितः। अबादयः पार्षदा ध्येयः स ज्ञानिनां हरिः । रसादिसम्पत्त्या अन्येषां वासुदेवो जगत्पतिः' इति। 'स्वभावो जीव एव

ज॥सोऽहमित्याद्यभेदोक्तेरर्थान्तरं सूचयन् तत्रापि विशेषशब्दोपादाने प्रयोजनमाह —उपासनार्थंचेति। विशेषतो रसादेरिति वर्तते । अर्थवशाद्रसादेरिति सप्तमीत्वेन विपरिणम्यते । रसादयः परमेश्वरोपासने प्रतिमात्मानोऽत्र विवक्षिताः। प्रतिमायां चाभेदोक्तिः प्रसिद्धा। प्रतिमात्वमबादीनां समानम् , 'योऽप्सु तिष्ठन्'इत्यादेः। अतः किं विशेषशब्दग्रहणेनेति चेत् –अबादिभ्यो विशेषतो रसादिषु भगवदुपासनार्थं तदुपपत्तिरिति । उक्तेऽर्थत्रये प्रमाणमाह—उक्तं चेति। तथाचशब्दौ अन्योन्यसमुच्चये । एवशब्दस्येश्वर इत्यनेन सम्बन्धः । सर्वत्राबादिषु । ईश्वरो रसादिकं जगदित्युच्यत इत्यर्थः । अबादयोऽबाद्यभिमानिनः । ज्ञानिनां ज्ञानार्थिनां सम्पत्त्यै प्राप्त्यै अन्येषां रसार्थिनाम् । अबादय इति रसादीति च पादयोः सप्तनवाक्षरत्वेऽपि 'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति'इति वचनाददोषः । स्वभावस्य भगवदधीनत्वमलौकिकमित्यतस्तत्रान्यान्यपि वाक्यानि पठति-- स्वभाव इति। अस्त्वेवं धर्मिभ्यो निष्कृष्य धर्माणामुपादानम् , धर्माणां विशेषणोपादान तु किमर्थमित्यत आह- -धर्मेति । आदिपदेन पुण्यो गन्ध इत्यस्य ग्रहणम् । कामादिषु विशिष्टेष्वेव भगवानुपास्यो न धर्मविरुद्धेष्वशुचिष्विति ज्ञापनाय कामादीनां धर्माणां धर्माविरुद्धत्वादिविशेषणोपादानमित्यर्थः । अत्र प्रमाणमाह—उक्तं चेति । कामं पुरुषार्थम् । कामरागादेः कामरागादिना । अनिच्छद्भिः कामादिकम् गन्धस्य विशेषणोपादाने प्रयोजनान्तरमाह—पुण्य इति । पुण्यगन्धस्यैव भगवतो भोगो न दुर्गन्धस्येति ज्ञापयितु-

रा॥अतस्तत्प्रकारोऽहमेवावस्थितः॥ ८, ९, १०, ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥** १२

**किं विशिष्याभिधीयते : सात्त्विका राजसास्तामसाश्च जगति देहत्वेनेन्द्रियत्वेन भोग्यत्वेन तत्तद्धेतुत्वेन चावस्थिता ये भावाः, तान् सर्वान् मत्त एवोत्पन्नान् विद्धि . ते**

**ता**॥रोपः,मुख्यसभवे वृत्त्यन्तरायोगादिति भावः।**एत** इत्यनेनेश्वरव्यतिरिक्तैरशक्यक्रियत्वमभिप्रेतम्। **स-र्वे**इत्यनेन ब्रह्मरुद्रादिभिरन्यैश्च क्रियमाणानामपि ब्रह्मादिशरीरपरमात्माधीनसृष्टत्वम्'अह कृत्स्नस्य'इति पूर्वोक्तं स्मारितम्।वक्ष्यमाणराजसतामसेभ्यो वैलक्षण्यार्थमुक्तं—**विलक्षणा** इति। 'मत्त एव पृथग्विधाः' इति च वक्ष्यते। एतेन 'न विलक्षणत्वादस्य' इत्यधिकरणार्थोऽपि स्मारित.। **मत्तएवोत्पन्ना** इत्यादि तत्तद्वस्त्वनुरूपं यथासभवं सामानाधिकरण्यहेतुः।गुणजातिशरीरेष्वनुगतस्सामानाधिकरण्यहेतुरपृथक्सिद्धि-रिति प्रदर्शनायोक्तं—**मय्येवावस्थिता** इति ॥ ८-९-१०-११ ॥

'रसोऽहम्'इत्यादेः प्रदर्शनार्थत्वं 'ये च'इत्यस्योपसंहारतां च दर्शयति--**किंविशिष्येति**।**तत्त-द्धेतुत्वेने**ति—समष्टिदशाया अपि सङ्ग्रहः। अय च देहत्वादिविभागोऽनुभूयमानप्रकारानुवादियच्छ-

**प्र-पा** ॥ १ गी. ७ ६ ॥ २ शारी. २-१-४ ॥ ३ गी. ७-८ ॥

**शं॥भूतेषु कामः, यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः, स कामः अस्मि हे भरतर्षभ ॥ ११ ॥**

**आ॥च' 'सर्वस्वभावो नियतस्तेनैव किमुतापरम्' 'नतदस्ति विना यत्स्यान्मया भूतं चराच-रम्' इति च। धर्माविरुद्धः कामरागविवर्जितमित्याद्युपासनार्थम्। उक्तश्च गीताकल्पे— 'धर्माविरुद्धः कामोऽसावुपास्यः काममिच्छता। विहीने कामरागादेर्बले च बलमिच्छता। ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति च' इत्यादि। पुण्यो गन्ध इति भोगापेक्षया। तथा हि श्रुतिः 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' 'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादिका। ऋतं च पुण्यम्। 'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते' इत्य-भिधानात्। 'ऋतं तु मानसो धर्मः सत्यं स्यात्सम्प्रयोगगः' इति च। नच 'अनश्न-न्नन्यो अभिचाकशीति' 'अन्यो निरन्नोऽपि बलेन भूयान्' इत्यादिविरोधि, स्थूलान-**

**ज**॥मत्र विशेषणोपादानमित्यर्थः। ननु दुर्गन्धं भगवाननुभवति, न वा। नेतिपक्षे सार्वज्ञाभावः। आद्ये कथं भोगाभावः। उच्यते—अनुभूयमाना अपि दुर्गन्धादयो न फलहेतव इत्यभिप्रायः। सु-गन्धस्तु सुखहेतुरित्युपपादितम्। शुचिवस्त्वेव भगवतो भोग्यमित्यत्र प्रमाणमाह—**तथाही**ति। अमुमुपासकम्। कुतः ?तस्य देवत्वात्। तथापि कुतः?; न ह वै देवमात्रस्य पुण्यभोगनियमे दे-वोत्तमस्य सुतरां तत्सिद्धिः। 'ऋतम्' इति श्रुतिः कथं प्रकृतोपयोगिनीत्यत आह —**ऋतं चे**ति। कुत इत्यतः—सामान्यविशेषाभिधानादित्याह—**ऋतमि**ति। **प्रयोगगः** -- शब्दजन्यः। तथा च श्रुतावृतशब्दः पुण्यफलस्योपलक्षक इति भावः। स्यादिदं व्याख्यान, यदि भगवतो विषयभोगो युक्तः स्यात्, न चैवम् ; तदङ्गीकारे श्रुत्यादिविरोधात्, 'ऋतं पिबन्तौ' इतिचात एव च्छत्रिन्याये-नोपचरितमित्यत आह —**न चे**ति। कुतो नेत्यत आह —**स्थूले**ति। श्रुत्यादिषु स्थूलस्य जीवभो-

रा॥**इन्द्रादयोऽपि हि परिच्छिन्नभोगाः परिमितकालवर्तिनश्च; ततस्तत्सायुज्यं प्राप्ताः तैस्सह प्रच्यवन्ते । मद्भक्ता अपि तेषामेव कर्मणां मदाराधनरूपतां ज्ञात्वा परिच्छिन्नफलसङ्गं त्यक्त्वा मत्प्रीणनैकप्रयोजनाः मां प्राप्नुवन्ति ; न च पुनर्निवर्तन्ते ; *'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति हि वक्ष्यते ॥ २३ ॥**

**इतरे तु सर्वसमाश्रयणीयत्वाय मम मनुष्यादिष्ववतारमप्यकिञ्चित्करं कुर्वन्तीत्याह—**

ता॥**इन्द्रादयोऽपि ह्री**ति।अस्तु तेषामल्पभोगत्वमस्थिरत्वं च:ततः किं तदुपासकस्य भगवत्प्रसादाधीन फललाभस्येत्यत्राह—**तत** इति । केवलेन्द्रादियाजिनां तत्तदभिलषितं तत्सायुज्यादिकमेव हि भगवान् प्रयच्छति , सायुज्य च समानभोगत्वमेव . तत इन्द्रादिभोगस्य परिमितस्वरूपत्वात्परिमितकालवर्तित्वाच्च तत्समानस्तदुपासकभोगोऽपि तथाविध एव भवेदिति भावः। 'माम्'इति निर्दिष्टभगवत्स्वरूपस्य निरतिशयानन्दमयत्वात्तत्साधर्म्यमागतस्यापि निरतिशयभोगत्वं सिद्धम् । सूत्रं च '[1]भोगमात्रसाम्यलिङ्गाच्च' इति । तन्नित्यत्वाच्च तदुपासकभोगस्यापि नित्यत्वं दर्शयति—**नचपुनर्निवर्तन्त** इति। अत्राभिप्रेतं वक्ष्यमाणवचनेन विशदयति—**मामुपेत्ये**ति । अत्रापि सूत्रम् '[2]अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इति । 'मद्भक्ता यान्ति मामपि' इत्यत्र भगवति फलान्तरार्थिनामपि मोक्षे विश्रमो नारायणार्यैरुक्तः—'[3]तथा देवतान्तरभक्तानाम् अपेक्षितार्थलाभ एव फलम् , भगवद्भक्तानां तु न तावन्मात्रं फलम्, किं तु स्वभावप्रातादनभिसंहितादपि पापपरिक्षयात्सत्त्वाधिक्योन्मीलनेन शुद्धेषु धर्मेषु श्रद्धोत्पत्त्या शनैश्शनैर्ज्ञानवैराग्यादिलाभद्वारेण पूर्वोक्तभक्तिविशेषलाभाच्चिरतरेणापि कालेन भगवत्प्राप्तिर्भविष्यतीति नित्यफलत्वमित्यभिप्रायः'—इति। इदं च शाण्डिल्यसंहितायामपि भागवतापचारसंग्रहे प्रोक्तं—'[4]भगवन्तं समुद्दिश्य तदेकशरणा नराः । कदाचिन्न च हीयन्ते काम्यकर्मरता अपि' इति ॥ २३ ॥

ननु फलान्तरदेवतान्तरवासनया हि त्वद्विषयज्ञानप्रतिबन्ध उक्तः; त्वत्साक्षात्काराभावे हि तदुपपत्तिः; त्वयि कारुण्यादिगुणप्रेरिते सर्वसमाश्रयणीयत्वायावतारवशादशेषजननयनगोचरे कथं त्वत्परित्याग इत्यत्रोत्तरम् —'अव्यक्तव्यक्तिमापन्नम्'इत्यादि इत्यभिप्रायेणाह-**इतरेत्त्वि**ति । इतरे-चतुर्विधसुकृतिभ्यो-

प्र-पा ॥ *गी ८ १६ ॥

१. ब्रह्मसूत्रम्. ४-४-२१॥ 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते' ति मुक्तस्य ब्रह्मानुभवरूप भोगमात्रसाम्यवचनात् लिङ्गाच्च जगद्व्यापारवर्जमिति निश्चीयत इति सूत्रार्थः ॥

२. ब्रह्मसू. ४ ४-२२ ॥ 'सस्वल्वेवं वर्तयन यावदायुषम्ब्रह्मलोक मभिसम्पद्यते नचपुनरावर्तते' इति शब्दात् निवृत्तसमस्ततिरोधानः, आविर्भूतापहतपाप्मत्वादि गुणगण', अनवधिकातिशयानन्दम्परब्रह्मानुभवति नच पुनरावर्तत इति निश्चीयत इति सूत्रार्थः ॥

३.

४. शाण्डिल्यसंहिता ॥

शं॥**तु फलं तेषां तत् भवति अल्पमेधसाम् अल्पप्रज्ञानाम्। देवान् यजन्त इति देवयजः. ते देवान् यान्ति मद्भक्ताः यान्ति मामपि । एवं समाने अपि आयासे मामेव न प्रतिपद्यन्ते अनन्तफलाय. अहो खलु कष्टतरं वर्तते. इत्यनुक्रोशं दर्शयति भगवान् ॥ २३ ॥**

आ॥**भाष्य मोक्षधर्मेषु 'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते' इत्यादेश्च ब्रह्मवैवर्ते ॥**

ज॥**भाष्य**।बहुत्वादनुदाहरणमिति भावः।अनन्तफलत्वं मूलरूपभक्तानामस्तु; अवतारतनुभक्तानामन्तवत्फलाङ्गीकारे को विरोध इत्यत आह—**अवतार** इति । कुत्र चावतारे ॥ २१ ॥ २२ ॥ २३ ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४**

रा॥**सर्वैः कर्मभिराराध्योऽहं सर्वेश्वरो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः परमकारुण्यादाश्रितवात्सल्याच्च सर्वसमाश्रयणीयत्वायाजहत्स्वभाव एव वसुदेवसूनुरवतीर्ण इति ममैवं परं भावमव्ययमनुत्तममजानन्तः प्राकृतराजसूनुसमानमितः पूर्वमनभिव्यक्तमिदानीं कर्मवशाज्जन्मविशेषं प्राप्य व्यक्तिमापन्नं—प्राप्तं मामबुद्धयो मन्यन्ते; अतो मां नाश्रयन्ते ; न कर्मभिराराधयन्ति च ॥ २४ ॥**

ता॥ऽन्ये। 'परम्भावम्'इत्यनेनाभिप्रेतं निरतिशयपरत्वसौलभ्यरूप स्वभावं दर्शयति-**सर्वैः कर्मभिरि**त्यादिना **अवतीर्ण** इत्यन्तेन। **अजहत्स्वभाव** इत्यव्ययशब्दाभिप्रेतोक्तिः।अस्मादुत्तमं नास्तीत्यनुत्तमम्---अनवधिकातिशयमित्यर्थः। अत्र'अव्यक्तं व्यक्तिमापन्नम्'इत्येतत्सामर्थ्यादवतारविषयत्वम्;तत्रापि 'माम्' इत्यस्यौचित्यादवतारविशेषविषयत्वं च सिद्धमित्यभिप्रेत्योक्तं—**वसुदेवसूनुरवतीर्ण** इति,**प्राकृतराजसूनुसमान**मितिच । इदं सर्वावतारोपलक्षणतया विशेषोदाहरणमात्रं वा।'अव्यक्तं व्यक्तिमापन्नम्'इत्यनयोरर्थान्तरभ्रमव्युदासायाह---**प्राकृते**त्यादि। मन्दमतिबोद्धव्यतया निन्द्यमानोऽर्थोऽत्रायमेव भवितुमर्हतीति भावः । इतः पूर्वमनभिव्यक्तत्वमिदानीमवताराद्व्यक्तत्वमपि प्रमाणसिद्धम् ; तत्कथमत्र प्रतिक्षिप्यत इत्यत्रोक्त—**कर्मवशाज्जन्मविशेषं प्राप्ये**ति । उत्सर्गापवादादिनयात्सङ्कोच इति भावः। 'अबुद्धयः'इत्यनेन परमात्मतदवतारादिविषयश्रवणमननादिराहित्यं वैलक्षण्यज्ञापकलिङ्गदर्शनेऽपि तदूहशक्तिवैकल्यं च विवक्षितम्। फलितमाह—**अत** इत्यादि। आश्रयणमत्र प्रपत्तिपूर्वकभजनं, तदभावाच्च तदङ्गतया वर्णाश्रमादिधर्मान्, स्तुतिनमस्कारादींश्च न कुर्वत इत्याह—**नकर्मभिरि**ति ॥ २४ ॥

**प्र·पा** ॥ १. प्रीतिपूर्वक. पा ॥

शं॥**किं निमित्तं मामेव न प्रपद्यन्ते इति? उच्यते—अव्यक्तम् अप्रकाशं व्यक्तिम् आपन्नं प्रकाशं गतं इदानीं मन्यन्ते मां नित्यप्रसिद्धम् ईश्वरमपि सन्तम् अबुद्धयः अविवेकिनः परं भावं परमात्मस्वरूपम् अजानन्तः अविवेकिनः मम अव्ययं व्ययरहितम् अनुत्तमं निर-**

आ॥**को विशेषस्त्वत्वान्येभ्य इत्यत आह—अव्यक्तमिति। कार्यदेहादिवर्जितम्। तद्वानिव प्रतीयस इत्यत आह—व्यक्तिमापन्नमिति । कार्यदेहाद्यापन्नम् । तच्चोक्तं—'सदसतः परम्' 'न तस्य कार्यम्' 'अपाणिपादः' 'आनन्ददेहं पुरुषं मन्यन्ते गौणदैहिकम्'इत्यादौ । भावं याथार्थ्यम् । तथाऽब्रवीत् 'याथातथ्यमजानन्तः' परं तस्य विमोहिनाः' इत्यादि ॥**

ज॥'अव्यक्तम्'इति श्लोकस्य प्रकृतेन साक्षात्सङ्गत्यभावात् तं संगमयितुमाह—**क** इति । अन्येभ्यो ब्रह्मादिभ्यः । येन तान् प्राप्तानामन्तवत्फलत्वेऽपि त्वां प्राप्तानामनन्तफलतेति शङ्काशेषः । कथमनेनोक्तशङ्कापरिहार इत्यत आह—**कार्ये**ति । अनेन यथाश्रुतं पद पठित्वा व्याख्यातम् । वस्तुतस्त्वव्यक्तं मामित्यनुवादादव्यक्तोऽहमिति यत्सिद्ध तस्येदं व्याख्यानमिति ज्ञातव्यम् । इदानीमुत्तरस्य संगतिमाह—**तद्वानि**ति । कार्यदेहादिमान् इवेति मृदूक्तिः वस्तुतस्त्वेवेति । अतो न तद्वर्जित इति शेषः । प्रकृतोपयोगितया व्याचष्टे—**कार्ये**ति । भगवतः कार्यदेहादिवर्जितत्व तद्वत्ताप्रतीतिश्चाज्ञानमूलेत्येतत्कुतः? येन वाक्यद्वयमुक्तार्थे स्यादित्यतोऽर्थद्वये क्रमेण प्रमाणान्याह —**तच्चे**ति । कार्यात्कारणाच्च । इदमपरं रूपं, परं तुरूपमजानन्त इति प्रतीतिनिरासार्थमाह—**भावमि**ति । याथार्थ्यं प्रमाणाव्यभिचरितस्वरूपम् । अत एव परम्, कुतोऽयमर्थः समाख्यानादित्याह—**तथे**ति । यद्यप्ययमर्थस्त्रिभिरित्यत्रोक्तस्तथापि प्रसङ्गात् पुनरुक्त इत्यदोषः ॥ २४ ॥

रा॥कुत एवन्न प्रकाश्यत इत्यत्राह—

**नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥** २५

क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्यमायया समावृतोऽहं न सर्वस्य प्रकाशः । मयि मनुष्यत्वादिसंस्थानदर्शनमात्रेण मूढोऽयं लोको मामतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसमुपलभ्यमानमप्यजमव्ययं निखिलजगदेककारणं सर्वेश्वरं मां सर्वसमाश्रयणीयत्वाय मनुष्यत्वसंस्थानमास्थितं नाभिजानाति ॥ २५ ॥

ता॥यदि त्वमप्रतिहतसङ्कल्पस्साभिसंधिक सर्वसमाश्रयणीयत्वायावतीर्णः,तर्हि कथं तत्फलासिद्धिरित्यभिप्रायेण शङ्कते—**कुत**इति । मायाशब्दस्तावद्विचित्रसृष्टिकरार्थवाचितया प्रागेव प्रपञ्चितः , त्रिगुणात्मिकया मायया समावृतत्वं तु परावस्थावतारावस्थयोस्साधारणम् , असाधारणश्चावरणहेतुरत्र सम्भवे वक्तुमुचितः; सङ्कल्पादिश्च साधारणः; योगशब्दोऽपि सम्बन्धे प्रचुरप्रयोगत्वात्तदर्थः प्राप्तः, तत्संबन्धी चार्थसिद्धः, सचात्रौचित्यात्प्रदेशान्तरेषु प्रसिद्धत्वाच्च मनुष्यादिसंस्थानवेषभाषादिरेव, तेनैवेन्द्रजालमायाव्यवच्छेदोऽपि सिद्ध इत्यभिप्रायेणाह—**मनुष्यत्वादी**ति । प्रकाशः परस्वभावेनेति शेषः । तर्हि तवैवायं दोष इत्यत्रोत्तर—**मूढोऽय**मित्यादि। अधिगम्यत्वायापादितं मनुष्यत्वादिकं दुर्मतीनां परित्यागहेतुरभूत्; नच पारमेश्वरस्वभावो मया सर्वस्तिरोहितः, लोकोत्तरकर्मतेजःप्रमृतीनां प्रकाशनात् । किंत्वयं मन्दो लोको यत्किञ्चित्साधर्म्याद्घनावृते मयूखमालिनि खद्योतभावमवगच्छतीत्यभिप्रायेणाह—**मयी**ति । मूढः-मयि मनुष्यत्वादिभ्रमविशिष्ट इत्यर्थः। 'माम्'इति तदानीन्तनोपलभ्यमानाकारनिर्देशसामर्थ्यात्प्रदेशान्तरोक्तत्वाच्च-**अतिवाय्विन्द्रकर्माण**मित्याद्युक्तम् । परावस्थस्याज्ञानं सर्वेषां प्राप्तमेव हि; इहतु 'परं भावमजानन्तो ममाव्ययमनुत्तमम्' इति मनुष्यत्वे परत्वस्याज्ञानमुच्यते; तत्र प्रतिषेध्यस्य ज्ञानस्य प्रसङ्गार्थं लिङ्गोक्तिरियम् । निरतिशयदीप्तियुक्तत्वमपि जगत्कारणपरमपुरुषासाधारणधर्मतया वेदान्तषु निर्णीतम्। अतिवाय्विन्द्रकर्मत्वं च सर्वनियन्तृत्वलिङ्गम्।'अजम्'इत्यनेनफलितमाह-**निखिलजगदेककारण**मिति। 'अव्ययम्'इत्यनेन लब्धमाह-**सर्वेश्वर**मिति। स्वरूपतो धर्मतश्च निर्विकारत्वं हि तस्याव्ययत्वम् ; एतेन 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्'इति प्रागुक्तसूचनं वा। अजमव्ययं नाभिजानाति, किंतु पुरुषान्तरवत्कर्माधीनजन्मानं ज्ञानसङ्कोचादिमन्तं जानातीति शेषः ॥ २५ ॥

शं॥तिशयं मदीयं भावम् अजानन्तः मन्यन्ते इत्यर्थः ॥ २४ ॥

तदज्ञानं किंनिमित्तम् ? इति उच्यते—न अहं प्रकाशः सर्वस्य लोकस्य, केषां चिदेव मद्भक्तानां प्रकाशः अहम् इत्यभिप्रायः । योगमायासमावृतः ; योगः गुणानां युक्तिः घटनं, सैव माया योगमाया । अथवा, भगवतः चित्तसमाधानं योगः, तत्कृता माया योगमाया ; तया योगमायया समावृतः - संछन्नः इत्यर्थः । अत एव मूढो लोकः अयं

आ॥अज्ञानं च मदिच्छयेत्याह—नाहमिति । योगेन सामर्थ्योपायेन। माययाच । मयैव

जा॥तथाऽपि 'नाहं प्रकाशः' इति पुनरुक्तिरित्यतस्तात्पर्यमाह-**अज्ञानं चे**ति । येनाज्ञानेन मामन्यथा मन्यन्ते, तदज्ञानं च मदिच्छाधीनमेव, न स्वतन्त्रम् ; येन तया निन्दया मम खेदः स्यादिति भावः। योग एव मायेति व्याख्यानमसदिति भावेनाह—**योगेने**ति । सामर्थ्यमेवोपायः । 'युज्यते येन योगोऽसावुपायः शक्तिरेव च' इति वचनाद्योगशब्दस्योभयार्थत्वेन द्वन्द्वैकवद्भावः किं न स्यादिति चेत्—न, मायया चेत्यस्य वैयर्थ्यापत्तेः ; तस्या अप्युपायविशेषत्वात्। अत एवोपायार्थत्वं गृहीत्वा **सामर्थ्ये**-

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥** २६

रा॥अतीतानि वर्तमानान्यनागतानि च सर्वाणि भूतान्यहं वेद - जानामि। मां तु वेद न कश्चन—मयानुसंधीयमानेषु कालत्रयवर्तिषु भूतेषु मामेवंविधं वासुदेवं सर्वसमाश्रयणीयत्वायावतीर्णं विदित्वा मामेव समाश्रयन्न कश्चिदुपलभ्यत इत्यर्थः । अतो ज्ञानी सुदुर्लभ एव ॥ २६ ॥

तथा हि—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥** २७

इच्छाद्वेषाभ्यां समुत्थितेन शीतोष्णादिद्वन्द्वाख्येन मोहेन सर्वभूतानि सर्गे - जन्म-

---

ता॥अयं लोको नाभिजानातीत्येतावता वर्तमानमात्रपरत्वं नाशङ्कनीयं ; किं तु त्रैकाल्यवर्तीन्यपि भूतानि न जानन्तीत्युच्यते —'वेदाहम्' इत्यादिना । अत्र 'अतीतानि' इति पृथङ्निर्दिष्टत्वात् भूतानि इत्येतत्क्षेत्रज्ञपरम्। स्वस्य सर्वज्ञत्वमत्र किमर्थमुच्यत इत्यत्राह—मयेति। तद्वेदनफलं हि तदेकसमाश्रयणमिति दर्शयितुं—मामेव समाश्रयन्नित्युक्तम् । परमप्रकृतेन सङ्गमयति —अत इति ॥२६॥

एवं ज्ञानिनो दौर्लभ्याय कालत्रयवर्तिसर्वभूतसाधारणं भगवदज्ञानकारणम् 'इच्छा' इति श्लोकेनोच्यत इत्यभिप्रायेणाह—तथाहीति। पदार्थमन्वयार्थं च दर्शयति—इच्छाद्वेषाभ्यामिति।इच्छा-

---

शं॥न अभिजानाति माम् अजम् अव्ययम् ॥ २५ ॥

यया योगमायया समावृतं मां लोकः नाभिजानाति, न असौ योगमाया मदीया सती मम ईश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति, यथा अन्यस्यापि मायाविनः माया तद्वत्। यतः एवम् अतः –अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि, तथा वर्तमानानि च अर्जुन भविष्याणि च भूतानि वेद अहम् । मां तु वेद न कश्चन मद्भक्तं मच्छरणम् एकं मुक्त्वा ; मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥

केन पुनः मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमनानि सर्वभूतानि मां

---

आ॥मूढो नाभिजानाति । तथाहि पाद्मे 'आत्मनः प्रावृतिश्चैव लोकचित्तस्य बन्धनम् । स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः' इति च ॥ २५ ॥

न मां माया बध्नातीत्याह—वेदेति । न कश्चन-अतिसमर्थोऽपि स्वसामर्थ्यात् ॥२६॥

---

ज॥ति तद्व्याख्यानं कृतम्।इदं तात्पर्यं श्लोके न प्रतीयत इत्यत आह—मयैवेति।उक्तार्थस्थापनाय पुराणसम्मतिमाह—तथेति ॥ २५ ॥

अकस्मात्स्वस्य सार्वज्ञं किमित्युच्यत इत्यत आह—नेति । यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत्तवापि भूतविषये ज्ञानं न स्यादिति शङ्कानिरासार्थमिति शेषः।तथाऽपि'मां तु वेद न कश्चन' इति पुनरुक्तमित्यत आह—न कश्चनेति। असमर्थो लोको न जानातु,अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शङ्कानिरासार्थमेतदुक्तम् । कश्चनेति विशेषणादिति भावः । तर्हि 'ज्ञानी च भरतर्षभ' इत्यादिविरोध इत्यत उक्तम्—स्वेति ॥ २६ ॥

इच्छाद्वेषौ द्वन्द्वम्, तजन्यो मोहो द्वन्द्वमोहः, तेनेति कश्चित्; तदसदिति भावेनाह—द्वन्द्वेति।

रा॥काल एव संमोहं यान्ति : एतदुक्तं भवति—गुणमयेषु सुखदुःखादिद्वन्द्वेषु पूर्वपूर्वजन्मनि यद्विषयाविच्छाद्वेषावभ्यस्तौ;तद्वासनया पुनरपि जन्मकाल एव तदेव द्वन्द्वाख्यमिच्छाद्वेषविषयत्वेन समुत्थितं भूतानां मोहनं भवति; तेन मोहेन सर्वभूतानि सम्मोहं यान्ति , तद्विषयेच्छाद्वेषस्वभावानि भवन्ति, न मत्संश्लेषवियोगसुखदुःखस्वभावानि।

ता॥द्वेषाभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थः । ननु जन्मकाल एवेच्छाद्वेषौ कारणाभावान्न संभवतः, संभवन्तौ वा भगवद्विषयौ किं न स्याताम्; नचेच्छाद्वेषमात्रेण शीतोष्णादेरुत्थानं, तस्य च हेमन्तधर्मादिस्वकारणाधीनत्वात् । द्वन्द्वस्य च कथं मोहशब्दार्थता । मोहेन मोह यान्तीत्यात्माश्रयादिप्रसङ्गः । इच्छाद्वेषावेव द्वन्द्वशब्देन गृह्येते , अतो द्वन्द्वनिमित्तो मोहो द्वन्द्वमोह इत्यादि परव्याख्यानं च पुनरुक्त्यादिदुस्स्थम् । एतेन 'सुखं मे भूयात्' 'दुःख मा भूत्' इत्यभिनिवेशो द्वन्द्वमोह इत्यपि मन्दमित्यादिकमशङ्क्याह—एतदुक्तं भवतीति । जन्मान्तरवासनाख्यं कारणमस्ति : वासनायाश्च स्वकारणस्वभावविषयत्वादिच्छाद्वेषयोर्न भगवत्संश्लेषविश्लेषविषयत्वप्रसङ्गः । उत्थान चेच्छाद्वेषविषयतया स्फुरणमेव । मोहशब्दस्य करणे व्युत्पत्त्या द्वन्द्वे प्रयोगः। मोहकारणस्य मोहजनने च नात्माश्रयादिरिति भावः । अभोग्ये भोग्यताबुद्धिरद्वेष्ये च द्वेष्यताबुद्धिरिह समोह इत्यभिप्रायेणाह—तद्विषयेति । एवंविधसंमोहवशादिच्छाद्वेषयोस्साक्षात्प्राप्तविषयपरित्यागं दर्शयति - नमत्संश्लेषेति । उचितविषये-

शां॥न विन्दन्ति इत्यपेक्षायाम् इदम् आह—इच्छाद्वेषसमुत्थेन-इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थः, तेन इच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायाम् इदम् आह —द्वन्द्वमोहेन इति । द्वन्द्वनिमित्तः मोहः द्वन्द्वमोहः । तावेव इच्छाद्वेषौ शीतोष्णवत् परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः सम्बध्यमानौ द्वन्द्वशब्देन अभिधीयेते । तत्र यदा इच्छाद्वेषौ सुखदुःखतद्धेतुसम्प्राप्तया लब्धात्मकौ भवतः, तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः । न हि इच्छाद्वेषदोषपरवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानम् उत्पद्यते बहिरपि; किमु वक्तव्यं ताभ्याम् आविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यते इति । अतः तेन इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन, भारत भरतान्वयज, सर्वभूतानि सम्मोहितानि सन्ति सम्मोहं सम्मूढतां सर्गे जन्मनि—उत्पत्तिकाले इत्येतत् , यान्ति गच्छन्ति हे परन्तप । मोहवशान्येव सर्वभूतानि जायमानानि

आ॥द्वन्द्वमोहेन· सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोर्न हि किञ्चिज्ज्ञातुं शक्यम् । कारणान्तरमेतत् । सर्गे सर्गकाले आरभ्यैव । शरीरे हि सतीच्छादयः ।

ज॥अन्यथा इच्छाद्वेषसमुत्थेन मोहेनेत्येव स्यादिति भावः।व्याख्यानव्याख्येयभावश्चागतिका गतिः। द्वन्द्वमोहस्येच्छाद्वेषसमुत्थत्वं कथमित्यत आह-इच्छेति।किञ्चित्सुखादिकं हेयत्वादिनेति शेषः। ननु 'नाहं प्रकाशः' इति भगवतो 'दैवी ह्येषा' इति तदधीनायाः गुणमय्या मायायाश्च मोहकत्वमुक्तं,तत्कथ भगवद्विषयसंमोहस्येच्छाद्वेषसमुत्थो द्वन्द्वमोहः कारणमुच्यत इत्यत आह-- कारणान्तरमिति । इच्छाद्वेषसमुत्थद्वन्द्वमोहलक्षणमेतद्भगवद्विषयस्य संमोहस्यावान्तरकारणमुच्यत इत्यर्थः । कुत एतदित्यतः तत्सूचकं पदं पठति—सर्गइति।सर्गः क्रिया कथं तस्या अधिकरणत्वमित्यतो लक्षणामाश्रित्य व्याचष्टे-—सर्गेति । तदुत्तरकालं किं तत्र कारणमित्यतः पुनर्लक्षणाश्रयणेनाह—आरभ्येति । सर्गकालमिति सम्बन्धः । कथमनेनावान्तरकारणत्वं ज्ञायत इत्यतः सावधारणमेतदित्युक्तमेवेति उक्तमुपपादयन्नाह—शरीर इति ।

रा॥ज्ञानी तु मत्संश्लेषवियोगैकसुखदुःखस्वभावः;न तत्स्वभावं किमपि भूतं जायते-इति॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८

येषां त्वनेकजन्मार्जितेनोत्कृष्टपुण्यसंचयेन गुणमयद्वन्द्वेच्छाद्वेषहेतुभूतं मदौन्मुख्य-

ता॥च्छाद्वेषशालिनं सुदुर्लभं ज्ञानिन तद्व्यतिरेकप्रकाशनाय दर्शयति ज्ञानीत्विति। 'ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः । तत्संश्लेपवियोगैकसुखदुःखस्तदेकधीः' इति सङ्ग्रहः । तद्व्यतिरेकमेव भूतानां जन्मसिद्धं दर्शयति—नतदिति ॥ २७ ॥

यद्येवं सर्वभूतानि समोह यान्ति; तर्हि भगवदुपासनं कदाचिदपि कस्यचिदपि न स्यात्; अतः 'चतुर्विधा भजन्ते माम्' इत्यादिनोक्त चानुपपन्नं स्यादित्यत्रोत्तर—येषांत्वित्यादि । 'पुण्यकर्मणाम्' इत्येतत्पापनिवृत्तिहेतुपरम्। तथा च श्रुतिः 'धर्मेण पापमपनुदति'इति । जनशब्दश्च जननवति वर्तमानत्वात् पुण्यप्रचयहेतुभूतानेकजन्मसूचनपर इत्यभिप्रायेणोक्तम्—अनेकजन्मार्जितेनोत्कृष्टपुण्यसञ्चये-नेति। भगवज्ज्ञानप्रतिबन्धकपापनिवर्तकत्वाच्चोत्कृष्टत्व फलितम्। गुणमयशब्देन सुखदुःखरूपभगवत्संश्ले-

प्र-पा॥१. गी. सं २९ ॥

२ तैत्तिरी-नारायणे-५०-अनु।। धर्मेणपापमपनुदति' इति । अत्र धर्मशब्देन अनभिसंहितफलेन क्रियमाणं यज्ञादिकर्मोच्यते । ननु अयन्धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात्; अनभिसंहितफलधर्मविषय इति कुतो निर्णीयते, उच्यते—'यज्ञेनदानेन तपसानाशकेन' 'शान्तोदान्त उपरतस्तितिक्षु' 'कषायेकर्मभिः पक्के ततोज्ञानम्प्रवर्तते' 'यज्ञदानतप.कर्मनत्याज्यम्' इत्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्ताना यज्ञदानतपःशमादीनामत्र श्रूयमाणत्वात् 'विज्ञानविदानन्दो ब्रह्मयोनि.' इत्यादिनास्य प्रकरणस्य ब्रह्मविद्याविषयत्वाच्चायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते। अत्र यज्ञदानादिपर्यायेषु'दानेनद्विषन्तो मित्रा भवन्ति'इत्यादिना सासारिकफलकीर्तनम्'अन्नवानन्नादो भवति'इत्यादिवत्अर्थवेदनानुगुणानुपङ्गिकफलविषयम्मन्तव्यम्,'भूयानमृत्युमुपयाहिविद्वान्' इति प्रधानफलश्रवणात् । किञ्च यद्यपीदं वाक्य न मुमुक्षुमात्रविषयम्; तथापि अमुमुक्षुमात्रविषयञ्च न भवेत्,प्रवृत्तिनिमित्तसाधारण्यात्। नहि काम्यफलत्वं धर्मशब्दार्थः; अलौकिकेष्टासाधारणसाधनेनालौकिकानिष्टासाधारणकारणमपनुदेदिति ह्यर्थस्स्यात् । ततश्च मुमुक्षु प्रति काम्यकर्मणोऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च पक्षधर्मताबलात् अनभिसंहितफलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्त स्यात् । सूत्रितञ्च 'अनभिभवञ्च दर्शयति' ति ॥

शं॥जायन्ते इत्यभिप्रायः। यतः एवम् अतः तेन द्वन्द्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि सम्मोहितानि माम् आत्मभूतं न जानन्ति; अत एव आत्मभावेन मां न भजन्ते ॥ २७ ॥

के पुनः अनेन द्वन्द्वमोहेन निर्मुक्तास्सन्तः त्वां विदित्वा यथाशास्त्रम् आत्मभावेन भजन्ते इत्यपेक्षितम् अर्थं दर्शयितुम् आह—येषां तु पुनः अन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म सत्त्वशुद्धिकारणं विद्यते येषां ते पुण्यकर्माणः ते-

आ ॥ पूर्वं त्वज्ञानमात्रम् ॥ २७ ॥

ज॥आदिपदेन द्वेषस्य द्वन्द्वानां च ग्रहणम्।अतः सर्गकालमारभ्यैवैतत्कारणमिति सिद्धम्। एतावता कथमवान्तरकारणत्वसिद्धिरित्यत आह—पूर्वं त्विति । सर्गात्पूर्वं त्विच्छादिना विना ज्ञानमस्त्येव भगवदिच्छाद्यधीनमत एतदवान्तरं कारणमिति सिद्धमित्यर्थः ॥ २७ ॥

रा॥विरोधि चानादिकालप्रवृत्तं पापमन्तगतं—क्षीणं ; ते पूर्वोक्तेन सुकृततारतम्येन मां शरणमनुप्रपद्य गुणमयान्मोहाद्विनिर्मुक्ताः जरामरणमोक्षाय, महते चैश्वर्याय, मत्प्राप्तये, च दृढव्रताः - दृढसङ्कल्पाः मामेव भजन्ते ॥ २८ ॥

अत्र त्रयाणां भगवन्तं भजमानानां ज्ञातव्यविशेषानुपादेयांश्च प्रस्तौति—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९

जरामरणमोक्षाय-प्रकृतिवियुक्तात्मस्वरूपदर्शनाय मामाश्रित्य ये यतन्ते ; ते तद्ब्रह्म

ता॥षविश्लेषाख्यद्वन्द्वव्यवच्छेदः।'द्वन्द्वमोहविनिर्मुक्ता मां भजन्ते' इति फलद्वयदर्शनात्प्रतिबन्धकेऽपि पापे द्वन्द्वेच्छाद्वेषहेतुभूत. मदौन्मुख्यविरोधि चेति भेदो दर्शितः। अनेकजन्मार्जितोत्कृष्टपुण्यनाश्यत्वायोक्तम् —**अनादिकालप्रवृत्तमि**ति । उपासनारम्भे पापस्य द्वन्द्वमोहस्य च निश्शेषविनष्टत्वाभावादन्तगतशब्देनाल्पावशिष्टत्व विवक्षितमित्यभिप्रयेणोक्तं—**क्षीणमि**ति। १'मामेव ये प्रपद्यन्ते' २'चतुर्विधा भजन्ते माम्' इत्यादिकं च प्रागुक्तमनन्तराभिधीयमानं च ३'जरामरणमोक्षाय इत्यादिकमनुसन्दधान आह —**पूर्वोक्तेने**ति । नचात्र द्वन्द्वमोहविनिर्मुक्तत्ववचनादैश्वर्यार्थिनां प्रसङ्गानुपपत्तिः, तेषामपि क्षुद्रतरद्वन्द्वनिरोधस्यावश्यापेक्षितत्वात् । व्रतशब्दस्सङ्कल्पविशेषेषु मुख्यः, तत्सम्बन्धादेव क्रियाविशेषेषु तत्प्रयोग इत्यभिप्रायेण— **दृढसङ्कल्पा** इत्युक्तम्। दृढव्रतशब्देन देवतान्तरपरित्यागादिनियमोऽपि यथा प्रमाणं सूचित इत्यभिप्रायेण—**मामेव भजन्त** इत्युक्तम् । 'मां भजन्ते' इत्यनेनैव भजनाङ्गव्रतादेरपि सिद्धत्वात् **मत्प्राप्तये** चेत्यन्तेन दृढसङ्कल्पत्व स्वाभिमतफलविषयतया व्याख्यातम् ॥ २८ ॥

अथाष्टमाध्याये प्रपञ्चयिष्यमाणस्यार्थस्य प्रस्तावश्श्लोकद्वयेन क्रियत इत्याह—**अत्रे**ति । 'जरामरणमोक्षाय'इत्येतावतो निर्देशात्—**प्रकृतिवियुक्तात्मस्वरूपदर्शनाये**त्युक्तम्।यतनमत्राराधनरूपं विव-

प्र-पा ॥ १. गी ७-१४ ॥ २. गी. ७-१६ ॥ ३. गी ७-५९ ॥

शं॥षां पुण्यकर्मणां,ते द्वन्द्वमोहविनिर्मुक्ताः यथोक्तेन द्वन्द्वमोहेन निर्मुक्ताः भजन्ते मां परमात्मानं दृढव्रताः । 'एवमेव परमार्थतत्त्वं,नान्यथा'इत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञानाः दृढव्रताः उच्यन्ते ॥ २८ ॥

ते किमर्थं भजन्ते इति ? उच्यते—जरामरणमोक्षाय जरामरणयोः मोक्षार्थं मां परमेश्वरम् आश्रित्य मत्समाहितचित्तास्सन्तः यतन्ति प्रयतन्ते ये ते यत् ब्रह्म परं तत्

आ॥विपरीताश्च केचित्सन्तीत्याह—येषामिति ॥ २८ ॥

'जरामरणमोक्षाय'इत्यन्यकामव्यावृत्त्यर्थं मोक्षे सक्तिस्तुत्यर्थं वा;न विधिः, 'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्'इति इतरस्तुतेर्नारदीये । 'नात्यन्तिकम्'इति च । 'दे-

ज॥'चतुर्विधाः' इत्यनेन गतार्थमुत्तरं वाक्यमित्यत आह—**विपरीताश्चे**ति । त्वत्प्रपत्तेर्मायातरणाकारणत्वात्स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं निर्णय इत्यतस्तदुक्तम् । सर्वभूतानि संमोहं यान्ति चेत् कुतो मुक्तिमार्ग इत्याशङ्क्यात्र द्वन्द्वमोहरहिताश्च केचित्सन्तीत्याहेत्यर्थः ॥ २८ ॥

मां भजन्त इत्युक्तानुवादेन फलमुच्यते; तत्र'जरामरणमोक्षाय' इत्यनुक्तस्यानुवादासम्भवादप्राप्तत्वेन विध्यर्थं मद्भजनं च जरामरणमोक्षोद्देशेन कार्यमित्येवं प्रतीतिनिरासार्थमाह—**जरे**ति । लक्षणया स्वर्गादिकामनिर्वृत्त्यर्थोऽस्येति तथोक्तम् । मोक्षविषयासक्तिरन्यसक्तेः प्रशस्तेति तत्स्तुत्यर्थं वा सर्वथा

रा ॥ विदुः, अध्यात्मं च कृत्स्नं विदुः, कर्म चाखिलं विदुः ॥ २९ ॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥** ३०

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्याया योगशास्त्रे श्रीकृष्णार्जुनसवादे विज्ञानयोगो नाम सप्तमोऽध्याय ॥ ७ ॥

---

अत्र य इति पुनर्निर्देशात्पूर्वनिर्दिष्टेभ्योऽन्ये अधिकारिणो ज्ञायन्ते, साधिभूतं साधिदैवं माम् ऐश्वर्यार्थिनो ये विदुः—इत्येतदनुवादसरूपमप्यप्राप्तार्थत्वाद्विधायकमेव ; तथा साधियज्ञमित्यपि त्रयाणामधिकारिणामविशेषेण विधीयते अर्थस्वाभाव्यात्। त्रया-

ता॥क्षितम्।एषा ब्रह्माध्यात्मकर्मादीनां सप्ताना प्रश्नपूर्वकं प्रपञ्चो भविष्यति। अत्र 'विदुः'इति सिद्धवन्निर्देशो वर्तमानापदेशोऽपि विध्यर्थः ॥ २९ ॥

'साधिभूत' इति श्लोकस्यैश्वर्यार्थिविषयत्वं वक्तुमधिकारिणो भेदमात्रज्ञापक तावद्दर्शयति—**अत्रेति** । पूर्वाधिकारिविपयत्वे 'साधियज्ञ च ते विदुः' इति हि वक्तव्यम्; नचैवं शिष्टाः पठन्ति । नचात्र यच्छब्दावृत्तेः प्रयोजनमस्तीति भावः । प्रश्नोत्तरवशाच्चाधिकारिभेदस्सेत्स्यति । एवं सामान्येन ज्ञातमधिकारिभेदमधिभूतादिसामर्थ्याद्विशिनष्टि—**ऐश्वर्यार्थिन** इति। १'जरामरणमोक्षाय'इत्यादाविव अत्रापि यच्छब्दवशादनुवादत्व प्रतीतमिति तत्प्रतिक्षिपति—**इत्येतदि**त्यादिना । 'यदाग्नेयोऽष्टाकपालः' इत्यादिवदिति भावः । अस्य च विधित्वं प्रश्नादिवशाच्च फलिष्यति । नह्यवगते प्रश्नाद्यवकाशः। 'साधियज्ञम्' इत्यस्यैकस्मिन्नधिकारिणि निर्दिष्टस्याप्यर्थस्वाभाव्यात्त्रिष्वप्यन्वयं दर्शयति—**तथेति** । **अर्थस्वाभाव्यादिति** - सर्वाधिकारिसाधारणतया प्रमाणसिद्धयज्ञाख्यपदार्थस्वाभाव्यादित्यर्थः । एतदेव दर्शयति—**त्रयाणां ह्रीति** । अन्यथा 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इत्यादिक्रमेण कर्मान-

प्र-पा ॥ १ गीं ७-२९ ॥
२ शतपथ २-५-१-११ ॥
३. दक्षस्मृतौ. २-अ, २२ ॥ सन्ध्याहीनो. . सु । यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत् ॥
४. अकर्मण्यत्वादिप्रस पा ॥

---

श॥विदुः कृत्स्नं समस्तम्, अध्यात्मं प्रत्यगात्मविषयं वस्तु तत् विदुः, कर्म च अखिलं समस्तं विदुः ॥ २९ ॥

साधिभूताधिदैवम् अधिभूतं च अधिदैवं च अधिभूताधिदैवं, सह अधिभूताधिदैवेन वर्तते इति साधिभूताधिदैवं च मां ये विदुः, साधियज्ञं च सह अधियज्ञेन सा-

---

आ॥वानां गुणलिङ्गानामानुश्राविककर्मणाम।सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या । अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं निगीर्णमनलो यथा'इति लक्षणाच्च भागवते। आह च 'सर्वे वेदास्तु देवार्थाः देवा नारायणार्थकाः । नारायणस्तु

ज॥न विधिः । कुत इत्यत आह—**मुमुक्षोरि**ति। इतरस्य-अमुमुक्षोर्भक्तस्य। न हि प्रशस्ते सत्यप्रशस्तं नियन्तुं युक्तमिति भावः । इतिचेतरस्तुतेरिति सम्बन्धः। प्रकारभेदात्पृथगुक्तिः। इतश्च न मोक्षकामविधिरित्याह—**देवानामि**ति । सत्त्व एवैकमनसः शुद्धसात्त्विकस्य पुंसो देवानाम्-इन्द्रियाणाम् । गुणलिङ्गानां गन्धाद्युपलब्धिलक्षणगुणानुमेयानाम् । तथा वचनादिक्रियानुमेयानां च । आनुश्राविककर्मणाम्—वैदिकानुष्ठाने कारणानाम् । या भगवत्यनिमित्ता—फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहरूपस्वभावनिर्वृत्ता वृत्तिः ; सा भक्तिः । सा च सकामभक्त्या जातायाः सिद्धेर्मुक्तेरपि

रा॥णां हि नित्यनैमित्तिकरूपमहायज्ञाद्यनुष्ठानमवर्जनीयम्। ते च प्रयाणकालेऽपि स्वप्राप्यानुगुणं मां विदुः।तेचेति चकारात्पूर्वे जरामरणमोक्षाय यतमानाश्च प्रयाणकाले विदुरिति समुच्चीयन्ते ; अनेन ज्ञानिनोऽप्यर्थस्वाभाव्यात्साधियज्ञं मां विदुः; प्रयाणकालेऽपि स्वप्राप्यानुगुणं मां विदुरित्युक्तं भवति ॥ ३० ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

श्रीमते रामानुजाय नमः.

ता॥ईत्यादिप्रसङ्ग इत्यभिप्रायेणाह—**अवर्जनीय**मिति।अपि चेत्येकान्वयार्थत्वे प्रयोजनाभावात् पृथक्त्वे सप्रयोजनतया अन्वयसम्भवाच्च विभज्याह—**तेचे**ति । अन्तिमप्रत्ययस्यैव वक्ष्यमाणं विषयविशेषेण प्राप्यानुगुणाकारत्व युक्तचेतश्शब्देन विवक्षितमित्याह—**स्वप्राप्यानुगुण**मिति । चकारस्य पृथगन्वयेन लब्धमाह—**तेचे**ति । **चकारा**दिति—यद्वृत्तप्रतियोगिकत्वात्तद्वृत्तमैश्वर्यार्थिविषयमेव । चकारात्तु पूर्वश्लोकोक्तानां समुच्चयः । तेषामपि ह्यन्तिमप्रत्यये विशेषो वक्ष्यत इति भावः।'त्रयाणाम्'इत्यादिकमयुक्तं, ज्ञानिनामत्र प्रसङ्गाभावादित्यत्राह—**अनेने**ति । यज्ञान्तिमप्रत्ययमात्रयोरधिकारित्रयसाधारण्यसिद्धेरिति भावः ॥ ३० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्गीताभाष्यटीकायां सप्तमोऽध्यायः ॥ ७ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

शं॥धियज्ञं ये विदुः, प्रयाणकाले मरणकाले अपि च मां ते विदुः युक्तचेतसः समाहितचित्ता इति ॥ ३० ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

---

आ॥मोक्षार्थो मोक्षो नान्यार्थ इष्यते॥ एवं मध्यमभक्तानामेकान्तानां न कस्यचित्।अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्' इति गीताकल्पे। त एव च विदुः, 'यमेवैष वृणुते' इति श्रुतेः ॥ २९, ३० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥

ज॥गरीयसी; या सा कामनाभावेऽपि कोशं लिङ्गशरीरं स्वभावादेव जरयत्यनलवदित्यनिमित्तत्वस्य भक्तिलक्षणत्वेनोक्तत्वाच्चेत्यर्थः । न हि लक्षणवैकल्यं विधेयमिति भावः । आह च स्पष्टमेतदन्यत्र । देवार्थाः—देवप्रतिपत्त्यर्थाः। प्रतिपन्ना देवा नारायणज्ञानार्थाः । मोक्षार्थे ज्ञातव्यः । नान्यार्थः। परः पुरुषार्थः । मध्यमभक्तानां चित्तवृत्तिः । एकान्तानां - नियतानामुत्तमभक्तानां, न कस्य चिदर्थे - स एव परमपुरुषार्थः । ननु 'मामेव ये प्रपद्यन्ते' इत्युक्तत्वात् 'ते ब्रह्म तद्विदुः' इति पुनरुक्तमित्यत आह—**तएवे**ति । अन्योपायनिवृत्त्यर्थमेतदित्यर्थः । स्यादेवं व्याख्यानम् , यदि भगवद्भजनेन विना ज्ञानस्यान्योपायाभावः प्रमितः स्यात् , स एव कुत इत्यत आह—**यमि**ति । भक्तमेव च वृणुत इति च प्रसिद्धम् ॥ २९ ॥ ३० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तमोऽध्यायः ॥ ७ ॥

श्रीः

श्रियै नमः.

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

स्वयाथात्म्यं प्रकृत्यास्य तिरोधिश्शरणागतिः ।
भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते ॥ ११ ॥

श्रीमद्यामुनमुनये नमः

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

तत्र भाष्यं—'सप्तमे तावदुपास्यभूतपरमपुरुषस्वरूपयाथात्म्यं, प्रकृत्यातत्तिरोधानं, तन्निवृत्तये भगवत्प्रपत्तिः,उपासकविधाभेदः, ज्ञानिनश्श्रैष्ठ्यचोच्यते'इति। तत्र प्रकृतिशब्देन 'मम माया दुरत्यया' इति मायाशब्दो व्याख्यातः । 'गुणमयी'इति विशेषणात्सैव हि विवक्षितेति गम्यते; श्रुतावपि 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः'इति प्रस्तुतयोर्मायातद्वतोः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति स्वयमेव विवरणाच्च । अतो विचित्रसृष्ट्युपकरणवस्तुत्वात् , प्रकृताविह मायाशब्दप्रयोग इति भावः । अष्टमारम्भसङ्गतौ चैतच्छ्लोकार्थः स्पष्टमभिहितः—'सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यत्वं, निखिलचेतनाचेतनवस्तुशेषित्वं, कारणत्वम् , आधारत्वं, सर्वशरीरितया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वं, सर्वनियन्तृत्वं, सर्वैश्च कल्याणगुणगणैस्तस्यैव परतरत्वं,सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानमत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निवर्तनं, सुकृततारतम्येन प्रतिपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षया च उपासकभेदं, भगवन्तं प्रेप्सोर्नित्ययुक्ततया एकभक्तितया च अत्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यं, दुर्लभत्वं च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत्' इति ॥ ११ ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

प्र-पा ॥ १. गी. भा. ७. अव. पु. ४१८ ॥ २. गी. ७-१४ ॥ ३. श्वेता. ४-९ ॥ ४. श्वेता. ४-१० ॥ ५. गी. भा. ८. अव ॥



## अष्टमोऽध्यायः.



अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम।
अधिभूतं च किं प्रोक्तम् अधिदैवं किमुच्यते ॥ १

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २

रा॥सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यत्वं, निखिलचेतनाचेतनवस्तुशेषित्वं, कारणत्वम्, आधारत्वम्, सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वं, सर्वनियन्तृत्वं,

ता॥सङ्गतिप्रदर्शनायाह—सप्तम इति। परस्यब्रह्मणो वासुदेवस्योपास्यत्वमिति—'मय्यासक्तमनाः'इत्यादेरर्थः;तत्रैव ह्युपासनं प्रस्तुतम्। तच्छेषतया चान्यत्सर्वमिहोच्यते। तस्यैव प्रपञ्चनम् 'अहं सर्वस्य प्रभवः' 'वासुदेवस्सर्वं' 'चतुर्विधा भजन्ते माम्' इत्यादिभिः परस्तात्क्रियत इति भावः।परस्येत्यादिभिरुपहितब्रह्मव्योमातीतादिपक्षप्रतिक्षेपः। ब्रह्मशब्दस्य विशेषशब्दसमभिव्याहाराद्देवतान्तरव्यावृत्तिः। वासुदेवशब्देनात्रावतारविशेषो वा विवक्षितः।निखिलेत्यादिभिरुपास्यत्वपरब्रह्मत्वोपयुक्ताकारकथनम्। निखिलचेतनाचेतनवस्तुशेषित्वमिति'भूमिरापः'इत्यादेः श्लोकद्वयस्यार्थः।निखिलशब्देन कार्यकारणादिरूपावस्थासङ्ग्रहात् कार्यभूतब्रह्मरुद्रादेरपि क्रोडीकारः। कारणत्वम् 'एतद्योनीनि' इति श्लोकस्यार्थः। 'मत्तः परतरं नान्यत्' इत्युक्तस्य परत्वस्य 'मामेभ्यः परम्' इत्यत्रोपयुक्ततया तत्रैवोदाहर्तुमत्र तदतिक्रमेण 'मयि सर्वम्'इत्याद्युक्ताधारत्वोपादानम्।'रसोऽहम्' इत्यादिसामानाधिकरण्यफलितं सर्वशब्दवाच्यत्वम्।तत्र हेतुराधारत्वादिविशेषासिद्धं सर्वशरीरकत्वम्।एवं शेषित्वाद्यनुवादेन वक्ष्यमाणतत्तदधिकारिप्राप्यवस्तुविशेषसामानाधिकरण्यस्यापि शरीरात्मभावहेतुकत्वं दर्शितम्। 'मत्त एवेति तान्वि-

प्र-पा॥ १. गी. ७-१ ॥ २. गी. १०-८ ॥ ५. गी. ६-४ ॥ ६. गी. ७-७ ॥
३. गी. ७-१९ ॥ ४. गी. ७-१६ ॥ ७. गी.७-१३॥ ८. गी.७-८॥ ९.गी.७-१२॥

शं॥'ते ब्रह्म तद्विदुः कृत्स्नम्,' इत्यादिना भगवता अर्जुनस्य प्रश्नबीजानि उपदिष्टानि।

आ॥ॐ॥ मरणकालकर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति। परममक्षरं ब्रह्म। वेद्यादि-

जं॥अध्यायस्यावान्तरप्रतिपाद्यमर्थमाह—मरणेति। गम्यत इति गतिः। आदिपदेन मार्गादिकम्। मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत्तथोक्तम्। कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कान्तर्भावसिद्धिः। उक्तव्याख्यानपूर्वकमिति चोपस्कर्तव्यम्। तेनानन्तर्यलक्षणाऽपि सङ्गतिः सिद्धा। तत्प्रसङ्गेनैव मरणकालकर्तव्याद्युपदेशात्। ननु पूर्वाध्याये 'ते ब्रह्म' इति नि-

रा॥**सर्वैश्च कल्याणगुणगणैस्तस्यैव परतरत्वं, सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानम्, अत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निवर्तनं, सुकृततारतम्येन च प्रतिपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षयोपासकभेदं, भगवन्तं प्रेप्सोर्नित्ययुक्ततयैकभक्तितया चात्यर्थं परमपुरुषप्रियत्वेन श्रेष्ठ्यं, दुर्लभत्वं च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत्। इदानीमष्टमे प्रस्तुतान् ज्ञातव्योपादेयभेदान् विविनक्ति—जरामरणमोक्षाय भगवन्तमाश्रि-**

ता॥द्धि'इत्यादिषु प्रवृत्तितादधीन्यस्यापि विवक्षितत्वात्सिद्धं सर्वनियन्तृत्वम्। **सर्वैश्चे**त्यनेनानिर्दिष्टानाम् अन्येषां च आभिप्रायिकाणां सङ्ग्रहः।**तस्यैवे**त्यवधारणेन 'नान्यत्किञ्चिदस्ति'इत्यस्यार्थ उक्तः।'[2]त्रिभिर्गुणमयैः' इति श्लोकस्य सार्धस्यार्थः **सत्त्वे**त्यादिनोक्तः। '[3]मामेव' इत्याद्युक्तप्रपत्तेः सुकृतविशेषहेतुकत्वं। '[4]जनास्सुकृतिनः'इत्यनेन दर्शितमाह—**अत्युत्कृष्टसुकृते**ति।'[5]न मां दुष्कृतिनः' इत्यादेः पूर्वोक्ततिरोधानप्रकारविशेषकथनरूपत्वात्सुकृतिप्रशंसाशेषत्वाच्च तदर्थोऽत्र पृथङ्नोपात्तः। '[4]चतुर्विधाः' इत्यादिकं **सुकृततारतम्येने**त्यादिनानुसंहितम्। उपासकभेदं चेत्यन्वयः।'[6]तेषां ज्ञानी' इत्यादेः श्लोकद्वयस्यार्थो **भगवन्त**मित्यादिनोक्तः। '[7]बहूनां जन्मनाम्' इत्यादिना '[8]सर्गे यान्ति परन्तप' इत्यन्तेन सिद्धमाह—**दुर्लभत्व**मिति। '[9]एषा तु'इत्यादेरध्यायशेषस्य अर्थमाह—**एषां त्रयाणा**मिति। ज्ञातव्यमिह सिद्धरूपं विवक्षितम्।**उपादेयम्**-अनुष्ठेयम्।एतेन'[10]स्वयाथात्म्यम्'इत्यादिसङ्ग्रहश्लोकस्यार्थोऽपि प्रपञ्चितः।अयं त्वष्टमस्य सङ्ग्रहः '[11]ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम्। वेद्योपादेयभावानामष्टमे भेद उच्यते' इति।अत्र भेदोक्तेरध्यायार्थत्वात्स्वरूपप्रस्तावः प्रागेव कृत इति दर्शितम्। प्रस्तुतप्रपञ्चनमिति सङ्गतिमाह—**इदानी**मिति। जीवस्वरूपादिज्ञातव्यस्योपासनाद्यनुष्ठेयस्य च भेदजिज्ञासयार्जुन उवाच—**किन्तदि**ति। 'आर्तो जिज्ञासुः' इत्यादिना प्रागेवाधिकारित्रयस्योक्तत्वात् '[12]जरामरणमोक्षाय'इत्यादिषु यच्छब्दावृत्तिसामर्थ्या-

**प्र-पा**॥ १. गी. ७-७ ॥ २. गी. ७-१३ ॥ ३. गी. ७-१४ ॥ ४ गी. ७-१६ ॥ ५. गी. ७-१५ ॥ ६. गी. ७-१७ ॥ ७ गी. ७-१९ ॥ ८. गी. ७-२७ ॥ ९. गी ७-२८ ॥ १०. गी. सं. ११ ॥ ११. गी सं. १२ ॥ १२. गी. ७-२९ ॥

शं॥**अतः तत्प्रश्नार्थम् अर्जुन उवाच ॥ १ ॥ २ ॥**

आ॥**शङ्काव्यावृत्त्यर्थमेतत्। आत्मन्यधि यत्तदध्यात्मम्। आत्माधिकारे यत्तदिति वा। तथा हि जैवस्वभावः। स्वाख्यो भावः स्वभाव इति व्युत्पत्त्या जीवो वा स्वभावः। सर्वदा अ-**

ज॥र्विशेषणमेवोपक्षिप्तम्। अतएवात्र 'किं तद्ब्रह्म' इति तथैव पृष्टम्। उत्तरे तु कस्मात् 'अक्षरं परमं ब्रह्म' इति सविशेषणमुपादीयत इत्यत आह—**परम**मिति। अक्षरस्यैव परमत्वविशेषणम्; न ब्रह्मण इत्यर्थः। तर्ह्यक्षरमित्येवालं; किं विशेषणेनेत्यत आह—**वेदे**ति। आदिपदेन प्रकृतिर्गृह्यते। तयोरपि ब्रह्माक्षरशब्दवाच्यत्वात् प्रसक्तिः।स्वभावोऽध्यात्ममिति शब्दद्वयस्यैकविषयत्वसिद्धयेऽध्यात्मशब्दं तावत् द्वेधा व्याचष्टे—**आत्मनी**ति। आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वित्यर्थः। आत्माधिकार इति ग्रन्थविशेषस्य संज्ञा। यत्प्रतिपाद्यं तदध्यात्ममिति वेत्यर्थः। अत्राध्यात्मशब्दं प्रथमान्तं गृहीत्वा प्रथमं व्याख्यानम्; सप्तम्यन्तमुपादाय द्वितीयम्;आत्मशब्दं देहविषयमादाय व्याख्याने परमेश्वरप्रसक्तेर्न तथा व्याख्यातम्। एवं तर्हि स्वभाव इत्युभयस्य कथमुत्तरमित्यतस्तावत्तद्व्याख्यानं प्रतिजानीते—**तथा ही**ति। तत्राद्योत्तरत्वेनादौ व्याचष्टे—**जैव** इति। जीवस्यायं जैवोऽन्तःकरणादिर्दे-

रा॥स्य यतमानानां ज्ञातव्यतयोक्तं तद्ब्रह्माध्यात्मं च कर्म च किमिति वक्तव्यम् ऐश्वर्यार्थिनां ज्ञातव्यमधिभूतमधिदैवं च किं, त्रयाणां ज्ञातव्योऽधियज्ञशब्दनिर्दिष्टश्च कः, तस्य चाधियज्ञभावः कथं, प्रयाणकाले चैभिस्त्रिभिर्नियतात्मभिः कथं ज्ञेयोऽसि ॥ २ ॥

**श्रीभगवानुवाच—**

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥** ३

**तद्ब्रह्मेति निर्दिष्टं परममक्षरं न क्षरतीत्यक्षरं, क्षेत्रज्ञसमष्टिरूपम्। तथा च श्रुतिः—**

ता॥दर्थस्वभावाच्चाधि[illegible]भेदस्तेषां ज्ञातव्योपादेयवस्तुप्रतिनियमश्चार्जुनेन ज्ञातः, तत्रैव विशेषबुभुत्सयायं प्रश्नः।वक्ष्यते च विशेषः। ततश्च'किन्तद्ब्रह्म'इत्यर्धमक्षरयाथात्म्यार्थिविषयम्, अधिभूतञ्च' इत्यर्धमैश्वर्यार्थिविषयम्;'अधियज्ञः'इतिश्लोकस्तु अर्थस्वभावात् त्रयाणां साधारण इति विविनक्ति- **जरामरणे**ति।कथमिति प्रकारप्रश्ने **अधियज्ञभाव** इत्यर्थलब्धम्। अत्र' इत्येतच्छब्दश्शास्त्रसन्निध्युपाधिकः; तच्चोत्तरग्रन्थे व्याख्यास्यति—'अत्र इन्द्रादौ ममदेहभूते' इति।'अस्मिन् इतीदशब्दस्तु स्वप्रत्यक्षसन्निध्युपाधिक; प्रत्यक्षा हीन्द्रादयोऽपि प्रष्टुरर्जुनस्य। एतच्छब्देदंशब्दयोश्चैकस्मिन्वाक्ये सामनाधिकरण्येन प्रयोगो दृश्यते--'स एष द्वाभ्यां दर्शनीभ्यां विराड्भ्यामनयोर्द्वाविशयोर्द्वि*वचनयोरयं पुरुषः प्रतिष्ठितः'इत्यादौ। यद्वा 'अत्र' इति यज्ञस्वरूपपरामर्शः; नियतात्मत्वं त्रयाणामपेक्षितम्; अत्र बहुवचनमधिकारत्रयपरमित्यभिप्रायेणोक्तम्—**एभिस्त्रिभिरि**ति ॥ १, २ ॥

'अक्षरं ब्रह्म परमम्' इत्यत्र उद्देश्योपादेयान्यथाभावनिरासायाह—**तद्ब्रह्मेति निर्दिष्ट**मिति । ब्रह्मशब्दोऽत्र परमात्मसाधर्म्यादुपचारवृत्त्येति भावः। अक्षरशब्दस्य निर्वचनं प्रतिपाद्यं च दर्शयति—**नक्षरती**त्यादिना । क्षेत्रज्ञसमष्टौ श्रौतं प्रयोगं दर्शयति—**तथाचे**ति। लयोऽत्र संश्लेषविशेषः। अथवा

**प्र-पा** ॥ १ ॥ *पदयोः. पा ॥

**शं॥एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवान् उवाच—अक्षरं न क्षरतीति अक्षरं परमात्मा, 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति श्रुतेः । ओङ्कारस्य च 'ओमित्येका-**

**आ॥स्येव एकप्रकारेणेति** भावः। **अन्तः करणादिव्यावृत्त्यर्थो भावशब्दः। न ह्येकप्रकारेण**

ज॥हपर्यन्तः पदार्थः स्वभावः, स्वस्य भाव इति व्युत्पत्त्या। 'ते ब्रह्म तद्विदुः'इति जीवानां प्रकृतत्वात्, स्वशब्दो जीववाची । तथा चात्मन्यधि यत् , तदित्येवं व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीति भावः । इदानीं द्वितीयोत्तरत्वेन व्याख्याति—**स्वाख्य** इति । पूर्ववदत्रापि स्वशब्दो जीववाची; तथा चात्माधिकार इति व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीत्याशयः । ननु जैववाचित्वे भावशब्दः सार्थकः, षष्ठ्याः साकाङ्क्षत्वात् । जीववाचित्वे तु तस्य पदार्थत्वाव्यभिचारात् स्वशब्देनैवालम्; किं भावशब्देनेत्यतो भावशब्दं तावदन्यथा व्याचष्टे—**सर्वदे**ति । यद्यपि भवनकर्ता भावः; तथाऽपि विशेषानुपादाने मुख्यस्य ग्राह्यत्वात्सर्वदेत्यादि सिध्यति ; तथाऽपि तस्य किं प्रयोजनमित्यत आह—**अन्तःकरणादी**ति । स्वशब्दमात्रोपादाने तस्यात्मीयेऽपि प्रयोगादन्तःकरणादिकमपि प्रसज्येत; तथा च द्वितीयस्येदमुत्तरं स्यात् । आत्मैव ह्यात्माधिकारे प्रतिपाद्यो वक्तव्यो नान्तःकरणादिकम् ; अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः । कथं तेन तद्व्यावृत्तिरित्यत आह—**न ही**ति । 'अन्नमयं हि सोम्य मनः' इत्यादेरिति भावः । तथा चान्तःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भ-

रा॥*'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इत्यादिका। परममक्षरं प्रकृतिविनिर्मुक्तमात्मस्वरूपम्। स्वभावोऽध्यात्ममुच्यते—स्वभावः-प्रकृतिः। अनात्मभूतम् आत्मनि संबध्यमानं भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्यायां ज्ञातव्यतयोदितम्। तदुभयं प्राप्यतया त्याज्यतया च मुमुक्षुभिर्ज्ञातव्यम् । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः—भूतभावः - मनुष्यादि-

ता ॥ श्रुतावक्षरशब्देन उन्मग्नचेतनांशः प्रकृत्यवस्थाविशेष एव अभिधीयत इति साक्षात्प्रलयार्थत्वेऽपि न विरोधः।तथापि शब्दप्रवृत्तिद्वारभूतचिदंशे तात्पर्यात्तदुदाहरणम्। 'परममक्षरम्' इत्यत्र विशेषणाभिप्रेतमाह—**प्रकृतिविनिर्मुक्तमात्मस्वरूप**मिति । स्वभावशब्दार्थः—**प्रकृति**रिति । नियतसम्बद्धमिति यावत्। किं तदित्याकाङ्क्षायाम् अध्यात्मशब्दानुसारेणाह--**अनात्मे**ति। आत्मन्यधिवसनात् सम्बध्यमानमित्यध्यात्मशब्दनिर्वचनम् । तत एव सिद्धमनात्मत्वम् । **तद्वासनादिकं** – तत्संसर्गोपाधिकाज्ञानकर्मवासनादिकम् । भूतसूक्ष्मादेर्ज्ञातव्यत्वे श्रुतिं दर्शयति—**पञ्चाग्निविद्याया**मिति । [1]'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपक्रम्य [2]'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युक्त्वा [3]'तद्य इत्थं विदुः' इत्यच्छब्दोपलक्षितपञ्चभूतसूक्ष्मवेद्यत्वं ह्युक्तमिति भावः । ननूपायकर्तृभूतेदानीन्तनात्मस्वरूपपरित्यागेन परिशुद्धात्मस्वरूपकथनं मुमुक्षोः क्वोपयुक्तं, भूतसूक्ष्मादिकथनं च किमर्थमित्यत्राह--**तदुभय**मिति। यथाक्रममन्वयः । अत्र पञ्चमाहुतेर्विवक्षितत्वाद्योनिजभूतविषयोऽयं भूतशब्द इत्यभिप्रायेणाह—**भूतभावो मनुष्यादिभाव** इति। मनुष्यत्वादिविशिष्टशरीरयोग इत्यर्थः । विशिष्टस्य विसर्गस्य ज्ञातव्यत्वे तस्य मनुष्यादिभावहेतुत्वे च श्रुतिं दर्शयति —**पञ्चम्या**मिति । अत्र मूत्रमरुन्मलादिविसर्गव्यवच्छेदार्थमुक्तं—**भूतभावोद्भवकर** इति । तदेव दर्शयति—**योषित्सम्बन्धज** इति । विसर्गविशेषणसामर्थ्यादेतत्सिद्धम् । एवं कर्मसंज्ञितरेतोविसर्गज्ञानस्य सप्रयोजनतामाह

**प्र-पा॥***सुबा.२॥ १.छा ५-३-३॥ 'वेत्थ' इति। अत्र 'आपः' इति शब्दः भूतसूक्ष्मपरः। पञ्चम्यामाहुतौ, यथा येनप्रकारेण, पुरुषवचसः-पुरुष इति वचो यासा ताः पुरुषवचसः; पुरुषशब्दाभिलप्या इत्यर्थः । कस्य पञ्चम्यामाहुताविल्यपेक्षाया पुरुषवचस्त्वभवनकर्तृतया निर्दिष्टा आप एव हूयमानतया सम्बध्यन्ते, असन्निहितार्थान्तरकल्पने गौरवात् । ततश्चापा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यर्थः । ततश्चापामेव पञ्चस्वप्याहुतिषु हूयमानत्वमिति सिध्यतीति द्रष्टव्यम्॥ २. छा. ५-९-१ ॥ ३. छा. ५-१०-१ ॥

शं॥क्षरं ब्रह्म' इति परेण विशेषणात् अग्रहणम्। परमम् इति च निरतिशये ब्रह्मणि अक्षरे उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः स्वो भावः स्वभावः अध्यात्मम् उच्यते । आत्मानं देहम् अधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थ-

आ॥स्थितिरन्तःकरणादेः विकारित्वात्।स्वशब्दः ईश्वरव्यावृत्त्यर्थः । भूतानां जीवानां भा-

जा॥वत्तीति हृदयम् । एवं तर्हि भाव इत्येवास्तु ; किं स्वशब्देनेत्यत आह—**स्वशब्द** इति । ईश्वरोऽपि हि सर्वदैकप्रकारेणास्त्येव; अतो भाव इत्येवोक्ते तत्प्रसक्तौ पूर्ववत् द्वितीयोत्तरत्वासम्भवे तद्व्यावृत्त्यर्थः स्वशब्दः । न हि ईश्वरो जीवानां स्वः; भेदप्रमाणविरोधात् । अत एवेश्वरस्वभावो जीव इति व्याख्यानमपास्तम् । नन्वेवमपि स्वशब्दस्यात्मीयार्थत्वादीश्वरप्रसक्तिः । मैवं— 'द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिः प्रधानतः' इति वचनात्तस्यात्मीयत्वाभावात् । षष्ठ्यन्तात्खल्वयं छः । 'सकलकार्योत्पत्तिनिमित्तभूतो देवतोद्देशेन च पुरोडाशादिद्रव्यपरित्यागस्तज्जन्यमपूर्वमिति यावत्' इति व्याख्यानमसत्, तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन 'भूतभाव' इत्यादिकं व्याख्याति—**भूताना**मिति । उद्भव-

रा॥भावः; तदुद्भवकरो यो विसर्गः'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'इति श्रुतिसिद्धो योषित्संबन्धजः, स कर्मसंज्ञितः। तच्चाखिलं सानुबन्धम् उद्वेजनीयतया,परिहरणीयतया च मुमुक्षुभिर्ज्ञातव्यम्। परिहरणीयता चानन्तरमेव वक्ष्यते, 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इति ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४

ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमधिभूतं क्षरो भावः-वियदादिभूतेषु वर्तमानस्तत्परिणामविशेषः क्षरणस्वभावो विलक्षणशब्दस्पर्शादिस्साश्रयः । विलक्षणास्साश्रयाश्श-

ता॥—तच्चाखिलमिति । अत्र कर्माभिप्रायेण नपुंसकनिर्देशः। अखिलं-मनुष्यत्वमृगत्वादिजातिभेदहेतुतयानेकप्रकारम्। सानुबन्ध—हेतुभूतैः कर्मभिः फलभूतैश्च गर्भवासादिभिस्सहितमित्यर्थः। पञ्चाग्निविद्यायामचितस्सर्वावस्थानुयायित्वदुस्त्यजत्वगर्भजन्मादिदुःखकरत्वादेः फलितत्वाज्जुगुप्सनीयतारूपा भयावहत्वरूपा चोद्वेजनीयता युक्ता । परिहरणीयता तु कुतस्सिद्ध्येदित्यत्राह— परिहरणीयता चेति ॥ ३ ॥

ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमित्येतदधिदैवतेऽप्यनुषञ्जनीयम् । अधिभूतक्षरशब्दनिर्वचनानुरोधेन व्याख्याति—वियदादीति । भूतशब्दस्यात्र जन्तुविषयत्वव्यवच्छेदाय वियदादिशब्दः। शब्दाद्यवस्थातद्वतोर्भोग्ययोर्द्वयोरपि क्षरशब्देन सङ्ग्रहणाय—क्षरणस्वभाव इति निर्वचनम्। नश्वर इत्यर्थः। विलक्षण इति-'इन्द्रप्रजापति प्रभृतीनां भोग्यजातात्'इति वक्ष्यमाणमत्रापि द्रष्टव्यम्। एवंविधं च वैलक्षण्यं स्वासाधारणभक्तियोगप्रसन्नपरमात्मसङ्कल्पविशेषप्रसूतभोगरूपत्वात् । अस्य ज्ञातव्यताहेतुं दर्शयति—विलक्षणा इति । 'क्षरो भावः'इत्येकवचनं जात्यभिप्रायमिति भावः। प्राप्याः—प्राप्य-

शं॥ब्रह्मावसानं वस्तु स्वभावः अध्यात्मम् उच्यते अध्यात्मशब्देन अभिधीयते ।भूतभावोद्भवकरः—भूतानां भावः भूतभावः,तस्य उद्भवः भूतभावोद्भवः,तं करोतीति भूतभावोद्भवकरः, भूतवस्तूत्पत्तिकरः इत्यर्थः। विसर्गः विसर्जनं देवतोद्देशेन चरुपुरोडाशादेः द्रव्यस्य परित्यागः; स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत् । एतस्मात् हि बीजभूतात् वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतानि उद्भवन्ति ॥ ३ ॥

अधिभूतं प्राणिजातम् अधि भवतीति । कोऽसौ? क्षरः क्षरतीति क्षरः विनाशी, भावः यत् किञ्चित् जनिमत् वस्तु इत्यर्थः । पुरुषः पूर्णम् अनेन सर्वमिति, पुरि शय-

आ॥वानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः ।विशेषेण सर्जनं विसर्ग इत्यर्थः॥

भूतानि सशरीरान् जीवानधिकृत्य यत्तदधिभूतम् । क्षरो भावः— विनाशिकार्यप-

ज॥करी च सेश्वरक्रिया चेति विग्रहः। ईश्वरक्रियाग्रहणं कर्मशब्देनैकार्थ्यप्रतिपत्त्यर्थम् । एवंलक्षणो यो विसर्गः स कर्मसंज्ञितो न तु कुलालादिसम्बन्धीत्यर्थः । ननु विसर्गशब्दस्त्यागार्थस्तत्कथमेवं व्याख्यानमित्यत आह—विशेषेणेति ॥ १-२-३ ॥

परिहारं सङ्गमयितुमधिभूतशब्दार्थं तावदाह—भूतानीति । अधिकृत्य तदुपकारित्वेन वर्तते । 'क्षरः सर्वाणि भूतानि'इति वक्ष्यमाणं क्षरं व्यावर्तयितुं व्याचष्टे—क्षर इति। क्षरशब्दव्याख्या—विनाशीति। भावशब्दस्यार्थद्वयं—कार्य इति,पदार्थ इति। भवत्युत्पद्यत इति भावः।उत्पत्तिमान्पदार्थो

रा॥ब्दस्पर्शरूपरसगन्धाः ऐश्वर्यार्थिभिः प्राप्यास्तैरनुसन्धेयाः।पुरुषश्चाधिदैवतम्-अधिदैवतशब्दनिर्दिष्टः पुरुषः।अधिदैवतं दैवतोपरि वर्तमानः इन्द्रप्रजापतिप्रभृतिकृत्स्नदैवतोपरि वर्तमानः, इन्द्रप्रजापतिप्रभृतीनां भोग्यजाताद्विलक्षणशब्दादेर्भोक्ता पुरुषः । सा च भोक्तृत्वावस्था ऐश्वर्यार्थिभिः प्राप्यतयानुसन्धेया। अधियज्ञोऽहमेव-अधियज्ञशब्दनिर्दिष्टोऽहमेव। अधियज्ञः—यज्ञैराराध्यतया वर्तमानः। अत्र—इन्द्रादौ मम देहभूते आत्मतया-

---

ता॥त्वादित्यर्थः । अधिदैवतशब्दे रूढिभ्रमव्युदासायाह—**अधिदैवतशब्दनिर्दिष्ट** इति। तन्निरुक्तिः **दैवतोपरिवर्तमान**मिति । दैवतोपरीति सम्बन्धसामान्यषष्ठ्या समासः । दैवतशब्दस्यात्र सर्वेश्वरात्सङ्कोचं दैवतान्तरेष्वभिव्याप्तिं चाह—**इन्द्रे**ति । उपरि वर्तमानत्वमिह न केवलं देशाद्यपेक्षया ; किन्तु भोगप्रकार्षादपीत्यभिप्रायेणेत्याह —**इन्द्रे**त्यादि **पुरुष** इत्यन्तम् । ननु पुरुषान्तरमिहाविवक्षितम्; स्वात्मस्वरूपपुरुषानुसन्धानमधिकार्यन्तरस्यापि समानम्;ततोऽत्र को विशेष इत्यत्राह—**साचे**ति।न परिशुद्धस्वरूपमिहानुसन्धेयं,नचाशुद्धेऽपि हेयत्वमिह भाव्यम्। पुरुषशब्दनिर्देशश्चात्र भावप्रधान इति भावः। **अहमेवे**ति क इति प्रश्नस्योत्तरम्।कथमिति प्रश्नस्योत्तरत्वं तदभिप्रेतं विवृणोति—**अधियज्ञ** इति। यज्ञे सम्बध्यमानोऽधियज्ञः । तत्र च सर्वेश्वरस्याराध्यतया सम्बन्ध इत्याह—**यज्ञैराराध्यतया वर्तमान** इति । इन्द्रादयो हि तत्र आराध्याश्श्रुताः; तत्कथमहमेवेत्युच्यत इत्यत्रोत्तरम् 'अत्र देहे'इत्यनेन विवक्षितमिति दर्शयति—**अत्रेन्द्रादा**विति। 'अधियज्ञोऽहमेवात्र देहे'इतीश्वरेणाभिधीयमानत्वात्तद्देहवि-

---

शं॥नात् वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः, सर्वप्राणिकरणानाम् अनुग्राहकः, सः अधिदैवतम्।अधियज्ञः सर्वयज्ञाभिमानी विष्ण्वाख्या देवता,'यज्ञो वै विष्णुः'इति श्रुतेः।

---

आ॥दार्थः । अव्यक्तान्तर्भावेऽपि तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम्—'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते' इति, 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति च । 'विकारो व्यक्तजन्म हि' इति च स्कान्दे । पुरिशयनात्पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा। स सर्वदेवानधिकृत्य तत्पतिरित्यधि दैवतम् । देवाधिकारस्थ इति वा । सर्वयज्ञभोक्तृत्वादेरधियज्ञः । अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति देह इति

---

ज॥नाशवान् पदार्थ इति प्रत्येकमुत्तरम्।सर्वभूतानामध्यात्मत्वान्न ग्रहणम्। नन्वव्यक्तमपि सशरीरान् जीवानधिकृत्य वर्तत इति तस्याप्यधिभूतेऽन्तर्भावोऽस्त्येव; न चैतद्विनाशि कार्यं वा'नासतः'इत्युक्तत्वात्। ततोऽव्यापकमुत्तरमित्यत आह—**अव्यक्ते**ति।अव्यक्तस्याधिभूतान्तर्भावेऽपि नाव्यापकमुत्तरमिति शेषः। कुत इत्यत आह—**तस्यापी**ति । अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थाप्राप्तिः । यत इति शेषः। तथा विक्रियालक्षणं जन्म चेत्यपि ग्राह्यम्। उभयत्र क्रमेण प्रमाणान्याह– **तच्चे**ति । व्योम्नि व्याप्ते । प्रलये-प्रचुरव्यापाराभावात् निष्क्रिये। ननु पुरुषः परमात्मा, स ब्रह्माधियज्ञशब्दाभ्यामुक्त इत्यत आह-**पुरी**ति।शरीरे।'अधिकरणेशेतेः'इतिडः।'वर्णागमो वर्णविपर्ययश्च'इत्यादिना साधुः।तथाप्यध्यात्मशब्देन गतार्थतेत्यत आह —**स चे**ति।सर्वजीवाभिमानित्वादिति भावः । तस्याधिदैवत्वं कथमित्यतो द्वेधाऽऽह —**स** इति। अधिकृत्य वर्तत इत्यस्यैव विवरणं—**पति**रिति। देवाधिकारस्थस्तत्प्रकरणेषु मुख्यतः प्रतिपाद्यः । सर्वदेवतासङ्ग्रहार्थं वा द्वितीयं व्याख्यानम्। अक्षरार्थस्तु पूर्ववत् । अधियज्ञः कथमित्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह—**सर्वे**ति। आदिपदेन तत्प्रवर्तकत्वादि । नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः; किं तु अधिगतो यज्ञमिति प्रादिसमासः, अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा। अधियज्ञः

ता॥षयत्वं प्रतीतम्; सचेश्वरदेहः 'यैज देवपूजायाम्' इति याज्यदेवतापेक्षयज्ञप्रसङ्गादिन्द्रादिरेवेत्यभिप्राये-णोक्तम्-**इन्द्रादा**विति । 'यैां यां तनुम्' इति प्रागुक्तं स्मारयति—**मम देहभूत** इति । कर्मणा ह्यचि-द्व्यं कस्यचिद्देहो भवति; न तथात्र देहत्वं कादाचित्कमिति ज्ञापनाय—**देहभूत** इति प्रयोगः । दे-हभूतकेवलेन्द्रादिव्यवच्छेदार्थम्-**अहमेवे**त्यवधारणम्। पूर्वनिर्दिष्टब्रह्माध्यायात्मकर्माधिभूताधिदैववन्न त-त्वान्तरमिति ज्ञापनार्थं वा। 'विष्णुस्सर्वा देवताः' इति च श्रुतिः।एतेन 'कथम्' इति प्रश्नस्याप्युत्तरं दत्तम् । तत्तद्विशिष्टस्याराध्यत्वात्, 'देहभृतां वर' इत्यनेनाध्यात्मचिन्तानुगुणसत्त्वोत्तरदेहेन्द्रियादिमत्त्वं, स्व-स्यालौकिकेन्द्रादिदेहवत्त्वे निदर्शनं चाभिप्रेतम्।एवंविधाधियज्ञविज्ञानमनुष्ठानानुप्रविष्टम्; न तु तदुपका-

**प्र-पा** ॥ १. भौवादिकः, उभयपदी ॥ २ गी ७-२१ ॥ ३.

शं ॥ **स हि विष्णुः अहमेव, अत्र अस्मिन् देहे यो यज्ञः तस्य अहम् अधियज्ञः; यज्ञो**

आ॥**विशेषणम्। 'भोक्तारं यज्ञतपसाम्' 'त्रैविद्या माम्' 'ये त्वन्यदेवताभक्ताः' 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः' इत्यादेः । 'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रेयसं पदम्' इत्यादिपरिहारश्च मोक्षधर्मे । भगवांश्चेत्तद्भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथङ्नोक्तः । सर्वप्राणिदेहस्थरूपेण साधियज्ञः । अत्रेति स्वदेहनिवृत्त्यर्थम् । नहि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति, नात्रोक्तं ब्रह्म भगवतोऽन्यत्, 'ते ब्रह्म' इत्युक्ता 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः'इति**

ज्ञा॥क इति प्रश्ने तत्परिहारे च देह इत्यस्य प्रयोजनमाह—**अन्य** इति। अन्यो भगवतः इति सिद्धार्थ-तापरिहारार्थं प्रश्नवाक्ये देह इति विशेषणं प्रयुक्तम्। कर्तृभोक्तृफलदातॄणां देहप्रेरकत्वेन वर्तमान इति। अतः परिहारवाक्येऽपि यथाप्रश्नं तदुपात्तमिति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतो येनैवमु-त्तरमध्याह्रियत इत्यत आह—**भोक्तार**मिति। त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात्सर्वेत्यनुपपन्नमित्यत आह—**त्रैविद्या** इति । प्रवर्तकत्वे श्रुतिमाह—**एतस्ये**ति । यज्ञफलदातृत्वादौ प्रमाणमाह—**कुतो ही**ति। ध्रुवः—चिरन्तनः । निश्रेयसे—मुक्तौ भवं पदं सुखम्।इत्यादेः प्रश्नस्य।नन्वेष परिहारो भगवतैवं कुतो नोक्त इत्यत आह—**भगवांश्चे**दिति।चेच्छब्दो यदाशब्दार्थे। 'अधियज्ञोऽहम्'इति यदाधियज्ञत्वेन भ-गवानुक्तः; तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वमर्जुनस्य सिद्धमेव,'भोक्तारम्'इत्यादेरर्थस्य तेन श्रुत-त्वात्, अन्यत्वपक्ष एव कथमिति पृष्टत्वात् । एवमालोच्य भगवता कथमित्यस्य प्रश्नस्य परिहारोऽधि-यज्ञोहमित्यतः पृथक् नोक्तः। अस्माभिस्तु मन्दान्बोधयितुमुक्त इति भावः। ननु यद्यधियज्ञः स्वयमेव; तर्हि कथं 'साधियज्ञं माम्' इति प्रागवोचदित्यत आह—**सर्वे**ति। रूपविशेषापेक्षया साहित्यमुक्तमिति भावः। अनेन परिहारवाक्यस्थस्य देह इति विशेषणस्य प्रयोजनान्तर चोक्तं भवति । अत्रेति देह-विशेषणं किमर्थमित्यत आह—**अत्रे**ति । इह लौकिके देह इत्यर्थः। कुत ईश्वरदेहो व्यावर्तनीय इ-त्यत आह—**न ही**ति । तत्र--स्वदेहे, पृथक्—पृथग्भावेन ; यथाऽधियज्ञोऽहमेवेत्युक्तं, न तथा ब्र-ह्माहमिति, अतो भगवतोऽन्यदेवेदम्। 'ब्रह्म परमम्'इति तु स्वरूपकथनम्। न तु विशेषणमिति शङ्कां निवारयति—**नात्रे**ति । पूर्वाध्याये'ते ब्रह्म तद्विदुः' इत्युक्त्वा कथंभूतं ब्रह्मेत्याकाङ्क्षायां साधिभूताधिदैवं साधियज्ञं च ब्रह्मेति वक्तव्ये मामिति ब्रह्मणः परामर्शात् । तत्रास्तु भगवानेव ब्रह्म; अत्र तु कुत इत्यत आह—**तस्यैवे**ति। पृष्टस्यैव वक्तव्यत्वात् । तर्हि अधियज्ञस्य ब्रह्मणश्च भगवत्त्वादेकत्राहमेवेत्युक्तिः, अ-परत्र तदनुक्तिः किं निबन्धनेत्यत आह—**साधियज्ञ**मिति। शेषं तात्पर्यनिर्णये । एतेनापव्याख्यानमपि निरस्तम्।द्वादशादौ च विस्तरेण। आगमसम्मत्योक्तं स्थापयति—**आह चे**ति।यानि देहस्थविष्णुरूपाणि

रा॥ स्थितोऽहमेव यज्ञैराराध्य इति महायज्ञादिनित्यनैमित्तिकानुष्ठानवेलायां त्रयाणामधिकारिणामनुसन्धेयमेतत् ॥ ४ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५

इदमपि त्रयाणां साधारणम्। अन्तकालेच मामेव स्मरन् कलेबरं त्यक्त्वा यः प्रयातिः स मद्भावं याति—मम यो भावः स्वभावः तं याति तदानीं यथा मामनुसन्धत्ते ;

ता॥रकमात्रम्; नचैश्वर्यार्थिमात्रविषयमिति दर्शयति—इतिमहायज्ञेति । अकरणनिमित्तानर्हतादिपरिहाराय त्रयाणामवश्यकर्तव्यताद्योतनाय—नित्यनैमित्तिकोक्तिः ॥ ४ ॥

'प्रयाणकाले' इत्यस्य प्रश्नस्य सङ्ग्रहेणोत्तरम् 'अन्तकाले' इति श्लोकः। अतो न ज्ञानिमात्रविषय इत्यभिप्रायेणाह—इदमपीति। अधियज्ञपदार्थस्वाभाव्याद्वक्ष्यमाणप्रकाराच्चेति भावः। अन्वयं दर्शयति—अन्तकालेचेति।'मद्भावं यान्ति' इत्यत्र श्रुत्यादिविरुद्धतादात्म्यावाप्तिभ्रमव्युदासायाह-मम यो भाव इति।नन्वीश्वरस्वभावप्राप्तावस्यापि कुशोदरीनीडनिहितकीटस्य तज्जातीयत्ववदीश्वरान्तरत्वप्रसङ्गः, त्र-

शं॥हि देहनिर्वर्त्यत्वेन देहसमवायी इति देहाधिकरणो भवति, देहभृतां वर ॥ ४ ॥

अन्तकाले मरणकाले च मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कले-

आ॥परामर्शात्, तस्यैव च प्रश्नात् । 'साधियज्ञम्'इति भेदप्रतीतेस्तन्निवृत्त्यर्थम् 'अधियज्ञोऽहम्'इत्युक्तम् । माम् इत्यभेदप्रसिद्धरक्षरमित्येवोक्तम्। आह च गीताकल्पे 'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः । कर्मेश्वरस्य सृष्ट्यर्थं तच्चापीच्छाद्यमुच्यते । अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते । हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा। ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः'इति । 'यथाप्रतीतं वा सर्वमत्र नैव विरुध्यत'इति। स्कान्दे च 'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते । देहाद्बाह्यं विनाऽतीव बाह्यत्वादधिदैवतम्॥ देवाधिकारगं सर्वं महाभूताधिकारगम्।तत्कारणं तथा कार्यमधिभूतं तदन्तिकात्' इति। महाकौर्मे च 'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् । सदेहजीवभूतानि यत्तेषामुपकारकृत् ॥ अधिभूतं तु मायान्तं देवानामधिदैवतम् ' इति ॥ ४ ॥

मद्भावं मयि सत्तां निर्दुःखनिरतिशयानन्दात्मिकाम् । तच्चोक्तं 'मुक्तानां च ग-

जा॥सोऽधियज्ञ इतीरितः । तदपीच्छाप्रयत्नाद्यमेव; नतु परिणामरूपम्। जडं—देहाद्याद्यम्। न केवलमेषां पदानामेतावन्मात्रार्थत्वं, किन्तु यथाप्रतीतं प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत्प्रतीतं प्रमाणाविरुद्धं च, तदत्र व्याख्यायमानं वक्तुरभिप्रायं न व्याभिचरतीत्यर्थः । किञ्चिद्व्यवहितत्वात् मध्येऽपीतिशब्दः । एतदेव वाक्यान्तरेण स्पष्टयति—स्कान्दे चेति । आत्मनोऽभिमानस्य विषयः । आत्माधिकारस्थं तत्र प्रतिपाद्यं—देहाद्बाह्यं विनेति । सामर्थ्यादात्माभिमानस्थेन सम्बध्यते । तत्र युक्तिः अतीव बाह्यत्वात्—अत्यभिमानविषयत्वाभावात् । महाभूताधिकारगं—महाभूतं - कार्यकारणग्रहणहेतुः । तदन्तिकात्—तत्तादात्म्यात् । देवानामुपकारकृत् ॥ ४ ॥

मद्भावमित्यस्य मदात्मकत्वमित्यन्यथाप्रतीतिनिरासायाह—मद्भावमिति । न तु भगवति स्थितिः सर्वदाऽस्ति, सा कथं फलमित्यतो विशिनष्टि—निर्दुःखेति । क्वचित्पाठः—मद्भावं - मद्भावम्—इति। तत्र भगवत्प्रतिबिम्बानां जीवानां तत्सादृश्यं सदाऽस्ति। तत्कथं प्राप्यमुच्यत इत्यत उक्तं

रा॥तथाविधाकारो भवतीत्यर्थः;यथा आदिभरतादयस्तदानीं स्मर्यमाणमृगसजातीयाकारास्संभूताः ॥ ५ ॥

स्मर्तुस्स्वविषयसजातीयाकारतापादनमन्त्यप्रत्ययस्य स्वभाव इति सुस्पष्टमाह—

यंयं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेबरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६

अन्ते अन्तकाले । यंयं वापि भावं स्मरन् कलेबरं त्यजति; तंतं भावमेव मरणा-

---

ता॥याणामधिकारिणां गुणाष्टकरूपेश्वरस्वभावप्राप्तयविशेषेऽधिकारिभेदश्च न स्यादित्यत आह-तदानीमिति । तत्तदनुसन्धेयाकारविशेषसाम्यप्राप्तिर्विवक्षिता। साम्यं च स्वरूप* भेदक† वैधर्म्ये स्थिते सत्येवेति न कश्चिद्दोष इति भावः । एवं प्रश्नाः प्रत्युक्ताः; 'नास्त्यत्र संशयः' इत्यनेन अभिप्रेतां प्रयोजकप्रसिद्धिं दर्शयति—यथादिभरतादय इति।एतेनोदाहरणेनापि तादात्म्यभ्रमो निरस्तः; न ह्यादिभरतस्य स्मर्यमाणमृगेण तादात्म्यम्; अपि तु तत्समानाकारमृगशरीरपरिग्रह एवेति तत्रैव प्रसिद्धम्।तदानीं-देहवियोगकाल इत्यर्थः ॥ ५ ॥

न केवलमीश्वरविषयान्तिमप्रत्ययस्वभावोयमिति मन्तव्यम्, किन्तु सर्वसाधारणमिदमत्राप्युक्तमिति प्रयोजकाकारो ' यंयम् ' इतिश्लोकेनोच्यत इत्याह—स्मर्तुरिति । अन्तशब्दः पूर्वश्लोकाभिहितान्तकालपरः।तस्यचान्तिमप्रत्ययप्रभावज्ञापनाय 'स्मरन्' इत्यनेनान्वय इति दर्शयति-अन्ते अन्तकाले इति। वीप्सया 'वापि' इत्यनेन च स्मर्तव्यविषयनियमो नीचोत्तमविषयवैषम्याभावश्च दर्शितः। 'तंतम्' इति वीप्सया त्वसङ्कीर्णतत्तत्प्राप्तिः। अवधारणेन प्रबलपुण्यान्तरेणापि तस्या दुर्वारत्वं च विवक्षितम्। भाव-

प्र-पा ॥ * भेदके पा ॥ † वैषम्ये. पा ॥

---

शं ॥ वरं शरीरं यः प्रयाति गच्छति, सः मद्भावं वैष्णवं तत्त्वं याति । नास्ति न विद्यते अत्र अस्मिन् अर्थे संशयः, याति वा न वा इति ॥ ५ ॥

न मद्विषय एव अयं नियमः , किं तर्हि—यंयं वाऽपि यंयं भावं देवताविशेषं स्मरन् चिन्तयन् त्यजति परित्यजति अन्ते अन्तकाले प्राणवियोगकाले कलेबरं शरीरं तं-

---

आ॥तिर्ब्रह्म क्षेत्रज्ञ इति कल्पितः' इति मोक्षधर्मे ॥ ५ ॥

स्मरन्पुरुषस्त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदित्यन्त

---

ज॥—निर्दुःखेति । अत्रात्मकमिति पाठः । अभिव्यक्तमिति शेषः। प्रतीत एवार्थः किं न स्यादिति चेत्—न, मुक्ताना भगवदाश्रितत्वेन तद्भावायोगात् । तदपि कुत इत्यत आह—तच्चेति । क्षेत्रज्ञः परमात्मा गतिरिति समर्थितः ॥ ५ ॥

ननु कलेबरत्यागस्यान्ताव्यभिचारादन्त इति व्यर्थमित्यत आह—स्मरन्निति । नान्त इत्येतत्कलेबरं त्यजतीत्यस्य विशेषणं, येन व्यर्थं स्यात्। किं तु अन्ते स्मरन्निति स्मरणस्यैव । तत्रापि किं प्रयोजनमिति चेत्—उच्यते 'लक्षणहेत्वोः क्रियायाः' इति लक्षणेऽपि शतुर्विधानात् । स्मरन्पुरुषः कलेबरं त्यजतीति स्मरणकलेबरत्यागयोर्भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इति मन्दमतेः शङ्का स्यात्, सा मा भूदित्येवमर्थम्'अन्ते'इति स्मरणस्यविशेषणमुपात्तम् । तेनात्र स्वरणकलेबरत्यागयोरेककालत्वासिद्धिरिति । मन्दमतेरित्यस्य कृत्यमाह—सुमनेरिति । कुत इत्यत आह—स्मरन्निति । 'लटः शतृशानचौ'इति लडादेशत्वेनापि शतुर्विधानमस्ति ; स च लडिति वर्तमाने पुनर्लड्ग्रहणसामर्थ्यात्क्वचित्

रा॥नन्तरमेति । अन्त्यप्रत्ययश्च पूर्वभावितविषय एव जायते ॥ ६ ॥

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः ॥** ७

**यस्मात् पूर्वकालाभ्यस्तविषय एवान्त्यप्रत्ययो जायते ; तस्मात्सर्वेषु कालेष्वाप्रयाणादहरहर्मामनुस्मर । अहरहरनुस्मृतिकरं युद्धादिकं वर्णाश्रमानुबन्धि श्रुतिस्मृतिचो-**

ता॥शब्दोऽत्र स्वभावपरः । धर्मिप्रत्ययस्तु नान्तरीयकः।भावशब्दस्यात्र पदार्थपरत्वे प्रस्तुतभावशब्दवैरूप्यम्, 'तंतमेति' इति साजात्यलक्षणा च। 'तंतमेवैति'इत्यत्र यत्र क्वचन जन्मनि सर्वसाधारणतज्जातियोगमात्रव्युदासायोक्तं—**मरणानन्तरमिति** । नह्यादिभरतमृगत्वे जन्मान्तरव्यवधानं। 'सदा तद्भावभावितः' इत्यनेनान्तिमस्मृतिहेतुर्विवक्षित इत्याह—**अन्तिमप्रत्ययश्चेति** । तद्भावभावितः— तद्भावनावासित इत्यर्थः, तस्मिन् भावो भावितो येनेति वा तद्भावभावितः ॥ ६ ॥

एवमन्तिमप्रत्ययाधीने फले अन्तिमप्रत्यये चानवरतभावनाधीने भवतापि तथाविधभावना तदनुग्राहकं कर्म च कर्तव्यमित्युच्यते—'तस्मात्' इति श्लोकेन । 'सर्वेषु कालेषु' इत्यनेन 'स खल्वेव वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते' 'प्रायणान्तमोङ्कारमभिध्यायीत' इत्यादिश्रुतिश्चानुस्मृतेत्यभिप्रायेण—**आप्रयाणादित्युक्तम्** । सूत्रं च 'आप्रयाणात्तत्रापि हि दृष्टम्' इति ।

प्र-पा ॥ १. छा॰ ८ १५-१ ॥

२.प्रश्नोप. ५-प्रश्ने १-वा॥ अथ हैन शैब्यः सत्यकाम. प्रपच्छ। सयो हवैतत् भगवन्मनुष्येषु प्रायणान्तम् ओंकारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति । 'हवा' इति प्रसिद्ध्यतिशये । 'तत्-एतत्' इत्यव्ययम्। 'स यः' इत्येतत् अधिकारिसामान्यपरम् । अयमर्थः —हे भगवन्-पूजार्ह, योऽधिकारी मनुष्याणा मध्ये, प्रायणान्तं-मरणान्तम् , एतत् ओंकारमभिध्यायीत, स कतम लोक तनोंकारेण प्राप्नोतीत्यर्थः—इति ॥

३. ब्रह्मसूत्रम् . ४-१-१२ ॥ आमरणात् अहरहरुपासनं कार्यम् । कुत. ? तत्रापि हि दृष्टम्-उपासनोद्योगप्रभृत्याप्रयाणात् मध्ये यः कालः- तत्र सर्वत्रापि दृष्टमुपासनम्— 'स खल्वेवं वर्तयन् यावदायुषम्' इति । इति सूत्रार्थ. ॥

**शं॥तमेव स्मृतं भावम् एव एति नान्यं कौन्तेय सदा सर्वदा तद्भावभावितः तस्मिन् भावः तद्भावः स भावितः स्मर्यमाणतया अभ्यस्तः येन सः तद्भावभावितः सन् ॥ ६ ॥**

**यस्मात् एवम् अन्त्या भावना देहान्तरप्राप्तौ कारणम्—तस्मात् सर्वेषु कालेषु माम्**

**आ॥इति विशेषणम् । सुमतेर्नैव शङ्कावकाशः,स्मरंस्त्यजतीत्येककालीनत्वप्रतीतेः । दुर्म-**

ज॥प्रथमासामानाधिकरण्येऽपि भवति,लक्षणे विहिताच्च लडादेशो बलीयान्,तत्र क्रियाया इत्युपपदसापेक्षत्वात्,अस्यानपेक्षत्वात्.'अप्रथमासमानाधिकरणे'इत्यस्यातिप्रसक्तिपरिहारमात्रार्थत्वात्। तथा च बलवतो ग्राह्यत्वे स्मरंस्त्यजतीत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात्।एवं च'अन्ते'इत्यनुक्तेऽपि स्मरणत्यागयोरेककालीनत्वप्रतीतेः सुमतेर्नैव शङ्कावकाश इति भावः । ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव, अन्यथा शास्त्रे नाधिक्रियेत , केवलमध्यात्मविषये न प्रवीणः ; तत्कथं तस्याप्येषा शङ्का स्यात् । ततश्च तं प्रत्यपि 'अन्ते' इत्येतत् व्यर्थमित्यत आह—**दुर्मतेरिति**। दुर्मतेर्भविष्यति शङ्का भिन्नकालत्वविषया । कुतः ? मरणकाले महद्दुःखं जायते । दुःखस्य च संस्कारविलोपहेतुत्वं प्रसिद्धम् । अतो दुःखात्कारणात् मूर्च्छितो न स्मरंस्त्यजति ; कलेबरत्यागसमये स्मरणमसम्भवतीति यावत् । एतामनुपपत्तिं

रा॥दितं नित्यनैमित्तिकं च कर्म कुरु। एवमुपायेन मय्यर्पितमनोबुद्धिरन्तकाले च मामेव स्मरन् यथाभिलषितप्रकारं मां प्राप्स्यसि ; नात्र संशयः ॥ ७ ॥

ता॥प्रतिमासं प्रतिपक्षमनुस्मरणेऽप्याप्रयाणादिति वक्तुं शक्यमिति तद्व्युदासाभिप्रायेण बहुवचनमित्याह —अहरहरिति। '[1]तं पूर्वापररात्रेषु युञ्जानः' इत्यादिविहितैकाग्रतानुरूपसात्त्विककालेष्वित्युक्तं भवति। तथा च सूत्रं —'[2]यत्रैकाग्रता तत्राविशेषात्' इति। 'युध्यच' इति विहितस्य युद्धस्य अत्र 'फलवत्सन्निधावफलं तदङ्गम्' इत्यादिन्यायादनुस्मृत्यङ्गत्वं सिद्धम्; तच्च युद्धमत्र प्रस्तुतत्वादुपलक्षणतयोक्तम्;ततश्च प्रमाणसिद्धं यथास्ववर्णाश्रमकर्मावश्यं कर्तव्यमित्युक्तं भवतीत्यभिप्रायेणाह-अहरहरनुस्मृतिकरंयुद्धादिकमिति। वर्णाश्रमानुबन्धीत्युपलक्ष्यसङ्ग्राहकाकारः। चोदितमित्यनेन शमादिविधेश्चोदितव्यतिरिक्तविषयत्वं सूचितम्। नित्यनैमित्तिकशब्देन फलाभिसन्धिपूर्वककर्मव्युदासः। 'मय्यर्पितमनोबुद्धिः' इत्यस्य उक्तार्थानुवादरूपत्वं दर्शयति—एवमिति। उपायेन-कर्मादिरूपेणेत्यर्थः। अनुस्मरणमेवात्र मनसोऽर्पणं;बुद्धेरर्पणम् तु फलप्रदत्वाध्यवसायः। प्रकरणसिद्धावान्तरव्यापारकथनम् अन्तकालेच मामेवस्मरन्निति। यद्वा, अत्रोपायेनेति कर्मानुगृहीतानुस्मृतिरेवोच्यते। तत्फलं 'मय्यर्पितमनोबुद्धिः' इति। तस्यैवार्थः-अन्तकालेच मामेवस्मरन्निति। पूर्वोत्तरानुवृत्ताधिकारित्रयसाधारण्यायाह —यथाभिलषितप्रकारं मामिति। '[4]निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः। ससंशयान् हेतुबलान्नाध्यावसति माधवः' इत्यादिवत्'असंशयः' इत्यस्यार्जुनविशेषणत्वेऽपि फलितमाह—नात्रसंशय इति। 'अ मा नो नाः प्रतिषेधे' इति वचनादकारो वात्र पृथगनुसन्धेयः। '[6]एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्ति' इत्यादिकमत्रानुसन्धेयम् ॥ ७ ॥

प्र-पा॥१॥२ ब्रह्मसूत्रम्.४-१-११॥यस्मिन्देशे यस्मिश्चकाले मनस एकाग्रता-तत्र देशे कालेचोपासनं कार्यम्। 'शर्करादिरहिते मनोनुकूले शुचौ देशे' इति एतदतिरिक्तविशेषाग्रहणात्। यथा देशकालयोरेकाग्रताया विशेषः-न तथा स्थितिगत्यादौ।आसीनस्य तु विशेषोस्तीत्यभिप्रायः॥

३.

४. भारते. शान्ति मोक्ष. ३६९-७१॥

५.

६. छा. ३-१४-४॥

शं॥अनुस्मर यथाशास्त्रम्। युध्य च युद्धं च स्वधर्मं कुरु। मयि वासुदेवे अर्पिते मनोबुद्धी यस्य तव स त्वं मयि अर्पितमनोबुद्धिः सन् मामेव यथास्मृतम् एष्यसि आगमिष्यसि असंशयः, न संशयः अत्र विद्यते ॥ ७ ॥

आ॥ तेर्दुःखान्न स्मरंस्त्यजतीति शङ्का। 'त्यजन्देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्' इति स्कान्दे। 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति हि

ज॥पश्यन् बलवन्तमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः। ननु सुमतेरप्येवं शङ्का स्यादेव। कथं चेयं शङ्का ; तत्त्वप्रतीतिरेवेति चेत्—न, अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति। तदपि मरणक्षणात्पूर्वमेव। ज्ञानी तु सर्वदा देहं हेयमेव मन्यमानो न मनागपि दुःखायते ; किं तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसन्दधानस्य सुमतेः शङ्कानवकाशात्। किं तदध्यात्मशास्त्रमित्यत आह—त्यजन्निति। कश्चिद्विद्वान्। अविद्वानपि तत्काले तस्येति मरणवैशिष्ट्यमात्रपरम्। नत्वन्त इत्येतत् स्मरणविशेषणं चेत् तदा 'सदा तद्भावभावितः' इत्यनेनैव गतार्थं स्यात् ; अन्यथा तद्व्यर्थं भवेदित्यत आह— सदेति। अन्तकाल-

रा॥एवं सामान्येन स्वप्राप्यावाप्तिरन्त्यप्रत्ययाधीनेत्युक्त्वा तदर्थं त्रयाणामुपासनप्रकारभेदं वक्तुमुपक्रमते; तत्रैश्वर्यार्थिनामुपासनप्रकारं यथोपासनमन्त्यप्रत्ययप्रकारं चाह—

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८**

अहरहरभ्यासयोगाभ्यां युक्ततया नान्यगामिना चेतसा अन्तकाले परमं पुरुषं दिव्यं मां वक्ष्यमाणप्रकारं चिन्तयन् मामेव याति—आदिभरतमृगत्वप्राप्तिवदैश्वर्यविशिष्टतया मत्समानाकारो भवति। अभ्यासः —नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मनसोपास्य-

ता॥अन्तिमप्रत्ययप्रसङ्गात्तद्धेतुतया'अनुस्मर'इत्युपासनं प्रस्तुतम्; तत्प्रकारभेदोनन्तरप्रघट्टकार्थं इत्यभिप्रायेणाह—एवमिति।गतिभेदोऽपि वक्ष्यमाणोऽनेनोपलक्षणीयः । 'अभ्यास'इत्यादिश्लोकतयार्थमाह—तत्रेति। योगशब्दस्य सम्बन्धमात्रपरत्वे नैरर्थक्यादत्र ध्यानपरत्वं वक्तुं युक्तं,तत्पुरुषाच्च द्वन्द्वस्योभयपदार्थप्रधानत्वात्परिग्राह्यत्वमस्तीति तदाह—अभ्यासयोगाभ्यामिति । 'नान्यगामिना' इत्येतन्नैकादिशब्दवत्,अनन्यगामिनेत्यर्थः । अन्यत्र विषयान्तरे गन्तु शीलं नास्येति नान्यगामि । अभ्यासयोगशब्देन प्राचीनचिन्तनस्योक्तत्वात् , 'अनुचिन्तयन्' इत्येतदन्तिमस्मृतिपरमिति प्रदर्शनाय—अन्तकाल इत्युक्तम्। चिन्तनस्य ध्यानस्य च पुरुष एवात्र कर्म ; स च परमशब्देनविशेषितत्वादीश्वर एवेत्यभिप्रायेण-मामित्यादि पदद्वयम् । 'दिव्यम्' इत्यस्य सूर्यमण्डले स्थितमिति शङ्करोक्तं निर्मूलम्, 'आदित्यवर्णं तमसः परस्तात्' इति वक्ष्यमाणविरुद्ध चेत्यभिप्रायेणाह—वक्ष्यमाणप्रकारमिति । अनन्तरश्लोकद्वयेनेति शेषः । कथमैश्वर्यार्थिनोऽनपेक्षितपरमपुरुषप्राप्तिः फलतयोच्यत इत्यत्राह—आदिभरतेति । अन्तकाले स्मर्यमाणभोगप्रदानोपयुक्ताकारविशिष्टपरमपुरुषसमानैश्वर्यप्राप्तिरिह परमपुरुषप्राप्तिः। तत्साम्यापत्तिरेव हि तत्प्राप्तितया 'यं यम्' इति श्लोकेनोदाहृतेति भावः। 'आरम्भणसंशीलनं पुनःपुनरभ्यासः' इति वाक्यकारवचनानुरोधेनाभ्यासशब्दार्थमाह—अभ्यास इति । पुनःपुनरिति वचनान्मध्येऽवश्यम्भाविभिः कैश्चिद्व्यवधानं सूचितमित्यभिप्रायेणोक्तं-नित्यनैमित्तिकाविरुद्धेष्विति। सर्वेषु कालेष्विति - न केवलं योगकाले, तदातनस्य शीलनस्य योगशब्देनोपात्तत्वादिति भावः ।

प्र·पा ॥ १· वृत्तिग्रन्थे ॥

शं॥किञ्च—अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूते एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणः विलक्षणप्रत्ययानन्तरितः अभ्यासः, स चासौ योगः तेन युक्तं तत्रैव व्यापृतं योगिनः चेतसा नान्यगामिना न अन्यत्र विषयान्तरे गन्तुं शीलम् अस्येति नान्यगामि

श्रुतिः। 'सदा तद्भावभावितः'इत्यन्तकालस्मरणोपायमाह—भावोऽन्तर्गतं मनः,तथाभिधानात् । भावितत्वम्—अतिवासितत्वम् । 'भावना त्वतिवासना' इत्यभिधानात् ॥६-७

सदा तद्भावभावितत्वं स्पष्टयति—अभ्यासेति। अभ्यास एव योगोऽभ्यासयोगः ।

आ॥स्मरणमेव तत्प्राप्तिसाधनम्। न च तदकस्माद्भवति; अतः तदुपायत्वेन सदा तद्भावभावितत्वमुच्यत इत्यर्थः । कथमित्यतो यथाऽयं तदुपायः स्यात् , तथा व्याचष्टे—भाव इति । तथाऽभिधानादिति स्याद्भावोऽन्तर्गतं मन इत्येवंरूपादभिधानादित्यर्थः । वासितत्वं संस्कृतत्वम् । तस्मिन् भावस्तद्भावस्तेन भावित इति मनोधर्मेणात्मोपचर्यते ॥ ६ ॥ ७ ॥

कुतोऽयमर्थ इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाह—सदेति । द्वन्द्वादिशङ्काव्युदासा-

रा॥संशीलनम् । योगस्त्वहरहर्योगकालेऽनुष्ठीयमानं यथोक्तलक्षणमुपासनम् ॥ ८ ॥

कविं पुराणमनुशासितारम् अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपम् आदित्यवर्णं तमसः परस्तात् ॥ ९
प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेषु चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १०

कविं - सर्वज्ञं, पुराणं-पुरातनम्, अनुशासितारं·विश्वस्य प्रशासितारम् , अणो-

ता॥आरम्भणम्·आलम्बनम् , तच्चात्रोपास्यशब्देन व्याख्यातम्।योगशब्देनात्राङ्गिस्वरूपमुच्यत इत्यभिप्रायेणाह—**योगस्त्विति** । **यथोक्त**मिति—अत्यर्थप्रियविशदतमप्रत्यक्षतापन्नमित्यर्थः ॥ ८ ॥

क्रान्तदर्शी हि कविरुत्युच्यते; अत्र तु कविशब्दः ईश्वरविषयत्वात् सर्वदर्शित्वपर इत्यभिप्रायेणाह--**सर्वज्ञ**मिति । पुराणशब्देनानादित्वं विवक्षितमित्यभिप्रायेणोक्त—**पुरातन**मिति । अनुपूर्वश्शासिर्विविच्य ज्ञापनार्थ इत्येतावन्मात्रपरत्वव्युदासाय—**विश्वस्य प्रशासितार**मित्युक्तम् । ईश्वरस्य सतोऽनुशासनमाज्ञापनमेवेति भावः । अनुशासन कस्येत्याकाङ्क्षायां 'सर्वस्य धातारम्' इत्यत्र सर्वस्येति पदमाकर्षणीयम्।विशेषनिर्देशाभावाद्वा सर्वविषयत्वमित्यभिप्रायेण—**विश्वस्ये**त्युक्तम्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः'इत्यादिकमत्र भाव्यम्।'अन्तः प्रविष्टश्शास्ता जनानाम्' इत्यादिषु प्रशासनसहपठितान्तःप्रवेशौपयिकसूक्ष्मतरत्वमत्र 'अणोरणीयांसम्' इत्युच्यत

**प्र-पा** ॥ १. अनुशासनस्य कर्माकाङ्क्षायाम् पा ॥ २. बृहदारण्यके ५-८-९ ॥ एतस्य वेति-'वा'शब्दोऽवधारणे । प्रशासने - आज्ञाचक्रे; स्पष्टोऽर्थः ॥ ३ यजुषि-आरण्यके ३-प्रश्न ३-अनु । 'अन्तःप्रविष्टश्शास्ता' इत्येतत्सर्वात्मशब्दविवरणम्। 'अन्तःप्रविष्टः' 'शास्ता'इत्याभ्यां पदाभ्यां नृप नभोव्यावृत्तिः।अनेन शरीरात्मभाव. फलितः । अन्तः प्रविश्य नियामकत्वं हि शरीरत्वमित्यस्यार्थः ॥

शं॥तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं याति गच्छति हे पार्थ अनुचिन्तयन् शास्त्राचार्योपदेशम् अनुध्यायन् इत्येतत् ॥ ८ ॥

किंविशिष्टं च पुरुषं याति इति? उच्यते—कविं क्रान्तदर्शिनं सर्वज्ञं, पुराणं चिर-

आ॥दिव्यं पुरुषं पुरिशयं पूर्णं च,'स वा अयं पुरुषः सर्वासुपूर्षु पुरि शयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तम् 'दिवुक्रीडा' इति धातोः ॥ ८ ॥

ज॥र्थमाह—**अभ्यास एवे**ति। अभ्यासातिरिक्तस्य योगस्य प्रकृतोपयोगिनोऽभावादिति भावः। पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीति निरासार्थमाह—**दिव्य**मिति । दिव्यत्वेन विशेषणात् ईश्वर एवायमित्यर्थः । 'पॄ पालनपूरणयोः' इत्यतो 'विदिपूरोश्च' इति कुषन्प्रत्ययविधानात् पूर्णं चेति सिध्यति । सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम् । तस्य व्याख्यानं—पुरिशय इत्यादि । आवरणमन्तर्व्याप्तिः। संवरणं बहिराच्छादनम्। ननु दिवि भवो दिव्यः। स च सूर्यमण्डलस्थत्वाद्धिरण्यगर्भोऽपि भवतीति कश्चित्; अत आह—**दिव्य**मिति । औणादिको यक्प्रत्ययः । 'परमम्' इति विशेषणादिति भावः ॥ ८ ॥

उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन तत्तात्पर्यमाह—**ध्येय**मिति । **आह**—

रा॥रणीयांसं-जीवादपि सूक्ष्मतरं, सर्वस्य धातारं-सर्वस्य स्रष्टारम्, अचिन्त्यरूपं-सकलेतरविसजातीयस्वरूपम्, आदित्यवर्णं तमसः परस्तात्--अप्राकृतस्वासाधारणदिव्यरूपं,

ता॥इत्यभिप्रायेणोक्त--सूक्ष्मतरमिति। 'धाता पुरस्ताद्यमुदाजहार' 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादिषु धातृशब्दस्य स्रष्टरि प्रयोगाद्धातूनां चानेकार्थगर्भत्वात्--सर्वस्य स्रष्टारमित्युक्तम्। 'विष्णुना विधृते भूमिः' 'सर्वाधारं धाम विष्णुसंज्ञम्' इत्युक्तं सर्वाधारत्वं सर्वस्रष्टृत्वेनेति फलितोक्तिर्वा। उक्तप्रकारस्येश्वरस्वरूपस्य सामान्यतो दृष्टैस्तर्कैरसम्भावनीयतां केचिदभिमन्येरन्निति तन्निरासपरम् 'अचिन्त्यरूपम्'इतिपदमित्यभिप्रायेणाह—सकलेतरविसजातीयस्वरूपमिति। वर्णयोगस्य स्वरूपेणाघटनात् प्रमाणसिद्धविलक्षणविग्रहद्वारा तद्योगमाह—अप्राकृतेति। 'येन सूर्यस्तपति तेजसेद्धः'

प्र-पा॥ १. पुरुषसूक्ते ॥
२. तै. नारा. १-३८ ॥
३. यजुषि ॥ ४ ॥
५. यजुषि. तैत्तरीयब्राह्मणे. ३ १२-९-७। येन-परब्रह्मरूपेण, तेजसा - तेजोविशेषेण, इद्धः-प्रकाशितस्सन् सूर्यः लोके तपति-इति वाक्यार्थः ॥

शं॥न्तनम्, अनुशासितारं सर्वस्य जगतः प्रशासितारम्,अणोः सूक्ष्मादपि अणीयांसं सूक्ष्मतरम् अनुस्मरेत् अनुचिन्तयेत् यः कश्चित्, सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभक्तारम्, अचिन्त्यरूपं न अस्य रूपं विद्यमानमपि केनचित् चिन्तयितुं शक्यते इति अचिन्त्यरूपः,तम् आदित्यवर्णम् आदित्यस्येव नित्यचैतन्यप्रकाशो वर्णो अस्य तम् आदित्यवर्णं तमसः परस्तत् अज्ञानलक्षणात् मोहान्धकारात् परं तम्, अनुचिन्तयन् याति' इति पूर्वेण सम्बन्धः ॥ ९ ॥

किञ्च—प्रयाणकाले मरणकाले मनसा अचलेन चलनवर्जितेन भक्त्या युक्तः,भजनं भक्तिः तयायुक्तः योगबलेन चैव योगस्य बलं योगबलं समाधिजसंस्कारजनितं चित्त-

आ॥ध्येयमाह—कविमिति। कविं सर्वज्ञं 'यः सर्वज्ञः' इतिश्रुतेः, 'त्वं कविः सर्ववेदनात्' इतिच ब्राह्मे। धातारं धारणपोषणकर्तारम्,'डुधाञ्धारणपोषणयोः'इति धातोः। 'धाता विधाता परमोत संदृक्' इति च श्रुतिः। 'ब्रह्मा स्थाणुः' इत्यारभ्य 'तस्य प्रसादादिच्छन्ति तदादिष्टफलां गतिम्' इति च मोक्षधर्मे। तमसोऽव्यक्तात्परतस्स्थितम्। 'तमसः परस्तादित्यव्यक्तं वै तमः परस्ताद्धि स ततः'इति पिप्पलादशाखायां। 'मृत्युर्वाव तमो मृत्युर्वै तमो ज्योतिरमृतम्' इति श्रुतेः ॥ ९ ॥

ज॥विशिनष्टीत्यर्थः। ननु कवित्वमन्येषामप्यस्ति;तत्कथं भगवतो विशेषणमित्यत आह—कविमिति। परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम्; तदेव कुत इत्यत आह—य इति। सर्वज्ञः कविशब्दार्थ इत्येतत्कुत इत्यत आह—त्वमिति। अन्येषां तु 'सर्वे विमोहितधियः' इत्यादिना सार्वज्ञाभावः प्रमितः। ननु धाता विरिञ्चोऽपि प्रसिद्धः, तत्कथमेतद्भगवतो विशेषणमित्यत आह—धातारमिति। कुतोऽयमर्थ इत्यत आह—डुधाञिति। तृचः कर्तृवाचित्वं प्रसिद्धमेव। परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणमित्यत आह—धातेति। विधाता कर्ता। परमा संदृक् परमज्ञानरूपः। सर्वस्य धातारमित्येतत्। भगवत एव, नान्येषामित्यत्र प्रमाणमाह—ब्रह्मेति। तेन भगवता आदिष्टं- दत्तं फलं सुखं यस्यां सा तथोक्ता। मोक्षधर्मे कथितमिति शेषः। 'तमसः परस्तात्' इत्येतत् आदित्यादिसाधारणम्, इत्यतो द्वेधा सप्रमाणकं व्याचष्टे—तमस इति। स्थितमिति शेषोक्तिः। अप्राकृतविग्रहमित्यर्थः ॥ ९ ॥

ता॥'यस्यादित्यो भामुपयुज्य भाति' 'तस्य भासा सर्वमिदं विभाति' 'तं देवा ज्योतिषां ज्योतिः' इत्यादिषु निरतिशयदीप्तियोगस्सिद्धः।'आदित्यवर्णं तमसः परस्तात्' इति श्रुतिखण्डस्यात्र निबन्धः—'तम आसीत्''तमसस्तन्महिनाजायतैकं' 'यदा तमः' इत्यादिश्रुत्यन्तरोपलक्षणार्थः। तेन 'तमसः' इति

प्र-पा॥१. ऋग्वेदे ॥

२ मुण्डकोप २-२-११ ॥ 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'॥ 'ज्योतिषा ज्योतिः' इति पूर्वमुक्तं ज्योतिषा ज्योतिष्ट्वं प्रपञ्चयति——न तत्रेत्यादिना । तस्मिन् दीप्यमाने नैतेषां सूर्यादीनां दीप्तिरस्तीत्यर्थः । ननु अतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने तद्भासा च जगति भासमाने 'न तत्र सूर्यो भाति' इति प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राह-तमेवेति । इदं जगद्भासकमादित्यादीनां परिदृश्यमानं रूपं न नैजम्, किन्तु परमात्मदत्तं तदीयमेव तेजः। तस्य भासा सर्वमिदं विभाति-सर्वप्रपञ्चभासकस्यापि सूर्यादितेजसस्तद्दत्तत्वेन स्वकीयत्वाभावात् इति भावः ॥

३. बृह ६-४-१६ ॥ 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते । तं देवा ज्योतिषा ज्योतिरायुर्होपासतेऽमृतम्' ॥ यस्मात्-भूतभव्येशानात् परमात्मनः, अर्वाक्-तदन्यविषय एवेति यावत्। कालात्मा संवत्सर स्वावयवैरहोभिः परिवर्तते - परिच्छेदकत्वेन वर्तते। य आत्मा संवत्सरमासादिलक्षणकालपरिच्छेदातीत इत्यर्थः । ज्योतिषा ज्योतिः - प्रकाशकानां प्रकाशकम् । अमृतम्-कालापरिच्छिन्नम्, आयुः-सर्वप्राणिप्राणनहेतुभूतम्, तं देवा उपासते । देवोपास्यत्वन्तु तस्यैवेत्यर्थः ॥ ४. श्वे. ३-८ ॥

५. यजुषि. २-अष्टके. ७-प्रश्न. ९-अनु; ऋग्वेदे च. ७-अष्ट.७-अध्या. १०-खण्ड.११-अनु.७.वा। 'नासदासीत् नो सदासीत् तदानीं तम आसीत् तमसा गूढमग्रे प्रकेतम्' सेयं श्रुतिः मनुना प्रथमाध्याये 'आसीदिदं तमो भूतम्' इत्यारभ्य सप्तभिः श्लोकैरुपबृंहिता । तच्च पूर्वमेव व्याख्यातम् ॥

६. यजुषि २-अष्ट. ४-प्रश्न. ९-अनु ॥

७ श्वेताश्वतरोपनिषदि. ४-१८ ॥ 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः; तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी । शब्दार्थः स्पष्टः । विचारार्थो विस्तरेण श्रुतप्रकाशिका(१-४-२९.)अथर्वशिखाविलासादिषु द्रष्टव्यः ॥

**शं॥स्थैर्यलक्षणं योगबलं, तेन च युक्तः इत्यर्थः, पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं ततः**

**आ॥वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह विशेषतः—प्रयाणकाल इति । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसंपूर्णानां भवत्येव मुक्तिः;तद्वतां त्वीषज्ज्ञानाद्यसंपूर्णानामपि निपुणानां तद्बलात्कथंचिद्भवतीति विशेषः । उक्तं च भागवते—'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वापुरकुण्ठधिष्ण्यम् ॥ तथापरे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्। त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते' इति । 'ये तु तद्भा-**

ज॥उत्तरश्लोकोक्तं सर्वं सर्वोच्चिक्रमिषुसाधारणमिति प्रतीतिनिरासार्थमाह—**वायुजयादी**ति । साधका द्विविधाः, भक्त्यादिप्रधाना वायुजयादिप्रधानाश्चेति; अतो विशेषण——**विशेषत** इति। अनेन भक्त्यादीनां साधारण्यमाह । ननु च 'अनुस्मरेद्यः स तं परं पुरुषमुपैति' इत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वम्?, उच्यते—एकस्मिन्नपि वाक्ये 'योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्य' इत्येतन्न सर्वविषयमित्येतावन्मात्रमत्र प्रतिपाद्यते; यथा 'प्रातरुत्थाय' इति श्रुतौ 'न भृशं वदेत्' इत्यादिकं किञ्चित्साधारणं, किञ्चिदसाधारणम् । कुतोऽस्यासाधारण्यं कल्प्यत इत्यत आह—**वायुजयादी**ति । अतो न तत्सर्वसाधारणमिति शेषः । तर्हि को विशेषोऽन्येषाम्, येन वायुजयादिक्लेशमधिकमनुभवन्तीत्यत आह

रा॥**तमेवंभूतमहरहरभ्यस्यमानभक्तियुक्तयोगबलेनारूढसंस्कारतया अचलेन मनसा प्रयाणकाले भ्रुवोर्मध्ये प्राणमावेश्य—सस्थाप्य, तत्र भ्रूमध्ये दिव्यं पुरुषं योऽनुस्मरेत्; स तमेवोपैति—तद्भावं याति, तत्समानैश्वर्यो भवतीत्यर्थः ॥ ९. १० ॥**

**ता**॥सर्वकारणभूततमोद्रव्यविवक्षा। 'तमसः परस्तात्'इत्यनेन फलितमप्राकृतत्वम्;तत एवचाकर्माधीनत्वं, नित्यत्वं, निरवद्यत्वमित्यादि सूचितम्।एतच्छ्लोकच्छायश्च मानवश्श्लोकः '[1]प्रशासितार सर्वेषामणीयांसमणीयसाम्। रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्'इति । अनुकूलाना हितरमणीयत्वाद्याकारेण हिरण्यवर्णत्वरुक्माभत्वादिव्यपदेशः।प्रतिकूलदुष्प्रेक्षत्वप्रकाशातिरेकादिविवक्षया आदित्यवर्णत्वाद्युक्तिः। '[2]दिवि सूर्यसहस्रस्य' इत्यादिच वक्ष्यति।एतेनादित्यशब्दस्य नित्यचैतन्यप्रकाशपरत्व, तमश्शब्दस्यचाज्ञानविषयत्वं परोक्तं निरस्तम्। श्लोकद्वयस्यान्वयं दर्शयति—**तमेवंभूत**मित्यादिना। 'भक्त्या युक्तो योग बलेन' इति पृथङ्निर्देशात्परोक्तप्राणजयबलादिपृथगर्थताप्रतीतिस्स्यादिति तदपाकरणाय विशिष्टैकार्थतां दर्शयितुं—**भक्तियुक्तयोगबले**नेत्युक्तम् । मनसोऽचलत्वे हेतुरिदम् ; तस्य चावान्तरव्यापारः योग्यपर्याययुक्तशब्देन विवक्षित इत्याह—**आरूढसंस्कारत**येति। 'आवेश्य' इत्यनेन योगप्रकरणेषूक्तं निश्चलावस्थापनं विवक्षितमित्याह—**संस्थाप्ये**ति । अत्र पुरुषध्यानस्यापि भ्रूमध्यमेव देशः, देशान्तरानभिधानाद्योगप्रकरणान्तरेषूपदेशाच्च तत्सिद्धेरिति विभाव्योक्तं—**तत्र भ्रूमध्य**इति। तमेवंभूतं दिव्यं पुरुषम् इत्यन्वयः।'[3]तंतमेवैति' इत्यवधारणदर्शनात् 'स तं परं पुरुषम्' इत्यत्रापि तम् इतीतरव्यवच्छेदपरमित्यभिप्रायेणाह—**सतमेवोपैती**ति । '[4]यः प्रयाति स मद्भावं याति' इति प्रक्रान्तप्रकार एवात्र विवक्षित इति दर्शयति—**तद्भावंयाती**ति । भावप्रधानोऽत्र निर्देश इति भावः । तत्र तादात्म्यादिभ्रमं व्युदस्यति—**तत्समानैश्वर्यो भवतीत्यर्थ**इति।परमसाम्यापत्तिव्यवच्छेदाय समानैश्वर्य इत्युक्तम्। एतेन

**प्र-पा**॥१.मनु.१२-१२२.प्रशासितारमिति॥प्रशासितारम्-नियन्तारम्। 'एतस्य वा अक्षरस्य प्रशासने'इति श्रुतेः। अणीयसाम् अणीयांसं-सर्वात्मत्वात्,। 'अणोरणीयान्महतो महीयान्' इति श्रुतेः। रुक्माभम्-सुवर्णाभम्। 'अशब्दमस्पर्शमरूपम्' इत्यादिरूपनिषेधस्तु प्राकृतरूपनिषेधपरो मन्तव्यः।'सत्त्वादयो न सन्तीशे यत्रच प्राकृता गुणा.' 'विना हेयगुणादिभि'’इति श्रीविष्णुपुराणोक्तेः। 'आदित्यवर्णम्' इत्यादिश्रुतेश्च । स्वप्नधीगम्यं-स्वप्नधीसदृशज्ञानग्राह्यम् । यथा स्वप्नधी चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यते । एवमात्मधीरापि । 'नैवासौ चक्षुषा ग्राह्यो नच शब्दैरपीन्द्रियैः।मनसा तु विशुद्धेन गृह्यते सूक्ष्मदर्शिभिः' इति व्यासस्मृते', 'मनोमयः' इति श्रुतेश्च । तं पर पुरुष-श्रीमन्नारायणम् । पुरुषशब्दस्य नारायणपरत्वमेव स्थापितं श्रुतप्रकाशिकायाम् (१-१-२४) तत्र द्रष्टव्यम् । विद्यात् - अनुचिन्तयेदित्यर्थः। प्रशासितारम्-'अनुशासितारम्। अणीयांसमणीयसाम्-अणोरणीयांसम् । रुक्माभम्-आदित्यवर्णम् । स्वप्नधीगम्यम् अचिन्त्यरूपम् । पुरुषम्-धातारं, कविं, पुराणमिति । विद्यात्-समनुस्मरेत् । इति ॥ २. गी. ११-१२॥ ३.गी ८-६॥ ४.गी. ८-५ ॥

**शं॥ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोः मध्ये प्राणम् आवेश्य स्थापयित्वा सम्यक् अप्रमत्तः सन्,सः एवं विद्वान् योगी 'कविं पुराणम्'इत्यादिलक्षणं तं परं परतरं पुरुषम्**

आ॥**विता लोका एकान्तित्वं समाश्रिताः। एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत'इति च मोक्षधर्मे । 'संपूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः । नियमेन तथापीरजयादियुतयो-**

ज॥—**तद्वतांत्विति** । **निपुणानां**, वायुजयादौ। **कथञ्चित्**-अल्पेत्यर्थः। किञ्चिच्छीघ्रं चेत्यपि ग्राह्यम्। अत्र प्रमाणान्याह—**उक्तमिति** । **यथा**-यथार्थं बोधम् । धिष्ण्यं-मन्दिरम् । इन्द्रियं त्वां विशन्त्येव न

रा॥अथ कैवल्यार्थिनां स्मरणप्रकारमाह—

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥** ११

यदक्षरम् - अस्थूलत्वादिगुणकं वेदविदो वदन्ति,वीतरागाश्च यतयो यदक्षरं विशन्ति, यदक्षरं प्राप्तुमिच्छन्तो ब्रह्मचर्यं चरन्ति,

ता॥'कविम्' इत्यादिभिस्सर्वज्ञत्वादयो गुणाः ऐश्वर्यप्रदत्वार्थमनुसन्धेयतयोक्ताः, नतु प्राप्यत्वार्थमिति फलितम्। एवमन्तिमकालस्मर्तव्यतया निर्दिष्ट एवाकारः प्रागपि ध्येयतयोक्त इति मन्तव्यम् । एवमुत्तरत्रापि ॥ १० ॥

अथ मन्दप्रयोजनोक्तपरव्याख्याप्रतिक्षेपाय 'यदक्षरम्' इत्यादिश्लोकत्रयस्यार्थमाह—अथेति । स्मरणशब्दोऽत्रोपासनस्यान्तिमप्रत्ययस्य च संग्राहकः, उभयोरपि स्मृतिविशेषत्वात् । 'नावेदविन्मनुते तं बृहन्तम्' इत्युक्तप्रमाणान्तरागोचरत्वपरेण 'वेदविदो वदन्ति' इत्यनेन सूचितवेदोक्तप्रकारकथनम्-अस्थूलत्वादिगुणकमिति । 'अस्थूलमनण्वह्रस्वम्' इत्यादिश्रुतिरिह विवक्षिता । ब्रह्मचर्यम्—ऊ-

प्र-पा ॥ १ मन्दप्रयोजनोत्तरव्याख्यान. प॥

२. यजुषि, काठके. ३-प्र. ५५-७ ॥

३.बृह.५-८-७॥गार्गीब्राह्मणे'सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं नतदश्नाति किञ्चन नतदश्नाति कश्चन'॥हे गार्गि तदेतत् सर्वोसूपनिषत्सु प्रसिद्धम्।अश्नुते-व्याप्नोतीति वा,नक्षरतीति वाऽक्षरम्-ब्रह्मब्राह्मणा.-ब्रह्मविदः, अभिवदन्ति।अत्र ब्राह्मणाभिवदनकथनेन'नाहं किञ्चित् विप्रतिपन्नं वक्ष्यामि'इति हृदयम्।अस्थूलं-स्थूलभिन्नम्। तर्हि किमणु इत्यत्राह - अनण्विति । एव मुत्तरत्रापि द्रष्टव्यम्।अमात्रम्-मात्रा-इन्द्रियाणि;यद्वा, मात्रा परिच्छेदः, तद्रहितमित्यर्थः । अनन्तरम्, अबाह्यम्-स्वाव्याप्तदेशशून्यमित्यर्थः।न तदश्नाति किचन-तदक्षरं कर्तृ किञ्चिदपि नाश्नाति । अवाप्तसमस्तकामतया भक्ष्यनिरपेक्षमित्यर्थः. । तत्स्वयं न कस्यापि भक्ष्यमित्याह—न तदश्नाति कश्चनेति । तत् ब्रह्म-कर्म ॥

शां॥ उपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥ १० ॥

पुनरपि वक्ष्यमाणेन उपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्य अभिधानं करोति भगवान्—

यत् अक्षरं न क्षरतीति अक्षरं अविनाशि वेदविदः वेदार्थज्ञाः वदन्ति, 'एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुतेः, सर्वविशेषनिवर्तकत्वेन अभिवदन्ति 'अस्थूलमनणु' इत्यादि । किञ्च—विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यत् यतयः यतनशीलाः संन्यासिनः वीतरागाः वीतः रागः येभ्यः ते वीतरागाः । यत् च अक्षरम् इच्छन्तः—'ज्ञातुम्' इति वाक्यशेषः । ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति, तत् ते पदं

आ॥गिनाम् ॥ 'वश्यत्वान्मनसस्त्वीषत्पूर्वमप्याप्यते ध्रुवम्' इति च व्यासयोगे ॥ १० ॥

तदेव ध्येयं प्रपञ्चयति—'यदक्षरम्' इत्यादिना । प्राप्यते मुमुक्षुभिरिति पदम्

ज॥तु त इवाञ्जसा । तद्भाविता.-तेन भगवता वासिताः। एतन्मुक्तिलक्षणं फलम्। तेजो नारायणाख्यम्। ईरः-समीरः । ध्रुवं ब्रह्माप्यते तैः ॥ १० ॥

क्रममुक्त्यर्थमोङ्कारोपासनमुच्यत इत्यन्यथाव्याख्यानमपाकर्तुमाह—तदेवेति । वायुजययुतानां मरणकाले कर्तव्यमेव । 'मामनुस्मरन्' इत्यादिविरोधादिति भावः । ननु पदत्वं शब्दस्यैवोङ्कारस्य

रा॥तत्पदं संग्रहेण ते प्रवक्ष्ये—पद्यते गम्यते चेतसेति पदम्; तत् निखिलवेदान्तवेद्यं मत्स्वरूपमक्षरं यथोपास्यं, तथा संक्षेपेण प्रवक्ष्यामीत्यर्थः ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणम् आस्थितो योगधारणाम् ॥ १२**

ता॥र्ध्वरेतस्त्वादिकम्।यद्वा 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् अथ यन्मौनमित्याचक्षते अथ यत्सत्रायणमित्याचक्षते अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्' इति श्रुतेः ब्रह्मप्राप्त्यर्था या काचिदपि चर्या ब्रह्मचर्यम्।वीतरागा यतय एव 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इत्यत्रापि कर्तारः। एतेन फलोपाययोः प्रदर्शनम्। पदशब्दस्यात्र रूढार्थानुपपत्तेरुपपन्नं योगमाह—**पद्यत** इति। अत्र पदशब्देन ज्ञानविषयत्वमुखेन उपास्यत्वादिकमभिप्रेतमित्याह—**गम्यते चेतसे**ति। यत्तच्छब्दाभिप्रेतां प्रसिद्धिमाह—**निखिले**ति।अक्षरशब्दस्यात्र विकारादिदोषरहितपरमात्मविषयत्वात्—**मत्स्वरूप**मित्युक्तम्।स्वासाधारणं रूपमित्यर्थः। अक्षररूपपरमात्मोपासनमत्राक्षरस्वरूपजीवात्मप्राप्त्यर्थम् ॥ ११ ॥

प्र-पा॥१.छा-८-५-१ 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् ॥१॥ अथ यत्सत्रायण ..ते...अथ यन्मौन...ते ॥ २ ॥ अथ यदरण्यायनमित्या ब्रह्मचर्यमेव तत्' ॥३॥ यज्ञेष्टसत्रायणमौनानाशकायनारण्यायनाख्यानि कर्माणि ब्रह्मचर्यसाध्यत्वात् ब्रह्मलोकसाधनत्वेन प्रस्तुत्य 'तद्य एवैता ब्रह्मलोक ब्रह्मचर्येणानुविन्दन्ति' इति प्राक् निर्दिष्टं ब्रह्मचर्यमेवेति स्तौति- अथ यज्ञ इत्याचक्षते इत्यादिना।लोके यत् पाकयज्ञहविर्यज्ञादिकं कर्म वैदिकाः यज्ञ इत्याचक्षते, तत् ब्रह्मचर्यसाध्यत्वात् ब्रह्मचर्यमेवेत्यर्थः। ननु ब्रह्मप्राप्तिसाधनस्य कथं ब्रह्मलोकसाधनब्रह्मचर्यसाधनत्वम्; नहि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञो द्वारमित्याशङ्क्य ब्रह्मचर्यसाध्यस्य ब्रह्मप्राप्तिसाधनस्य ज्ञानस्य यज्ञरूपत्वात् ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञसाधनत्वमस्तीति प्रतिपादयितुमेकशब्दरूपितत्वेन तयोरैक्यं सम्पादयति- ब्रह्मचर्येण ह्येष यो ज्ञाता तं विन्दत इति। ब्रह्मचर्यपुरस्सरब्रह्मज्ञानवान् हि तं ब्रह्मलोकं विन्दत इत्यर्थः। अत्र 'यो ज्ञाता ब्रह्मचर्येण' इत्युक्त्या 'यो ज्ञाता' इत्यस्य ब्रह्मचर्यसाध्यत्वं प्रतीयते। 'यो ज्ञाता' इति शब्दैकदेशस्य, 'योज्ञ' शब्दस्य, 'यज्ञ' शब्दस्यच साम्यकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूला यज्ञस्यापि ब्रह्मचर्यसाध्यतेति भाव। एवमुत्तरत्रापि द्रष्टव्यम्।अथ यत् सत्रायणम् इति - अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विषयान्तरविमुखीकरणस्य सच्छब्दितात्मत्राणस्य गवामयनादिसत्रस्य च सत्रायणरूपैकशब्दरूपितत्वेनाभेदाध्यवसायः। अथ यदरण्यायनमिति - इतः भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोके अरण्यसंज्ञकार्णवौ स्तः, अतश्चारण्यायनस्य ब्रह्मलोकस्य च अरण्यवासस्य च अरण्यायनशब्दकृतोऽभेदः। भुवं चतुर्मुखलोकान्तान्तरिक्षलोकञ्च अपेक्ष्य भगवल्लोकस्य तृतीयत्वम्। न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम्, प्रश्नोपनिषदि (५-प्रश्ने, ४-वा) चतुर्मुखलोकस्याप्यन्तरिक्षलोककोटौ निवेशितत्वात्।

शं॥तत् अक्षराख्यं ते तव पदं पदनीयं संग्रहेण संग्रहः संक्षेपः तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥

'स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति। तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत...स सामभिरु-

आ॥'पद गतौ' इति धातोः;'तद्विष्णोः परमं पदम्' इति च श्रुतेश्च। 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः' इति वचनान्नारदीये ॥ ११ ॥

ज॥संभवति, न विष्णोरित्यत आह—**प्राप्यत**इति।कर्मण्यकारप्रत्ययः।पदं स्वरूपमिति प्रयोगप्रदर्शनम्॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥** १३

रा॥**सर्वाणि श्रोत्रादीनीन्द्रियाणि ज्ञानद्वारभूतानि संयम्य—स्वव्यापारेभ्यो विनिवर्त्य हृदयकमलनिविष्टे मय्यक्षरे मनो निरुध्य योगाख्यां धारणामास्थितः मय्येव निश्चलां स्थितिमास्थितः ओमित्येकाक्षरं ब्रह्म मद्वाचकं व्याहरन् वाच्यं मामनुस्मरन् आत्मनः प्राणं**

ता॥'सर्वद्वाराणि संयम्य'इत्यत्र नवद्वारप्रतीतिनिरासाय प्रत्याहारविषयताद्योतनाय चाह—**सर्वाणि श्रोत्रादीनी**ति । द्वारानुबन्धरहितस्पर्शनादीन्द्रियाणां कथं द्वारशब्दार्थतेत्यत्रोक्तं—**ज्ञानद्वारभूतानी**ति। संयमनमत्र शब्दादिविषयौन्मुख्यनिवर्तनमित्यभिप्रायेणाह—**स्वव्यापारेभ्यो विनिवर्त्ये**ति। 'मनो हृदि निरुध्यच' इत्यत्र हृन्मात्रस्य ध्येयतानुपपन्नेत्यत्रोक्त—**हृदयकमलनिविष्टे मय्यक्षर**इति। हृच्छब्दोऽत्र तत्रत्यपुरुषलक्षकः;अन्यथा 'मामनुस्मरन्' इत्यनन्तरोक्तिर्न घटेतेति भावः। अर्थक्रमेण बलवता दुर्बलस्य पाठक्रमस्य बाधमभिप्रेत्य—'मनो हृदि निरुध्य'इत्यस्यानन्तरम् 'आस्थितो योगधारणाम्'इत्यादिकं व्याख्यातम् । प्रत्याहारानन्तरपठितधारणाव्यवच्छेदायाह— **योगाख्यां धारणा**मिति । षष्ठीसमासात्समानाधिकरणसमासस्य ग्राह्यत्वं निषादस्थपतिन्यायसिद्धम् ।धारणाशब्दाभिप्रेतमाह—**मय्येव निश्चलां स्थितिमि**ति।प्रणवस्य ब्रह्मप्रतिपादकत्वात्'ब्रह्म'इतिव्यपदेश इत्यभिप्रायेण—**मद्वाचकमि**त्युक्तम्। मन्त्रस्यार्थविशेषप्रकाशनमुखेनोपकारकत्वमप्यत्र ब्रह्मशब्देन प्रतिपादनाद्विवक्षितमित्यभिप्रायेण—**वाच्यं मामनुस्मरन्नि**त्युक्तम्।प्रणवस्य भगवद्वाचकत्वं योगाङ्गत्वादिक चश्रुतिस्मृत्यादिसिद्धम् । यथा कठवल्ल्यां'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं

**प्र-पा॥** १ 'स्थपतिर्निषादस्स्यात् शब्दसामर्थ्यात्' इति सूत्रं पूर्वतन्त्रे (६-१-५१)। 'एतया निषादस्थपतिं याजयेत्' इतिश्रुतिः तस्य विषय. । तत्र कि निषादाना स्थपतिरिति विग्रहेण निषादसम्बन्धिस्थपतिः प्रतीयते, उत निषादश्चासौ स्थपतिश्चेति विग्रहेण निषादाभिन्नस्थपतिः प्रतीयते? इति संशयः । षष्ठीतत्पुरुषाश्रमणे स्थपतेस्समर्थत्वात् , विद्वत्त्वात्, अग्निमत्त्वाच्च यज्ञाद्यनुष्ठानं युज्यत इति पूर्वः पक्षः । तथा सति श्रुतिगतनिषादपदस्य लक्षणापत्त्या कर्म धारयपक्ष **एव** आश्रयणीय इति। तादृशन्यायसिद्धमित्यर्थः ॥

२. कठोप. १-२-१६॥ 'सर्वे वेदा'.. ओमित्येतत्' । नचिकेतसा'अन्यत्र धर्मात् अन्यत्राधर्मात्'इति एवं पृष्टो मृत्युः 'न जायते म्रियते' इत्यादिना विस्तरेण प्रतिपिपादयिषुरिदानीं श्रोतुरादरातिशयसिद्ध्यर्थं प्राप्यवैभवं प्रकाशयन् संग्रहोक्तिम्प्रतिजानीते—सर्वे वेदाइति । 'पद्यते-गम्यते' इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची । 'समस्तहेयरहित विष्ण्वाख्यं परमं पदम्'इत्यादिवत्। यत् - 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्युत्तरत्र वक्ष्यमाणं ब्रह्मस्वरूपम्। सर्वे वेदाः साक्षात् परम्परया वा प्रतिपादयन्तीत्यर्थः । तपासि सर्वाणिच यत् वदन्ति—तपासि-'तपःप्रधाना उपरितनभागाः' इति व्यासार्यैर्व्याख्यातम् । यदिच्छन्तो ब्रह्मचर्यञ्चरन्ति —ब्रह्मचर्य-गुरुकुलवासस्त्रीसङ्गराहित्यादिलक्षणम्। यदिच्छन्तः,चरन्ति-अनुतिष्ठन्ति। तत्ते पदं सङ्ग्रहेण ब्रवीमि-संग्राहकेण शब्देन वक्ष्यामीत्यर्थः । संक्षेपेण प्रतिपादकं किमित्यत आह—ओमित्येतत् इति । 'ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति प्रणवस्य ब्रह्मवाचकत्वात् प्रणवावयवयोरकारमकारयोः परजीववाचितयोपेयोपेत्रोरप्युद्दिष्टत्वमस्तीति द्रष्टव्यम् । अत एवोपायस्वरूपमपि अत्राऽर्थमिति मन्तव्यम् ॥

शं॥**नीयते ब्रह्मलोकम्' इत्यादिना वचनेन, 'अन्यत्र धर्मादन्यत्राधर्मात्' इति च उपक्रम्य**

आ॥**ब्रह्मनाडीं विना यद्यन्यत्र गच्छति, तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्व-**

ज॥ननु ' मनो निरुध्य ' इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम् ; तत्किं पुनरुच्यते । मैवं, वायुसंचरणद्वाराणां नाडीनामत्र ग्रहणात् । तन्नियमनं किमर्थमित्यत आह—**ब्रह्मे**ति । इति हेतौ । इत्युक्तमिति_

ता॥सङ्ग्रहेण ब्रवीम्योमित्येतत्'इति । अत्र नाम्ना नामिनो निर्देशः। तथा 'प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्य शरवत्तन्मयो भवेत्' इति । तथा 'आत्मानमरणिं कृत्वा प्रणव चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात्पश्येद्ब्रह्माग्निगूढवत्' इति । तथा 'ओमित्येवं ध्यायथात्मानम्' इति । तथा 'यः पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत । स तेजसि सूर्ये सम्पन्नः यथा

प्र-या॥१.मुण्डकोप-२-२-४ 'प्रणवो धनु ..भवेत्'॥ 'धनुर्गृहीत्वौपनिषदं महास्त्रम्'इति पूर्वोक्त विवृणोति-प्रणव इति।'ओमित्यात्मान युञ्जीत'इति आत्मरूपशर-समर्पणहेतुत्वात् प्रणवस्य धनुष्ट्वेन रूपणम् । अप्रमत्तेन-विषयान्तरविमुखेन एकाग्रचित्तेनेति यावत् । वेद्धव्यं —वेधो हि तदेकशेषत्वेन तद्ध्यानम्। शरवत्तन्मय इति यथा लक्ष्ये निमग्नस्य शरस्य लक्ष्यापेक्षया भेदकाकारा-स्फुरणम्, एव परमात्मनि प्रणवेन समर्पितस्य प्र-त्यगात्मनः तत्साम्यलक्षणा मुक्तिमापन्नस्य ज्ञानैका-कारस्य देवत्वमनुष्यत्वादिलक्षणभेदकाकारास्फूर्तिरेव त-न्मयत्वमिति द्रष्टव्यम् ॥

२. ध्यानबिन्दूपनिषदि ॥

३.मुण्डकोप २-२-६.'अरा इव रथनाभौ संहता यत्र नाड्य. स एषोऽन्तश्चरते बहुधा जायमानः। ओमित्येवं ध्यायथाऽऽत्मानं स्वस्ति वः पाराय तमसः परस्तात्' ॥ अरा इवेति 'सन्तत सिराभिस्तु लम्बत्याको-शसन्निभम्' इत्युक्तरीत्या यत्र-हृदये, रथनाभौ-सम-र्पिता अरा इव नाड्यः-संहता', तत्र मध्ये स एष., 'तदेतदक्षरं ब्रह्म सप्राणस्तदु वाङ्मनः । तदेतत्सत्य तद-मृतं तद्वेद्धव्यं सोम्य विद्धि' इति प्रकृत आत्मा, बहुधा जायमान -'अजायमानो बहुधा विजायते' इति देवा-दीना समाश्रयणीयत्वाय तत्तज्जातीयस्वरूपसंस्थानगु-णकर्मसमन्वित., स्वीयस्वभावमजहदेव स्वेच्छया सु-रनरतिर्यगादिरूपेण बहुप्रकारेण जायमानस्सन्, चरते वर्तत इत्यर्थः । तमसः परस्तात् वर्तमानाय व. पाराय —'पारावारे परार्वाची तीरे' इति नैघण्टुकाः; प्राप्य-भूतायेति यावत्।तत्पदप्राप्तये ओमित्येवमात्मानं ध्याय-येत्यन्वयः।एव ध्यानाय प्रवृत्तेभ्यो युष्मभ्यं स्वस्ति भवतु॥

४. प्रश्नोपनिषदि. ५-प्रश्ने, ५ वा ॥ 'यः पुनरेतं त्रिमात्रेण पुरुषमीक्षते' ॥ यः पुनरिति ॥ यस्तु एकमात्रद्विमात्रत्वदशायामर्वाचीनफलसाधनेन एतनै-वाक्षरेण परमात्मानमभिध्यायति-आभिमुख्येन ध्याय-ति; निरन्तरं ध्यायतीत्यर्थः । सः-उपासकः, तेजो-मण्डले सूर्ये सङ्गतस्सन्,पादोदरः-उदरमेव पादो यस्य सः पादोदरः, सर्पः इति यावत्। यथा सर्पो जीर्णत्व-चा विनिर्मुक्तो भवति, एवं पाप्मना विनिर्मुक्तः सन् ब्रह्मलोकं - भगवल्लोक श्रीवैकुण्ठाख्यं परमं स्था-नम्, सामभिः-गीतिप्रधानैर्मन्त्रैः, उन्नीयते । स ए-तस्मात् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते— इति-यस्य हि कर्मनिमित्तं देहित्वम्, स जीवघनइत्यु-च्यत । अनेन शब्देन संसारिमण्डलमुच्यते । 'मूर्तौ घन:' इति काठिन्यशब्दितमूर्तौ घनशब्दस्य निपाति-तत्वात् देहद्वारत्वात् आत्मनि काठिन्यस्य घनशब्दो देहिपर एव। तस्मात् पर.-परिशुद्धात्मा,तस्मादपि प-रभूतम् । पुरिशयं-'पूः प्राणिन· सर्वगुहाशयस्य' इति सर्वेषु प्राणिषु अन्तरात्मतया शयानम्। पुरुषं- भगवन्तं श्रीमन्नारायणम् ईक्षत इत्यर्थः । पुरुषशब्दस्य तत्रैव मुख्यत्वं प्रपञ्चितं श्रुतप्रकाशिकाया ज्योतिरधिकरणे । अस्य प्रकरणस्यार्थो भाष्यकारैः ईक्षतिकर्माधिकरणे प्र-पञ्चितस्तत्र यथेष्टन्द्रष्टव्य. ॥

शं॥'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत् प्रतीकरूपेण वा, परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्य ओङ्कारस्य उपासन कालान्तरे मुक्तिफलम् उक्तं यत्, तदेव इहापि 'कविं पुराणमनुशासितारं''यदक्षरं वेदविदो वदन्ति'इति च उपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रति-

आ॥द्वाराणि संयम्य 'निर्गच्छंश्चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि'इत्यादिवचनाद्योगयोगे,

ज॥शेषः। अत्र प्रमाणमाह—निर्गच्छन्निति । सूर्यं गच्छति । मोक्षधर्मे चायमेवार्थ उक्त इति शेषः ।

ता॥पादोदरस्त्वचा विनिर्मुक्त एवं हैव स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकम्।स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । तथा 'वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः । स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे । स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासादेव पश्येन्निगूढवत्'इति । अत्रैव श्लोके'विष्णुं पश्येद्धृदिस्थितम्'इति योगयाज्ञवल्क्यपाठः । तथा 'कांस्यघण्टानिनादस्तु यथा लीयति शान्तये । ओङ्कारस्तु तथा योज्यश्शान्तये शान्तिमिच्छता । यस्मिन् स लीयते शब्दस्तत्परं ब्रह्म गीयते' इति । तथा 'ओं खं ब्रह्म ओं खं पुराणम्' इति । 'ओमित्येतदक्षरं ब्रह्मास्य पादाश्चत्वारो वेदाश्चतुष्पादिदमक्षरम् । पूर्वस्य मात्रा पृथिव्यकारः' इत्यारभ्य'प्रथमा रक्तपीता महद्ब्रह्मदैवत्या द्वितीया विद्युमती कृष्णा विष्णुदैवत्या तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या यावसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या'इति च। अत्र अर्धमात्राधिदैवतभूतः पुरुष एवावतीर्णावस्थो द्वितीयमात्रादैवत्वेन विष्णुरिति चोक्तः । तथा 'ओमिति ब्रह्म ओमितीदं सर्वम्' इति, 'ओङ्कारमेवेदं सर्वम्' इति । तथा 'हृदिस्था देवतास्सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यन्तिस्रो मात्राः परस्तु सः। तस्योत्तरतीश्शरो दक्षिणतः पादो य उत्तरतस्स ओङ्कारो य ओङ्कारस्स प्रणवो यः प्रणवस्स सर्वव्यापी यस्सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारन्तत्सूक्ष्म यत्सूक्ष्म तच्छुक्लं यच्छुक्लं तद्वैद्युत यद्वैद्युतं तत्परं ब्रह्म' इति। अत्र प्रकरणादिवशात्प्रत-

प्र-पा॥१. श्वेताश्व १-१३, १४

२. अत्रैव श्लोके-'स्वदेहमरणिम्'इत्यस्मिन् श्लोके । अयं श्लोकस्तु इदानीं मुद्रितयोगयाज्ञवल्क्यस्मृतौ न दृश्यते । शङ्खस्मृतौतु (७-१६-श्लो.) दृश्यते ॥

३ ॥ ४ ॥

५. अथर्वशिखोपनिषदि. 'ओमित्येतदक्षरं ब्रह्मास्य पादाश्चत्वारो पृथिव्यकारः स ऋग्भि ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः । द्वितीयान्तरिक्षं सउकारस्सयजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः । तृतीया द्यौस्समकारस्ससामभिस्सामवेदो रुद्रा आदित्या जगत्याहवनीयः।यावसानेऽस्य चतुर्थ्यर्धमात्रा स सोमलोक ओकारस्साथर्वणमन्त्रैरथर्ववेदस्संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वतीः स्मृताः। प्रथमा रक्तपीता .. दैवत्या । द्वितीया विद्युमती कृष्णा विष्णुदैवत्या । तृतीया . पुरुषदैवत्या ॥

६. तैत्ति. शिक्षा ८ १॥

७. छान्दोग्ये.२-१३-२ ॥

८. अथर्वशिरउप.२-खं ॥

---

**शं॥पस्युपायभूतस्य ओङ्कारस्य कालान्तरमुक्तिफलम् उपासनं योगधारणासहितं वक्तव्यम्, प्रसक्तानुप्रसक्तं च यत्किञ्चित् ,इत्येवमर्थः उत्तरो ग्रन्थ आरभ्यते—सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि उपलब्धौ, तानि सर्वाणि संयम्य संयमनं कृत्वा मनः हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निष्प्रचारम् आपाद्य, तत्र वशीकृतेन मनसा हृदयात् ऊर्ध्वगामिन्या नाड्या ऊर्ध्वम् आरुह्य मूर्ध्नि आधाय आत्मनः प्राणम् आस्थितः प्रवृत्तः योगधारणां धारयितुम् ॥ १२ ॥**

**तत्रैव च धारयन्—ओमिति एकाक्षरं ब्रह्म ब्रह्मणः अभिधानभूतं ओङ्कारं व्याहरन्**

---

**आ॥मोक्षधर्मे च।हृदि-नारायणे—'ह्रियते त्वया जगद्यस्माद्धृदित्येवं प्रभाष्यसे' इति पाद्मे । नहि मूर्धनि प्राणे स्थिते हृदि मनसः स्थितिः संभवति,'यत्र प्राणो मनस्तत्र तत्र जीवः पर-**

---

ज॥हृदीत्यस्य प्रसिद्धार्थतानिरासार्थमाह—**हृदी**ति। हरतेः 'क्विप् च'इति क्विप् । प्रसिद्धार्थं एव किं न स्यादित्यत आह—**नही**ति । कुतो न सम्भवतीत्यत आह—**यत्रे**ति । आदौ हृदि निरुध्येत्यध्याहारो-

ता॥र्दनविद्यावदन्तरितं शासनमनुसन्धेयम्।मुमुक्षोरुत्क्रमणप्रकरणे च प्रणवश्श्रूयते 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वामीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति एतद्वै खलु लोकद्वारं विदुषा प्रपदन निरोधोऽविदुषां तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासा मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति । महाभारते च महेश्वरवचनम् 'ओमित्येव सदा विप्राः पठध्व ध्यात केशवम्' इति । आह च भगवान्याज्ञवल्क्यः — 'देवतायाः परायाश्च ह्यालम्बः प्रणवस्स्मृतः । कश्चिदाराधनाकामो विष्णोर्भक्त्या करोति वै । तदाराधनसान्निध्ये प्रतिमा व्यञ्जिकां यथा । धातुद्रव्यादिपाषाणैः कृत्वा भावं निवेशयेत् । श्रद्धाभक्त्यादराद्यैश्च तस्य देवः प्रसीदति । ओङ्कारेण तथा चात्मा ह्युपास्ते स प्रसीदति । सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च । मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् । ओमित्येकाक्षरं ब्रह्म व्याहारन्मामनुस्मरन् । यः प्रयाति त्यजन् देह स याति परमां गतिम्। य एतं प्रणवेनाद्यमक्षरं प्रतिपद्यते । ततोऽक्षरेण वेदेन वेद्यं ब्रह्माधिगच्छति । एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते। अदृष्टविग्रहो देवो भावग्राह्यो निरामयः। तस्योङ्कारः स्मृतं नाम तेनाहूतः प्रसीदति । तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परः । ब्रह्मोङ्कारविधानेन तत्त्वेन प्रतिपद्यते' इति।अत्र 'सर्वद्वाराणि' इत्यादिश्लोकयोर्भगवद्वाक्यतया प्रसिद्धयोरुदाहरणात् 'माम्' इति निर्देशस्तद्विषयः । पुनश्चात्र हैरण्यगर्भादिसिद्धान्तेषु प्रणवार्थं प्रपञ्च्यान्तेऽप्याह—' त्रिरात्मा त्रिस्वभावश्च तथा त्रिव्यूह एव च । पञ्चरात्रे तथा ह्येष भगवद्वाचकः स्मृतः । बलं वीर्यं तथा तेजस्त्रिरात्मेति च संज्ञितः। ज्ञानैश्वर्ये तथा शक्तिस्त्रिस्वभाव इति स्मृतः । सङ्कर्षणोऽथ प्रद्युम्नो ह्यनिरुद्धस्तथैव च । त्रिव्यूह इति

प्र-पा॥१.छा-८-६ ५, अथ यत्रैतत् अस्माच्छरीरात्. ...उत्क्रमणे भवन्तीति । सओमिति-सः-विद्वान्,ओं-'ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' 'तस्योदितिनाम' इति प्रमाणप्रसिद्धं परमात्मनाम,आह-कीर्तयति । कीर्तयन्नेव, मीयते- प्रमीयते च, मरणकाले तस्य भगवन्नामस्मरणन्न भवति । यद्वा एतैराश्मिभिः उन्मीयते - उन्नीयतेच, एको हशब्दोऽवधारणार्थः । स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति - मनोवेगेनादित्यं गच्छतीत्यर्थः । नच 'यावत् क्षिप्येत् मनस्तावदादित्यं गच्छति' इति त्वरावचनेन रश्म्यनुसारमार्गस्य मार्गान्तरवैलक्षण्यप्रतीतेः मार्गभेद. शङ्क्य । 'अर्चिरादिना तत्प्रथिते.' इति अधिकरणे नानाशाखासु तस्यैव मार्गस्य प्रथितेः. प्रत्यभिज्ञानात् अर्चिरादिरेक एव मार्गः। अतोऽर्चिरादिनैव मार्गेण विद्वान् गच्छति' इति समर्थितत्वात् 'स यावत् क्षिप्येत् मनः' इति त्वरावचनस्य 'काश्मीरापेक्षया मागधान् क्षिप्रं गच्छति' इतिवत् गन्तव्यस्वर्गाद्यपेक्षया आदित्यगमनस्य शैघ्र्येणाप्युपपत्तेर्नदोषः । एतद्वै खलु लोकद्वारं विदुषाम्प्रपदनं निरोधोऽविदुषा - विदुषा ब्रह्मलोकस्य द्वारं, प्रपदनं प्रपद्यते अनेनेति प्रपदनम्प्राप्तिसाधनम् । य आदित्यः, अविदुषाञ्च निरोधः-निरोधकः । अविद्वांसो हि सूर्यमण्डलभेदासामर्थ्यात् न गन्तुं शक्नुवन्तीत्यर्थः। तदेष श्लोकः-तस्मिन् विषये एष वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः । शतञ्चैकाचेति-हृदयस्य प्रधाननाड्य. शतञ्चैकाच सन्ति । तासाम्मध्ये एषा सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभिनिस्सृता। तया-ऊर्ध्वनाड्या 'ऊर्ध्वं-ब्रह्मलोकम्, श्रीवैकुण्ठम्, आयन् - गच्छन्, अमृतत्वमेति- देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्वस्वरूपाविर्भावलक्षणाम्मुक्तिम्प्राप्नोति। अन्याः नाड्यः विष्वक् उत्क्रमणे नानाविधसंसारमार्गोत्क्रमणायोपयुज्यन्ते । विष्वक्-वितता नाड्योऽन्यात्क्रमणे उपयुज्यन्ते' इतिश्रुतप्रकाशिकागुरुवर्यैर्व्याख्यातम् ॥

२. हरिवंशे. विष्णुपर्वणि १३३-अ.१०. 'ओमित्येवं केशवम् । ततो न (व) श्श्रेयसः प्राप्तिर्भविष्यति न संशयः ॥

३. योगयाज्ञवल्क्यस्मृतौ.॥

४ ॥ ५ ॥

शं॥उच्चारयन्,तदर्थभूतं माम् ईश्वरम् अनुस्मरन् अनुचिन्तयन् यः प्रयाति म्रियते त्यजन्

ता॥निर्दिष्ट ओङ्कारो विष्णुरव्ययः।भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा।व्यक्ताव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा' इति । यच्चात्र हैरण्यगर्भकापिलावान्तरतपस्सनत्कुमारब्रह्मिष्ठपाशुपताख्येषु सिद्धान्तेष्वर्थभेदवर्णनं, तदपि तत्तदर्थविशेषान्तरितपरमपुरुषपर्यवसानमभिप्रेत्येति मन्तव्यम् । अत एव विष्णुप्रतिपादकतयान्तकाले स्मर्तव्यत्वेनोपसंह्रियते—'ओङ्कारं विपुलमचिन्त्यमप्रमेयं सूक्ष्माख्यं ध्रुवमचरं च यत्पुराणम्। तद्विष्णोः पदमपि पद्मज प्रसूतं देहान्ते मम मनसि स्थितिं करोतु' इति। प्रणवेनैवात्र भगवदर्चनमुच्यते—'तल्लिङ्गैरर्चयेन्मन्त्रैस्सर्वान् देवान् समाहितः । नमस्कारेण पुष्पाणि विन्यसेत्तु यथाक्रमम्। आवाहनादिकं कर्म यत्र सूक्तं मया त्विह । तत्सर्वं प्रणवेनैव कर्तव्यं चक्रपाणये । दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् । विष्णुर्ब्रह्मा च रुद्रश्च विष्णुरेव दिवाकरः । तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात्' इति । तथा परमपुरुषसाक्षात्कारकारणतया चात्र प्रणवोपासनप्रकार उच्यते । 'ओम्भूर्भुवस्सुवर्महर्जनस्तपस्सत्यम्' इति वैदिकम् । एतदुच्चार्य वै ब्रह्म परे व्योम्नि नियोजयेत् । हृदयेऽग्निश्च वायुश्च जीवो यस्समुदाहृतः । ओङ्कारपद्मनालेतु उद्धृत्योपरि योजयेत् । अप्राणाच्छून्यभूतात्तु चेतोऽङ्गं जीवसञ्ज्ञितम् । जायते तु यतस्तस्मात्पुनस्तत्र निवेशयेत् । घण्टाशब्दवदोङ्कारमुपासीत समाहितः । पुरुषं निर्मलं शुभ्रं पश्येद्वै नात्र संशयः' इति । योगानुशासनसूत्रं च 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। तस्य वाचकः प्रणवः'इति। अतः प्रणवस्य

---

प्र-पा ॥ १ ॥ २ ॥
३ ॥

४.पातञ्जलयोगसूत्रे.१-पा 'क्लेशकर्म...ईश्वर.' ॥ २४॥ तस्य प्रणवः ॥ २७ ॥ अविद्यादय -क्लेशाः। कुशलाकुशलानि-कर्माणि । तत्फलं - विपाक. । तदनुगुणा वासनाः-आशयाः; ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते,सहि तत्फलस्य भोक्तेति; यथा जय. पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनापरामृष्ट' स पुरुषविशेष ईश्वरः। कैवल्यम्प्राप्तास्तर्हि सन्तिच्च बहवः केवलिनः; तेहि त्रीणि बन्धनानि च्छित्त्वा कैवल्यम्प्राप्ताः। ईश्वरस्य च तत्संबन्धो न भूतो न भावी; यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य । यथावा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते, नैवमीश्वरस्य । सतु सदैव मुक्त', सदैवेश्वर इति । योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः, स किं सनिमित्त , आहोस्वित् निर्निमित्त इति।तत्र शास्त्रं निमित्तम्;शास्त्रं पुनः किंनिमित्तम्, प्रकृष्टसत्त्वनिमित्तम् । एतयोश्शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिस्सम्बन्धः। एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्तइति । तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम् । न तावत् ऐश्वर्यान्तरेण तदतिशय्यते । यदेवातिशयि स्यात्, तदेव तत्स्यात् । तस्मात् यत्र काष्ठाप्राप्तिरैश्वर्यस्य, स ईश्वरः । न च तत्समानमैश्वर्यमस्ति । कस्मात् ? द्वयोस्तुल्ययोरेकस्मिन् युगपत् कामितेऽर्थे 'नवमिदमस्तु पुराणमिदमस्तु' इति एकस्य सिद्धौ इतरस्य प्राकाम्यविघातात् ऊनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युगपत् कामितार्थप्राप्तिर्नास्ति , अर्थस्य विरुद्धत्वात् । तस्मात् यत् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्यं स ईश्वरः स च पुरुषविशेष इति॥२४॥वाच्य ईश्वरः प्रणवस्य।किमस्य संकेतकृत वाच्यवाचकत्वम् ; अथ प्रदीपप्रकाशवत् अवस्थितमिति स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः । सङ्केतस्तु ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः संकेतेनावद्योत्यते 'अयमस्य पिता,अयमस्य पुत्रः' इति । सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते।सम्प्रतिपत्तिनित्यतया नित्यश्शब्दार्थसम्बन्ध इति आगमिनः प्रतिजानते, विज्ञातवाच्यवाचकत्वस्य योगिनः ॥ २७ ॥ इति सूत्रद्वयार्थः ॥

---

**शं॥परित्यजन् देहं शरीरम् ; 'त्यजन् देहम्' इति प्रयाणविशेषणार्थं,देहत्यागेन प्रयाणम् आत्मनः न स्वरूपनाशेनेत्यर्थः । सः एवं याति गच्छति परमां प्रकृष्टां गतिम् ॥ १३ ॥**

रा॥मूर्ध्न्याधाय देहं त्यजन् यः प्रयाति;स याति परमां गतिं प्रकृतिवियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थः । *'यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्' इत्यनन्तरमेव वक्ष्यते ॥ १२, १३ ॥

एवमैश्वर्यार्थिनः कैवल्यार्थिनश्च स्वप्राप्यानुगुणं भगवदुपासनप्रकार उक्तः ; अथ ज्ञानिनो भगवदुपासनप्रकारं प्राप्तिप्रकारं चाह—

**अनन्यचेतास्सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४**

ता॥भगवद्वाचकत्वं समाध्युत्क्रमणाद्यवस्थासु तेनैव भगवदनुस्मरण च सिद्धम्।'[1]शत चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' '[2]ऊर्ध्वमेकस्थितस्तेषां यो भित्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्'इत्यादिश्रुतिस्मृत्यनुसारान्मुमुक्षोरुत्क्रमणौपयिकमिदं मूर्ध्नि प्राणाधानम्।**त्यजन् यः प्रयाती**ति—त्यक्त्वा यः प्रयातीत्यर्थः।आत्मार्थिनो ह्यात्मा गन्तव्यः ; तत्रापुनरावृत्तित्वमात्रात्परमगतित्वोक्तिरित्यभिप्रायेणाह—**प्रकृती**ति । ईदृशस्यात्मनः परमगतिशब्देन व्यपदेशो न केवलं प्रकरणवशात् ; किन्त्वस्मिन्नेवाध्याये तद्विषय एवायं प्रयोगोऽप्यस्तीत्याह—**यस्स सर्वे**ष्विति । १३ ॥

सङ्गत्यर्थमनुवदति—**एवमि**ति। अध्यायारम्भगतप्रश्नोत्तरयोस्तत्प्रसङ्गके पूर्वाध्यायान्ते चायं क्रमो न विवक्षितः, अधियज्ञान्तिमप्रत्यययोस्साधारण्येन प्रतिपादने तात्पर्यात्। इहतु प्रतिनियतार्थोपदेशरूपत्वादुत्तरोत्तरमुत्कृष्टताप्रदर्शनायैश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनः क्रमेणोक्ता इति भावः । अत्र च **एवम्** इति निर्देशात् **स्वप्राप्यानुगुणम्** इति निर्देशाच्च प्रकरणस्याधिकारित्रयविषयत्वव्यवस्थापकहेतवः प्रदर्शिताः। तथाहि—एवमत्र कैश्चिच्छङ्क्येत—ननु अत्र '[3]ते ब्रह्म तद्विदुः''[4]किं तद्ब्रह्म' '[5]अक्षरं ब्रह्म परमम्'इति ब्रह्मशब्दस्य साक्षाद्ब्रह्मविषयत्वे को बाधः, तस्यैव च सर्वात्मत्वादध्यात्मशब्देनापि तद्गतं सर्वं ग्रहीतुमुचितम् ; '[5]भूतभावोद्भवकरो विसर्गः' इत्यपि जगत्सृष्टिग्रहणं युक्तं, देवतोद्देशेन द्रव्यत्यागो वा ; सचात्र निवृत्तिलक्षणो यज्ञः; '[6]अधिभूतं क्षरो भावः' इति च अधिभवतीति व्युत्पत्तेः प्राणिजातं पुरुषश्च अधिदैवतमिति परब्रह्मावस्थाविशेषः, समष्टिपुरुषादिर्वा, अधियज्ञस्सर्वयज्ञाभिमानिनी विष्ण्वाख्या देवता, '[7]यज्ञो वै विष्णुः' इति श्रुतेः; '[8]अन्तकालेच' इत्यादिश्लोकत्रयमपि मुमुक्षोरेवान्तिमप्रत्ययमधिकृत्योक्तम्;प्रश्नश्लोकानां पूर्वाध्याये प्रस्तुताधिकारित्रयज्ञातव्योपादेयपरत्वेऽप्युपरितनाश्श्लोकाः प्रधानतया सुदुर्लभत्वेन निर्दिष्टज्ञानिपरा युक्ताः, अन्यथा '[8]मामेव स्मरन्' '[9]मामेवैष्यसि'

प्र-पा॥*गी. ८-२०,२१॥ १. छा. ८-६-६ ॥ २. याज्ञवल्क्यस्मृतौ, ३-१६७॥ ३. गी. ७-२९॥ ४.गी.८-१॥ ५. गी. ८-३॥ ६. गी. ८-४॥ ७. शतपथब्राह्मणे १ प्रपाठके, ३-ब्राह्मणे १-वा॥ 'वेवेष्टि व्याप्नोतीति व्युत्पत्त्या यज्ञएव विष्णुः। 'विष्णुर्वै यज्ञः' इति श्रुत्यन्तरात्।' इतिसायनः ॥ ८. गी. ८-५ ॥ ९. गी. ८-७ ॥

शं॥**किञ्च**—**अनन्यचेताः** न अन्यविषये चेतः यस्य सः अयम् अनन्यचेताः योगी **सततं** सर्वदा **यः मां** परमेश्वरं **स्मरति नित्यशः** । 'सततम्' इति नैरन्तर्यम् उच्यते, 'नि-

आ॥परस्तथा'इति व्यासयोगे।योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः॥१२-१३॥

ज॥दोषः । मरणवेलायामखण्डस्मृतिर्वक्तव्या ; तत्कथं धारणोच्यत इत्यत आह—**योगे**ति ॥१२-१३॥

ता॥इत्यादेर्बाधात्,अत एव‘[1]प्रयाणकाले च कथम्’‘[2]अन्तकाले च माम्’इति श्लोकयोरधिकारित्रयपरत्वेऽपि तद्विवरणेऽत्र तदैकार्थ्यं ग्राह्यमित्यपि निरस्तम्;तत्रापि चाधिकारित्रयपरत्वं न प्रतीयते,नचैश्वर्यार्थिनः परमपुरुषविषयान्तिमप्रत्ययसापेक्षतायां प्रमाणं पश्यामः; एवमुत्तरेष्वपि श्लोकेष्वेक एवाधिकारी, तद्वेद्यं चैकमेव पुनःपुनरनूद्य विशेषतो विशदीक्रियते; नच पुनरुक्तिदोषः,अभ्यासस्य ज्ञानिप्राधान्यलिङ्गत्वात्; ‘[3]संसिद्धिं परमां गताः’ ‘[4]स याति परमां गतिं’ ‘[5]तमाहुः परमां गतिम्’इत्यमीषामैकार्थ्यं च प्रतीतमपरित्याज्यम्;नच परमगन्तव्यातिरिक्ता परमसंसिद्धिः; ‘[5]तमाहुः परमां गतिम्’इति परोक्षनिर्देशश्च ‘[6]पुरुषस्सपरः पार्थ’ इतिवत्स्यात्; ‘[7]परमं पुरुषं दिव्यं’ ‘[8]स तं परं पुरुषमुपैति दिव्यं’ ‘[6]पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया’ इत्यमीषां भिन्नार्थत्वकल्पनं चायुक्तम्; परैरपि च सर्वैः प्रायश एवमैककण्ठ्येन व्याख्यातम्—इति। अत्रैवं परिहारक्रमः—‘[9]अधियज्ञोऽहमेव’इतिवदहमेव ब्रह्मेत्यनुक्तेरध्यात्मादिवदत्र ब्रह्मशब्दार्थस्याप्यर्थान्तरत्वं तावत्प्रतीतम्; नच ब्रह्मशब्दादक्षरशब्दस्य परमात्मनि रूढ्यतिशयः, येन ततस्तद्व्याख्यानं स्यात्। ‘[10]एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। येचाप्यक्षरमव्यक्तम्’ इत्यादिषु च परमात्मनोऽन्यदेवोपास्यमक्षरशब्देन प्रतीयते;‘[11]द्वे रूपे ब्रह्मणस्तस्य मूर्तञ्चामूर्तमेव च। क्षराक्षरस्वरूपे ते

**प्र·पा** ॥ १. गी. ८-२ ॥ २. गी. ८-५ ॥
३. गी ८-१५ ॥ ४. गी. ८-१३ ॥
५. गी. ८-२१ ॥ ६. गी ८-२२ ॥
७. गी. ८-८ ॥ ८. गी. ८-१० ॥
९. गी. ८-४ ॥ १०. गी. १२-१ ॥

११. वि-पु-१-२२-५५,५६॥‘द्वेरूपे . सर्वमिदं जगत्’।एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा।परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्॥द्वेरूपे इति। मूर्तञ्चामूर्तमेवच्चेति · बद्धश्च मुक्तश्चेत्यर्थः। एतद्विवृणोति—क्षराक्षरस्वरूपे इति। ज्ञानसङ्कोचात्मकक्षरणवत् असङ्कुचितज्ञानञ्चेत्यर्थः।सर्वभूतेषुच्च स्थिते-अर्हार्थे क्तः।सर्वभूतस्थित्यर्हे। सूक्ष्मतया व्यापनक्षमे इत्यर्थः। यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः; मुक्तस्यतु धर्मभूतविभुज्ञानद्वारेणेति, ‘सचानन्त्यायाकल्पते’ इति श्रुतेः। अक्षरन्तत्परम्ब्रह्मेति- तन्मुक्तस्वरूपमक्षरम्। क्षरं सर्वमिदञ्जगत्-इदं बद्धस्वरूपं क्षरमित्यर्थः। रूपत्वं विशिनष्टि- एकदेशेति। शक्तिः अपृथग्भूतं कार्योपयोगि विशेषणम्। ‘एकदेशस्थितस्य विस्तारिणी’ इति विशषणद्वयेनासङ्कीर्णस्वभावत्वमुक्तम्। अस्मिन् श्लोके ‘अखिलं जगत्’इति चिदचिदात्मकं जगदुच्यते। तुल्यन्यायत्वात् अक्षरस्यापि शक्तित्वसिद्धिः। यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः, त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात् तत्समानार्थत्वात् जगच्छब्दस्य, अखिलशब्दस्य सङ्कोचकाभावाच्च। ‘क्षरं सर्वम्’ इत्यत्र क्षरसामानाधिकरण्यमपवादः। इह तदभावात् अक्षरस्याप्यभिधानमुपपद्यते। इदंशब्दस्य प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते। नन्वत्र क्षराक्षरशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ, परब्रह्मशब्दमुख्यार्थसिद्धेः। अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात्। जगतो ज्योत्स्नास्थानीयत्वं चोपपद्यते, प्रभायाः शीर्णावयवत्वेनाग्निकार्यत्वोपपत्तेः। मैवम्;‘ब्रह्मणो रूपे’ इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात्। स च कार्यकारणयोर्ब्रह्मव्यतिरिक्तत्वाभावात्। यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते, तदा मूर्तामूर्तशब्दस्वारस्यभङ्गः। भावप्रधानत्वाविवक्षायां रूपशब्दसामानाधिकरण्यायोगः। यद्युच्यते—ब्रह्मणो द्वे रूपे - ब्रह्म हि मूर्तममूर्तञ्चेति, तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषः स्यात्। षष्ठ्यन्तब्रह्मशब्दस्य मूर्तामूर्तशब्दसामानाधिकरण्यायोगात्। किञ्च ‘सर्वभूतेषु च स्थिते’ इति चानुपपन्नम्, सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यस्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात्, कारणस्यापि कार्यादनन्यतया स्ववृत्तिप्रसङ्गाच्च। अवस्थाद्वयस्य सर्वभूतस्थितिरिति च न वाच्यम्, धर्मिपर्यन्तक्षराक्षरशब्दसामानाधिकरण्यायोगात्, तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात् अवस्थावद्वाचिजगच्छब्दब्रह्मशब्दसामानाधिकरण्यायोगाच्च, तस्मिन्सोढेऽपि कारणावस्थायाः कार्ये विद्यमानत्वायोगाच्च। शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः। उपचारतोऽपि कार्योपयोगिविशेषणं हि शक्तिशब्देन व्यपदेशमर्ह-

ता॥सर्वभूतेषु च स्थिते। अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्'इत्यादिषु चाक्षरपरब्रह्मशब्दौ परिशुद्धात्मविषयौ शारीरकभाष्ये समर्थितौ; अतोऽत्र "किं तद्ब्रह्म'इत्युक्तेऽहमेव ब्रह्मेत्यव्याख्यानात्स्वेतरविषयब्रह्मशब्दः परमशब्दविशेषिताक्षरशब्दानुगुण्याच्च प्रकृतेरीश्वराच्चान्यस्मिन् परिशुद्धात्मन्युपचाराद्वर्तते; पश्चाच्चायमेव '³अव्यक्तोऽक्षर इत्युक्तः' इति वक्ष्यते; नचासौ श्लोकः परमात्मपर इति शङ्कनीयम्, '³येचाप्यक्षरमव्यक्तं' '⁴ये त्वक्षरमनिर्देश्यं' 'क्षरश्चाक्षर एव च'इत्यादिष्विवात्रापि अक्षरशब्दस्य भगवद्व्यतिरिक्तविषयत्वप्रतीतेः, संसिद्धिशब्दश्च परमगतिशब्दनिर्दिष्टप्राप्यविलक्षणा समीचीना सिद्धिं स्वरसत उपसर्गशक्त्या व्यनक्ति, अतएव स्वभावादिशब्दा अधिकारित्रयज्ञातव्योपादेयवस्तुविशेषपरा उक्ताः। एवं स्ववाक्यपर्यालोचनया पूर्वाध्यायप्रकृतपरामर्शेन च प्रश्नप्रतिवचनवाक्यानामधिकारित्रयविषयत्वे सिद्धे तदनन्तराणामपि ग्रन्थानां यथासम्भवं सर्वविषयत्वं युक्तम्। प्रक्रान्ते चाधिकारित्रये यद्वृत्तत्रयेणानूद्यमाने कैवल्यभगवत्प्राप्तिकामयोरनन्तरं स्पष्टमभिधानात् '⁶अभ्यास' इत्यादिकं परिशेषादैश्वर्यार्थिविषयम्; यच्चैश्वर्यार्थिनां परमपुरुषविषयान्तिमप्रत्ययसापेक्षतायां प्रमाणं नास्तीति;तदपि न,श्रीमद्भागवते पुराणे ध्रुवचरिते तद्दृष्टेः—'⁷भक्तिं हरौ भगवति प्रवहन्'इत्यादिना। अतो यथोक्त एवार्थः। यद्यपि ब्रह्मपुरुषपरगत्यादिशब्दैरिह सर्वत्र परमात्मभजनतत्प्राप्त्यादिरेव प्रतीयते; तथाऽपि तावतैकाधिकारिविषयत्वं वक्तुं न युज्यते, पूर्वत्र प्रयाणकाले भ्रूमध्ये प्राणावेशस्य तत्रैव परमात्मध्यानस्य च विहितत्वादनन्तरं च हृदि ध्यानस्य मूर्ध्नि प्राणावेशस्य च तत्काल एव विधानात्; तदिदं द्वय परस्परविरुद्धं किं कालभेदाद्व्यवस्थाप्येताधिकारिभेदाद्वा?; तत्र न तावत्कालभेदश्श्रुतः; प्रत्युत कालैक्यमेव श्रूयते; अतः परिशेषात्सिद्धोऽधिकारिभेदः। किञ्च '⁸शतंचैकाच' इत्यादिभिर्मूर्धन्यनाड्या निष्क्रमणं मोक्षहेतुः, अन्याभिर्निष्क्रमणं फलान्तरहेतुरित्यवगते प्रयाणकाले भ्रूमध्ये मूर्ध्नि च प्राणावेशस्योत्क्रम-

---

प्र-पा॥ ति, कार्योपयोगिविशेषणत्वस्य सामान्यात्। शक्तिर्हि शक्तमप्रत्यपृथग्भूतङ्कार्योपयोगिविशेषणम्। कार्यन्तु न कारणस्यापृथग्भूतं विशेषणम्, कार्योपयोगि च भवति। कार्यकारणयोरनन्यत्वात्, स्वस्य स्वयमेव विशेषणत्वायोगात्, कार्यत्वं विशेषणमिति चेत्-तथापि धर्मिवाचिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधिकरण्यमुपचारतोऽपि नोपपद्यते। कार्योपयोग्यपृथग्भूतविशेषणं शक्तिः इति मुख्यत्वमस्मन्यते सम्भवेत्। क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैघट्यं च स्यात्। तच्च ज्योत्स्नाया विशीर्णावयवत्वाभावेनाग्निकार्यत्वाभावात्। नच 'क्षरम्प्रधानममृताक्षरं हरः' इति प्रयोगानुसारेण चेतनाचेतनपरत्वं युक्तम्, अचिदंशस्य स्वस्मिन् स्ववृत्तिप्रसङ्गेन सर्वभूतस्थित्युक्त्यनुपपत्तेः। चिदचित्संघातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्नमिति चेत्—समुदायिनोस्समुदायनिष्ठत्वानुपपत्तेः। समुदायो हि समुदायिनिष्ठः। उपरितनग्रन्थवैरूप्यं च स्यात्। उत्तरत्र हि'भूप मूर्तममूर्तञ्चेत्' इति मूर्तामूर्तशब्दाभ्यां रूपद्वयमप्रस्तुत्य हिरण्यगर्भादीन्निर्दिश्य'मूर्तमेतत् हरेरूपं भावनात्रितयान्वितम्' इति मूर्तशब्दवाच्यरूपस्य भावनात्रितयान्वयकथनात्। नह्यचेतनस्य कर्मब्रह्मभावनान्वय.। 'सोक्षरः परमः स्वराट्' इत्यत्रहीन्द्रादिबद्धविलक्षणवाचित्वात् 'स स्वराड्भवति' इतिवन्मुक्तवाचिस्वराट्शब्दसामानाधिकरण्याच्च अक्षरशब्दो मुक्तात्मपरः। अतस्तदनुसारेण अक्षरशब्दोऽत्रापि मुक्तात्मपरः। ब्रह्मशब्दार्थवैरूप्यन्तु 'तपसा चीयते ब्रह्म' 'तस्मादेतद् ब्रह्मनामरूपमन्नं च जायते' इति श्रुताविवानेकोपपत्तिबलात् युज्यते। अतो यथोक्त एवार्थ इति श्रुतप्रकाशिका॥ १. गी. ८-१॥

२. गी. ८-२१॥-३. गी. १२-१॥-४. गी. १२-३॥-५. गी. १५-१६॥-६. गी. ८-८॥

७.भागवते. ४-९-११.'भक्तिं हरौ(मुहुः)प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महताममलाशयानाम्। येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः'॥

८. छा. ८-६-६॥

रा॥**नित्यशः मामुद्योगप्रभृति सततं सर्वकालम् अनन्यचेता यः स्मरति-अत्यर्थमत्प्रियत्वेन मत्स्मृत्या विना आत्मधारणमलभमानो**[*] **निरतिशयप्रियां स्मृतिं यः करोति ; तस्य नित्ययुक्तस्य-नित्ययोगं काङ्क्षमाणस्य योगिनोऽहं सुलभः-अहमेव प्राप्यः; न मद्भाव ऐश्वर्यादिकः; सुप्रापश्च। तद्वियोगमसहमानोऽहमेव तं वृणे। मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थमत्प्रियत्वादिकं चाहमेव ददामीत्यर्थः।**[†] **'यमेवैष वृणुते तेन लभ्यः'**

ता॥णशेषतया तत्तद्देशगतनाड्योत्क्रमणे प्रतीते सिद्ध्येदधिकारिभेदः। पूर्वत्र चाध्याये 'चतुर्विधा भजन्ते माम्'[1] इत्यादावयमधिकारिभेदः प्रस्तुतः ; तदन्ते च 'जरामरणमोक्षाय'[2] 'साधिभूताधिदैवं माम्'[3] इति श्लोकयोर्यच्छब्दावृत्त्याधिकारिभेदप्रतीतिर्भाष्ये प्रतिपादिता ; साचात्रापि स्फुटा ; 'अणोरणीयासमनुस्मरेद्यः'[4] 'यः प्रयाति त्यजन् देहं'[5]'यो मां स्मरति नित्यशः'इति। एतदखिलमभिप्रेत्योक्तम्—**एवमैश्वर्यार्थिन** इत्यादि। उक्तश्चाधिकारी 'अनन्यचेता' इत्युच्यत इति परोक्त निराकुर्वन् 'अनन्यचेताः' इतिश्लोकस्यार्थमाह -- **अथेति**। 'नित्यशः' इत्यनेनात्मानुभवादिफलान्तरव्यवधाननैरपेक्ष्यं विवक्षितमित्याह—**उद्योगप्रभृती**ति। अन्यथा 'सततम्' इत्यनेन पुनरुक्तिसंकोचक्लेशो वा स्यादित्यभिप्रायेणाह--**सततं सर्वकाल**मिति। अनन्यचेतश्शब्देनाभिप्रेतं स्मृतेर्भक्तिरूपापन्नत्वं दर्शयति—**अत्यर्थे**ति। अनन्यचेतस्त्वादेव स्मरणस्याच्छिद्रत्वम्। उत्कण्ठनेऽपि च स्मरतिः प्रयुज्यते— 'भ्रातरौ स्मरतां वीरौ'[6]इत्यादिषु। 'नित्ययुक्तस्य योगिनः'इत्युक्तानुवादः फलस्याव्यवहितत्वद्योतनाय। अत्र अहंशब्देनेश्वरस्य प्रत्यगर्थोऽभिप्रेतः ; तेन तद्विशेषणभूताक्षरादिफलप्राप्तिव्यवच्छेदो विवक्षित इत्यभिप्रायेणाह—**अहमेवे**ति। तदेव विवृणोति—**न मद्भाव** इति। भगवत्प्राप्तेः फलान्तरेभ्योऽतिशयितफलत्वात्तत्प्राप्तौ प्रयासातिरेकसम्भावनाव्यवच्छेदाय सुलभपदमित्यभिप्रायेणाह--**सुप्रापश्चे**ति। अकृच्छ्रेण प्राप्य इत्यर्थः। '[7]ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्'इत्यनुशिष्यते। आश्रितवत्सलस्येश्वरस्य सौलभ्यं रागप्राप्तमित्याह—**तद्वियोग**मिति। उक्तस्यातिवादमात्रत्वशङ्काव्युदासाय श्रुतिमूलतामाह— **यमेवे**ति। अत्र वरणशब्देन किमुच्यते, न तावच्छेषत्वशरीरत्वाद्याकारेण स्वीकारः, तस्य नित्यसिद्धत्वात् ; न च तद्विपरीतः, विरुद्धत्वादेव, नच प्राप्तिप्रदानं,'तेन लभ्यः' इत्यनेन पौनरुक्त्यप्रसङ्गात् ; नचान्योऽत्र प्रकारः, असम्भवादित्यत्राह—**मत्प्राप्त्यनुगुणे**ति। विपाकोऽत्र ध्रुवानुस्मृतिरूपत्वदर्शनसमानाकारत्वादिरूपः। तद्विरोधिनो दुष्कृतरजस्तमोरागद्वेषमोहादयः। **अत्यर्थमत्प्रियत्वं**-निरतिशयभक्तित्वम्। आदिशब्देन परमपदपर्यङ्कासत्तिपर्यन्तं यन्मध्येऽपेक्षितं, तत्सर्वं विवक्षितम्। **अहमेवे-**

**प पा॥***निरतिशयप्रियं मा स्मरति. इति. पा ॥
† मु. ३-२-३ ॥ १. गी. ७-१६ ॥
२. गी ७-२९ ॥ ३. गी. ७-३० ॥
४. गी. ८-९ ॥ ५ गी. ८-१३ ॥
६. श्रीरा. अयो. १-३ ॥
७. अष्टाध्याय्यां. ३-३-१२६ ॥

शं॥**त्यशः' इति दीर्घकालत्वम् उच्यते। न षण्मासं संवत्सरं वा, किं तर्हि? यावज्जीवं नैरन्तर्येण यः मां स्मरतीत्यर्थः। तस्य योगिनः अहं सुलभः सुखेन लभ्यः हे पार्थ नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनः। यतः एवम्, अतः अनन्यचेताः सन् मयि सदा समाहितः भवेत्॥ १४॥**

आ॥**नित्ययुक्तस्य नित्योपायवतः योगिनः परिपूर्णयोगस्य ॥ १४ ॥**

ज॥'नित्ययुक्तस्य योगिनः' इत्येतयोरेकार्थतानिरासार्थमाह—**नित्ये**ति। नित्योपायवत्त्वेन सम्पूर्णयोगस्येत्यर्थः ॥ १४ ॥

रा॥इति हि श्रूयते। वक्ष्यति च—*"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते। तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति ॥ १४ ॥

अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिमैश्वर्यार्थिनः पुनरावृत्तिं चाह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५

मां प्राप्य पुनर्निखिलदुःखालयमस्थिरं जन्म न प्राप्नुवन्ति । यत एते महात्मानः-महामनसः, यथावस्थितमत्स्वरूपज्ञाना अत्यर्थमत्प्रियत्वेन मया विना आत्मधारणमलभमाना मय्यासक्तमनसो मदाश्रया मामुपास्य परमसंसिद्धिरूपं मां प्राप्ताः ॥ १५ ॥

ता॥ति परमकारुणिकस्य ममैवायं भर इत्यभिप्रायः। 'तस्याहं सुलभः'इत्यादेरुक्तार्थपरत्वस्थिरीकरणायास्यैवार्थस्य वक्ष्यमाणं विस्तरमुदाहृतश्रुत्युपबृंहणरूपं दर्शयति—वक्ष्यतिचेति ॥ १४ ॥

इतः पूर्वं त्रयाणामधिकारिणां केचन वेद्योपादेयभेदाः प्रतिपादिताः, अतः परमधिकारौपयिकतयावश्यवेद्यस्य फलस्य स्थिरास्थिरत्वलक्षणविशेषं दर्शयतीत्याह—अतः परमिति । अत्र ज्ञानिनस्तावदपुनरावृत्तिरुच्यते 'मामुपेत्य' इति श्लोकेन । दुःखानन्त्यस्य सर्वप्रमाणसिद्धत्वाद्दुःखशब्दस्य निर्विशेषणस्य सङ्कोचायोगात्—निखिलेत्युक्तम् । जन्मनश्चाशाश्वतशब्दनिर्दिष्टमस्थिरत्वं जन्माविनाभूतदेहभोगाद्यस्थिरत्वरूपमिह विवक्षितम्, जन्मशब्दो वात्र जनिमच्छरीरपरः। 'महात्मानः' इति स्तुतिमात्रादपि माहात्म्यस्यात्र संसिद्धिहेतुत्वमुचितमित्यभिप्रायेणाह—यत इति । महामनस्त्वं ज्ञानिनां प्राक्प्रपञ्चितमिहानूदितं दर्शयति —यथावस्थितेत्यादिना । अभिलषितस्य फलस्य सिद्धिव्यपदेशौचित्यात्परमशब्दस्वारस्याच्च—परमसंसिद्धिरूपं मामित्युक्तम्। परमसंसिद्धिरूपं—परमपुरुषार्थरूपमित्यर्थः । समीचीनसिद्धिस्संसिद्धिः ॥ १५ ॥

प्र-पा॥ *गी १०-१०, ११ ॥

शं॥तव सौलभ्येन किं स्यात् इति? उच्यते; शृणु तत् मम सौलभ्येन यत् भवति—माम् उपेत्य ईश्वरम् उपेत्य मद्भावम् आपद्य पुनर्जन्म पुनरुत्पत्तिं न आप्नुवन्ति न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति इति? तद्विशेषणमाह – दुःखालयं दुःखानाम् आध्यात्मिकादीनाम् आलयम् आश्रयम्, आलीयन्ते यस्मिन् दुःखानि इति दुःखालयं जन्म । न केवलं दुःखालयम्, अशाश्वतम् अनवस्थितस्वरूपं च । नाप्नुवन्ति ईदृशं पुनर्जन्म महात्मानः यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनः मां न प्राप्नुवन्ति ते पुनः आवर्तन्ते ॥ १५ ॥

आ॥तत्प्राप्तिं स्तौति—मामिति । परमां सिद्धिं गता इति हि तत्र हेतुः ॥ १५ ॥

ज॥'स याति परमां गतिम्' 'तस्याहं सुलभः' इति द्वेधा वचनात् परमगतिर्भगवल्लाभश्च पृथगिति न मन्तव्यम्, भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः; अन्यथोभयस्तुतिप्रसङ्गादित्यभिप्रायेणाह—तत्प्राप्तिमिति । तर्हि कथं 'मामुपेत्य' इत्युक्त्वा 'संसिद्धिं परमां गताः' इति पृथगुक्तिरित्यत आह—परमामिति । ये मामुपेतास्ते परमां सिद्धिं मोक्षलक्षणां हि गताः; न च मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं तत्र स्वं प्राप्तानां जन्माभावे हेतुरयमुच्यते; न तु भगवत्प्राप्तेरन्या परमसंसिद्धिप्राप्तिरित्यर्थः ॥ १५ ॥

रा॥ऐश्वर्यगतिं प्राप्तानां भगवन्तं प्राप्तानां च पुनरावृत्तावपुनरावृत्तौ च हेतुमनन्तरमाह—

**आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥　　१६**

**ब्रह्मलोकपर्यन्ता ब्रह्माण्डोदरवर्तिनस्सर्वे लोका भोगैश्वर्यालयाः पुनरावर्तिनः-विनाशिनः; अत ऐश्वर्यगतिं प्राप्तानां प्राप्यस्थानविनाशाद्विनाशित्वमवर्जनीयम् ; मां सर्वज्ञं सत्यसङ्कल्पं निखिलजगदुत्पत्तिस्थितिलयलीलं परमकारुणिकं सदैकरूपं प्राप्तानां विनाशप्रसङ्गाभावात्तेषां पुनर्जन्म न विद्यते ॥ १६ ॥**

---

ता॥अप्रसक्तस्य प्रतिषेधायोगात्प्रतिषेध्यस्य प्रसङ्गिनश्च आसन्नवर्तिन उपादातुमुचितत्वान्नश्वरफलभूतैश्वर्यार्थिनां जन्ममात्रं तन्निषेधमुखेन सूचितम् ; अतस्तत्रापि हेतुरेव केवल वक्तव्य इत्यभिप्रायेणाह—**ऐश्वर्यगति**मिति । 'मामुपेत्य तु' इति भगवतः प्रतियोगीकरणादाङोऽत्राभिविधिपरत्वाभिप्रायेणाह—**ब्रह्मलोके**ति । प्रकृत्याख्यभगवन्मायामहोदधौ ब्रह्माण्डैरपि यदा बुद्बुदायित, तदा कैव कथा तदन्तर्वर्तिनां लोकानामित्यभिप्रायेण—**ब्रह्माण्डोदरवर्तिन** इत्युक्तम् । तेन परमाकाशव्यवच्छेदसिद्धिश्च। ऐश्वर्यानित्यताप्रतिपादनपरत्वायोक्तं—**भोगैश्वर्यालया** इति । भुवनशब्दसमभिव्याहृतस्य लोकशब्दस्य जनविषयत्वायोगाल्लोकस्य गमनाभावेन पुनरावृत्तेरप्यभावात्पुनरावृत्तिशब्देन प्रवाहतो विनाशमात्रं लक्ष्यत इत्याह—**विनाशिन** इति । पुनरावृत्तिशब्दस्याजहल्लक्षणावृत्तेस्तल्लोकगतपुरुषपुनरावृत्तिरेव वा द्वारम् । फलितमाह—**अत** इति। 'माम्' इत्यत्र तुशब्देन द्योतितानपुनरावृत्तिहेतुविशेषान् दर्शयति—**मां सर्वज्ञ**मित्यादिना । असर्वज्ञमसत्यसङ्कल्प कार्यकोटिघटितं निर्घृणं रजस्तमोमूलरागद्वेषादिनानाविकारशालिनं कञ्चन क्षुद्रदैवतं प्राप्तानां हि तदन्येन तेनैव वा पुनरावृत्तिस्स्यादिति विशेषणानां तात्पर्यम् ॥ १६ ॥

---

शं॥**किं पुनः त्वत्तः अन्यत् प्राप्ताः पुनः आवर्तन्ते इति? उच्यते—आ ब्रह्मभुवनात् भवन्ति अस्मिन् भूतानि इति भुवनं, ब्रह्मणो भुवनं ब्रह्मभुवनं, ब्रह्मलोकः इत्यर्थः, आ ब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः हे अर्जुन । माम् एकम् उपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिः न विद्यते ॥ १६ ॥**

---

आ॥**महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तं नारायणगोपालकल्पे 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि । तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' इति ॥१६॥**

---

ज॥'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' इति सत्यलोकसहितानां पुनरावृत्तिरुच्यत इत्येतदपव्याख्यानमिति भावेनाह—**महामेरुस्थे**ति । परतः स्थितानाम् । एवं जनलोकमारभ्येत्यपि ग्राह्यम् । कुत एतदित्यतः श्लोकमागमेनैव व्याचष्टे—**तच्चे**ति । पृथिवीसम्बन्धिनां तदसम्बन्धिनां लोकानां ग्रहणायोभयोपादानम् । परतः स्थितानाम् । यद्यपीति शेषः। अभावो जनेः लभ्यत इति शेषः । अनेनैव व्याख्यातं भवति। महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य न पुनरावृत्तिः। अतो'मामुपेत्य पुनर्जन्म'इति किमुच्यत इति चेत्—सत्यम्, आब्रह्मभुवनादेवमाजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः । परे न पुनरावर्तिन इति यावत्। तथाऽपि नोक्तमयुक्तम्,यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इति । अन्यथा मामुपेत्य पुनर्जन्मेत्युक्तत्वात् उत्तरार्धवैयर्थ्यं च ॥ १६ ॥

रा॥ब्रह्मलोकपर्यन्तानां लोकानां तदन्तर्वर्तिनां च परमपुरुषसङ्कल्पकृतामुत्पत्तिविनाशकालव्यवस्थामाह—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७
अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८
भूतग्रामस्स एवायं भूत्वाभूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९

ये मनुष्यादिचतुर्मुखान्तानां मत्सङ्कल्पकृताहोरात्रव्यवस्थाविदो जनाः, ते ब्रह्मण

ता॥ सहस्र ' इत्यादिश्लोकत्रयस्य पिण्डितार्थमाह—ब्रह्मलोकपर्यन्तानामिति । हिरण्यगर्भादिस्वातन्त्र्यासिद्धसत्यलोकादिस्थैर्यशङ्काव्युदासायाह —परमपुरुषसङ्कल्पकृतामिति । ईश्वरस्वातन्त्र्यमेव ह्यन्यूनानतिरिक्तदिनरात्र्यादिविचित्रव्यवस्थायां कारणम्। तथा चोच्यते'कालस्य हि च मृत्योश्च''कालचक्रं जगच्चक्रम्' इत्यादिभिः। एवमेवोक्तमन्यत्र ' ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः । कृत्वा मत्स्थानि भूतानि चराणि स्थावराणि च' इत्यादि। यत्तु मानवे 'तद्वै युगसहस्रं तु ब्राह्मं पुण्यमहर्विदुः। रात्रिं च तावतीमेव तेऽहोरात्रविदो जनाः' इति ; तत्र य इत्येव पाठाद्यथाक्रममन्वयः। इह तु 'सहस्र'इतिश्लोके'यत्'इत्यस्याहश्शब्देनैव ह्यन्वयो घटते;ततश्च 'ते'इत्यस्य 'ये'इति पदमपेक्षितम्; तत्रापि 'ये विदुस्तेऽहोरात्रविदो जनाः' इत्यन्वये प्रसङ्गरहिताहोरात्रवेदित्वोत्पादनरूपं स्तुतिपरं वाक्यं प्रस्तुतासङ्गतं स्यात्; ततश्च 'येऽहोरात्रविदो जनास्त एवं विदुः' इत्यन्वयः। एवं कालव्यवस्थायां प्रामाणिकत्वप्रतिपादनपरोऽत्र स्वीकार्य इत्यभिप्रायेणाह —ये मनुष्यादीति । अनूद्यमानमहोरात्रवेदित्वं यथाप्र-

**प्र-पा** ॥ भारते उद्योगपर्वणि. ३७-१३ 'कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकस्सत्यमेव ब्रवीमि ते' ॥

२ भारते-उद्यो. ६७-१२. 'कालचक्रं जगच्चक्रं युगचक्रञ्च केशव । आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥

३ ॥

४ मनु ९-७३ अत्र कुल्लूकभट्टीय 'युगसहस्रेणान्तं समाप्तिर्यस्य तत् ब्राह्ममहः,तत्परिमाणाञ्च रात्रिं ये जानन्ति, ते अहोरात्रज्ञाः इति स्तुतिरियम् । स्तुत्याच 'ब्राह्ममहोरात्रं ज्ञातव्यम्' इति विधिः परिकल्प्यते । अत एव पुण्यहेतुत्वात् पुण्यमिति विशेषणम्' इति ॥

शं॥ब्रह्मलोकसहिताः लोकाः कस्मात् पुनरावर्तिनः? कालपरिच्छिन्नत्वात् । कथम् ? —सहस्रयुगपर्यन्तं सहस्राणि युगानि पर्यन्तं पर्यवसानं यस्य अह्नः तत् अहः सहस्रयुग पर्यन्तं ब्रह्मणः प्रजापतेः विराजः विदुः, रात्रिम् अपि युगसहस्रान्ताम् अहःपरिमाणामेव

आ॥मां प्राप्य न पुनरावृत्तिरिति स्थापयितुम् अव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि

ज॥उत्तरप्रकरणस्यासङ्गतिमाशङ्क्याह—मां प्राप्येति । अवस्थितानामिति शेषः । प्रतिज्ञामात्रेण हि तदुक्तम्;अव्यक्तसामर्थ्यस्यात्र कथनात् कथमात्मेत्युच्यत इत्यत उक्तम्—अव्यक्ताख्येति।प्रलयादीति । तत्कारणत्वमात्मनः । सृष्टिप्रलययोरिदपूर्वत्वाभावज्ञापनाय गीतामुल्लङ्घ्योक्तम् । अत्र सहस्र-

रा॥श्चतुर्मुखस्य यदहः,तच्चतुर्युगसहस्रावसानं विदुः,रात्रिं च तथारूपाम्। तत्र ब्रह्मणोऽहरागमसमये त्रैलोक्यान्तर्वर्तिन्यो देहेन्द्रियभोग्यभोगस्थानरूपा व्यक्तयश्चतुर्मुखदेहावस्थादव्यक्तात् प्रभवन्ति । तत्रैवाव्यक्तावस्थाविशेषे चतुर्मुखदेहे राज्यागमसमये प्रलीयन्ते । स एवायं कर्मवश्यो भूतग्रामोऽहरागमे भूत्वाभूत्वा राज्यागमे प्रलीयते । पुनरप्यहरागमे

ता॥प्रसिद्धि सर्वविषयमेव भवितुमर्हति,तेन चतुर्मुखस्यापि मनुष्यादितुल्यता द्योतिता स्यादित्यभिप्रायेण—**मनुष्यादी**त्यादिकमुक्तम्। ब्रह्मशब्दस्यात्र परमात्मविषयत्वभ्रमव्युदासाय—**चतुर्मुख**शब्दः।तस्यैव हि सहस्रयुगप्रतिनियताहोरजनीविभागः प्रसिद्ध इति भावः । 'सविशेषणौ विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् 'येऽहोरात्रविदो जनाः' इत्यहोरात्रवेदितांशस्यानूदितत्वाच्च सहस्रयुगपर्यन्तताऽवेदनमेवात्र विधेयमित्यभिप्रायेण—**तच्चतुर्युगसहस्रावसानं विदु**रित्युक्तम्।सहस्रयुगानि पर्यन्तं यस्य तत्सहस्रयुगपर्यन्तम् । युगशब्दश्चात्र प्रमाणान्तरानुसाराच्चतुर्युगपरः । अस्त्वेव चतुर्मुखस्याहोरात्रव्यवस्था; ततः किं प्रस्तुतस्येत्यत्रोत्तरम्—'अव्यक्तात्' इतिश्लोकः। तस्यार्थमाह—**तत्रे**ति । अयमभिप्रायः—अत्र व्यक्तिशब्दस्तावन्न महदादिविषयः, चतुर्मुखात्प्रागेव तदुत्पत्तेः । अतश्चतुर्मुखसृज्यमात्रविषय एवासौ।व्यज्यन्त इति व्यक्तयः।तत्रापि सत्यलोकादेः प्रतिकल्पं प्रलयाभावात्त्रैलोक्यान्तर्वर्तिदेहेन्द्रियादिवस्तुमात्रविषयत्वमेव स्वीकार्यम् । तेषां चोत्पत्तिः ब्रह्मशरीरादेव। ततश्चात्राव्यक्तशब्दोऽपि न मूलाव्यक्तविषयः; अपि तु तदुपादानकब्रह्मशरीरपरः । शरीरे चाव्यक्तशब्दप्रयोगस्सूत्रेऽप्युपपादितः 'सूक्ष्मं तु तदर्हत्वात्'इति । एवंविधसृष्टिप्रलयकारणविशेष तदनुच्छेदाच्च सृष्टिप्रलयसन्तानानुच्छेदमकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिहारमुक्तस्यार्थस्य सर्वेष्वपि कल्पेषु अभिव्याप्तिं यथापूर्वकल्पनं च 'भूतग्रामः' इति श्लोकः प्रतिपादयतीत्यभिप्रायेणाह—**स एवायमिति** । भूतशब्दोऽत्राचिद्विशिष्टक्षेत्रज्ञपरः । सृज्यत्वसंहार्यत्वहेतुभूतमवशत्वं कर्मनिबन्धनमेव हीत्यभिप्रायेण—**कर्मवश्य** इत्युक्तम् । 'अहरागमे ' इतिपदं 'भूत्वा' इत्यत्रापि अनुवर्तनीयमित्यभिप्रायेण—**अहरागमे भूत्वे**त्यन्वय उक्तः । इदं च नैमित्तिकप्रलयप्रतिपादनं श्रुत्यादिसिद्धप्राकृतप्रलयस्याप्युपलक्षणम् । *तेन सत्यलोकविनाशसिद्धिः ;

**प्र-पा** ॥ १ ॥ २. शारी. १-४-२॥ कथमव्यक्तशब्दस्य शरीरं वाच्यं भवतीत्याशङ्क्याह—सूक्ष्ममिति॥ तुशब्दोऽवधारणे । सूक्ष्मम्-अव्यक्तमेव अवस्थान्तरापन्नं शरीरं भवति, तदवस्थस्यैव कार्यार्हत्वात् ॥

*तथा सति हि. पा ॥

शं॥के विदुरिति?आह—ते अहोरात्रविदः कालसंख्याविदो जनाः इत्यर्थः। यतः एवं कालपरिच्छिन्नाः ते अतः पुनरावर्तिनो लोकाः ॥ १७ ॥

प्रजापतेः अह्नि यत् भवति रात्रौ च, तत् उच्यते—अव्यक्तात् अव्यक्तं प्रजापतेः स्वपतः स्वापावस्था, तस्मात् अव्यक्तात् व्यक्तयः व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्ति अभिव्यज्यन्ते, अह्नः आगमः अहरागमः तस्मिन् अहरागमे काले ब्रह्मणः प्रबोधकाले । तथा राज्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वाः व्यक्तयः

आ ॥ दर्शयति—सहस्रयुगेत्यादिना । सहस्रशब्दोऽत्रानेकवाची । 'ब्रह्म परं सा विश्वरूपस्य रजनी'इति श्रुतिः। द्विपरार्धप्रलय एवात्र विवक्षितः।'अव्यक्ताद्व्यक्तयः सर्वाः'इत्युक्तेः।

ज॥शब्दो दशशतवाचीति प्रतीतिनिरासायाह—**सहस्रे**ति।बहुशब्दपर्यायोऽयं न तु प्रसिद्धार्थः। विरिञ्चाहोरात्रयोः प्रसिद्धसहस्रचतुर्युगपर्यन्तत्वात् कथमेतदित्यत आह—**ब्रह्मे**ति । तथा च द्विपरार्धप्रलयस्यादिसृष्टेश्चात्र विवक्षितत्वात् उक्तं युक्तम् । ननु परस्य ब्रह्मणो नित्यत्वादहोरात्रे न स्तः,तत्कथं तत्परमेतदित्यत आह—**से**ति । सा निर्व्यापारावस्था परिपूर्णरूपस्यापि हरेः रजनीत्यर्थः । अनेनाहरपि

रा॥प्रभवति। तथा वर्षशतावसानरूपयुगसहस्रान्ते ब्रह्मलोकपर्यन्ता लोकाः ब्रह्मा च [*]'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते' इत्यादिक्रमेण अव्यक्ताक्षरतमःपर्यन्तं मय्येव प्रलीयन्ते। एवं मद्व्यतिरिक्तस्य कृत्स्नस्य कालव्यवस्थया मत्त उत्पत्तेर्मयि प्रलयाच्चोत्पत्तिविनाशयोगित्वमवर्जनीयमित्यैश्वर्यगतिं प्राप्तानां पुनरावृत्तिरपरिहार्या। मामुपेतानां तु न पुनरावृत्तिप्रसङ्गः ॥ १७-१९ ॥

अथ कैवल्यं प्राप्तानामपि पुनरावृत्तिर्न विद्यत इत्याह—

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।**
**यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २०**

ता॥'आब्रह्मभुवनाल्लोकाः' इति ह्युपक्रान्तमित्यभिप्रायेणाह-**तथेति**। यद्वा रात्र्यागमशब्द एव ब्रह्मणोऽन्तिमरात्र्यागममपि शक्त्या सङ्गृह्णातीति भावः । तदेतत्सूचित— **वर्षशतावसानरूपयुगसहस्रान्त** इति। तथा चान्यत्र स्मर्यते—'[1]निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्' इति। एवमहरागमशब्दोऽपि प्रथममहस्सङ्गृह्णाति । पृथिव्यादितत्त्वानामेव विलये तदारब्धानां ब्रह्मलोकब्रह्मशरीरब्रह्माण्डादीनां का कथेत्यभिप्रायेण—**पृथिवीत्यादिश्रुतिरुदाहृता** । तमोवस्थाचिद्द्रव्यस्यैकीभावो हि परस्मिन्नेव देवे श्रूयते। अत्रापि '[2]अहं कृत्स्नस्य जगतः प्रभवः प्रलयः' इत्यादिकं ह्युच्यत इत्यभिप्रायेण—**मय्येवेत्युक्तम्** । एवं '[3]यो ब्रह्माणं विदधाति पूर्वम्' '[4]एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इति क्रमेण पुनर्ब्रह्मादिसृष्टिः, पुनश्च तत्प्रलय इत्यादिकमपि भाव्यम् । ईदृशसृष्टिप्रलयप्रतिपादनस्य प्रकृतोपयोगं दर्शयति —**एवमिति** । सर्वेषु सृष्टिप्रलयप्रकरणेष्विदमेव तात्पर्यं भाव्यम् । **मद्व्यतिरिक्तस्य कृत्स्नस्येत्यनेन** '[5]अहं कृत्स्नस्य' इति प्रागुक्तं स्मारितम् । उक्तं च मोक्षधर्मेऽपि '[6]नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम्' इति ॥ १७-१९ ॥

'परः' इत्यादिश्लोकद्वयस्यार्थमाह—**अथेति**। अयमभिप्रायः—भगवन्तं प्राप्तानाम् अपुनरावृत्तिः प्रागेवोक्ता; अव्यक्तात्परत्वेन निर्दिष्टोऽक्षरश्च जीव एव भवितुमर्हति, '[7]अपरेयमितस्त्वन्याम्' इत्यादि-

प्र-पा॥ [*]सुबाल. २-ख.॥ १. गी ८-१६॥ २. गी. ७-६ ॥ ३. श्वे. ६-१८ ॥ ४. महोपनि. १-१ ॥ ५. गी. ७-६ ॥ ६. भारते-शा-मो. ३४७-३२॥ ७. गी. ७ ५॥

शं॥तत्रैव पूर्वोक्ते अव्यक्तसंज्ञके ॥ १८ ॥

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं, बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थम्, अविद्यादिक्लेशमूलकर्माशयवशाच्च अवशः भूतग्रामः भूत्वाभूत्वा प्रलीयते इत्यतः संसारे वैराग्यप्रदर्शनार्थं च इदमाह—भूतग्रामः भूतसमुदायः स्थावरजङ्गमलक्षणः यः पूर्वस्मिन् कल्पे आसीत् स एव अयं नान्यो भूत्वाभूत्वा अहरागमे, प्रलीयते पुनःपुनः रात्र्यागमे अह्नः क्षये अवशः अस्वतन्त्र एव, हे पार्थ, प्रभवति जायते अवश एव अहरागमे ॥ १९ ॥

आ॥उक्तं च महाकौर्मे 'अनेकयुगपर्यन्तं महाविष्णोस्तथा निशा। रात्र्यादौ लीयते सर्वमह-

ज॥सिद्धम्। भवेदेतत्, यद्यत्र द्विपरार्धप्रलयस्यादिसृष्टेश्च विवक्षेत्यत्र प्रमाण स्यादित्यत आह-**द्विपरार्धेति**। एवमादिसृष्टिश्चेत्यपि ग्राह्यम्। नह्यवान्तरसृष्टिप्रलययोः सर्वकार्योत्पत्तिविनाशाविति भावः । आगमान्तरसंमतेश्चैवमित्याह—**उक्तं चेति** । इतोऽप्येवमित्याह— **य इति** । नह्यवान्तरप्रलये सर्वेषामाकशादीनां

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१**

रा॥**तस्माद्व्यक्तात्-अचेतनप्रकृतिरूपात्पुरुषार्थतया परः - उत्कृष्टो भावोऽन्यो - ज्ञानैकाकारतया तस्माद्विसजातीयः-अव्यक्तः-केनचित्प्रमाणेन न व्यज्यत इत्यव्यक्तः-स्वसंवेद्यस्वासाधारणाकार इत्यर्थः, सनातनः-उत्पत्तिविनाशानर्हतया नित्यः, यस्सर्वेषु वियदादिभूतेषु सकारणेषु सकार्येषु विनश्यत्सु तत्रतत्र स्थितोऽपि न विनश्यति, सोऽव्यक्तोऽक्षर इत्युक्तः—*'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' †'कूटस्थोऽक्षर उच्यते' इत्यादिषु; तं**

ता॥प्रत्यभिज्ञानात्; वक्तव्या च कैवल्यार्थिनामवरोहाभावादपुनरावृत्तिः; अत एव तत्परमेवेदं श्लोकद्वयम्—इति । अव्यक्तस्यैव पूर्वप्रकृतत्वात्, अत्राप्यव्यक्तादित्येव पदभेदः। तस्य चापेक्षया परशब्दान्यशब्दाभ्यामप्यन्वयः। तत्र च पौनरुक्त्यव्युदासायोत्कृष्टत्वाभिधानमुखेन पुरुषार्थरूपत्वपरः परशब्दः । तत एव च स्वरूपभेदस्य सिद्धत्वादन्यशब्दः प्रकारान्यत्वपरः। स च प्रकारभेदश्चेतनत्वरूप एव प्रमाणसिद्ध इत्यभिप्रायेणाह—**तस्मा**दिति । भावशब्दोऽत्र पदार्थमात्रवाची । 'व्यक्तः' इति पदच्छेदो न युक्तः, 'अव्यक्तोऽक्षरः' इत्यत्रैवाभिधानात्; दुर्ग्रहे च जीवे व्यक्तशब्दप्रयोगानुपपत्तेरित्यभिप्रायेणाह—**केनचि**दिति। ननु जीवस्याव्यक्तत्वमयुक्तं, प्रत्यक्षानुमानागमैर्यथासम्भवं तद्व्यक्तेः, अन्यथा खपुष्पत्वप्रसङ्गादित्यत्राह—**स्वसंवेद्ये**ति । प्रमाणान्तराणि हि साधारण्येन तत्प्रतिपादकानीति भावः। नित्यत्वे द्वितीयाध्यायोक्तहेतुस्मारणम् —**उत्पत्तिविनाशानर्हतये**ति। भूतशब्दोऽत्र महाभूतपरः, तद्विनाशेऽप्यात्मस्थितिवचनेन नित्यत्वस्यानायासादलभात्। तत्र सर्वशब्दाभिप्रायवशादेव सकारणत्वं सकार्यत्वं च सिद्धमित्यभिप्रायेणाह —**वियदादी**ति। प्रसक्तो हि नाशो जीवे निषेध्यः; प्रसङ्गश्चात्र नश्यत्पदार्थानुप्रवेशवशात्; यथा तिलेषु दह्यमानेषु तदनुप्रविष्टं तैलमपि दह्यते; ततश्च सर्वेषु भूतेषु नश्यत्स्वित्यस्यैव सामर्थ्यलब्धमुक्तम्—**तत्र तत्र स्थितोऽपी**ति । 'यस्स सर्वेषु' इत्यत्र स इत्यस्य प्रयोजनमान्द्यादुत्तरत्रापेक्षितत्वाच्च **सोऽव्यक्तोऽक्षर** इत्यन्वय उक्तः; यद्वाऽयमध्याहारः । उक्त इत्यस्य कुत्रेत्याकाङ्क्षायामाह—**येत्वि**ति । अनयोः प्रकरणयोरक्षरशब्दस्य जीवविषयत्वं तत्रैव व्यक्तम् 'उत्तमः पुरुषस्त्वन्यः' इत्यादिभेदव्यपदेशात्। अतोऽत्राप्यध्याये 'अक्षरं ब्रह्म परमम्' 'अव्यक्तोऽक्षरः' इत्यक्षरशब्दाभ्यां परिशुद्धजीव एव

**प्र-पा** ॥ *गी. १२-३ ॥ †गी. १५-१६ ॥ १. गी. १५-१७ ॥ २. गी. ८-३ ॥

शं॥**यत् उपन्यस्तम् अक्षरं तस्य प्राप्त्युपायो निर्दिष्टः 'ओमित्येकाक्षरं ब्रह्म' इत्यादिना; अथ इदानीम् अक्षरस्यैव स्वरूपनिर्दिदिक्षया इदम् उच्यते, अनेन योगमार्गेण इदं गन्तव्यम् इति—परः व्यतिरिक्तः भिन्नः, कुतः? तस्मात् पूर्वोक्तात् । तु शब्दः अक्षरस्य विवक्षितस्य अव्यक्तात् वैलक्षण्यविशेषणार्थः । भावः अक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थम् आह-अन्यः इति। अन्यः विलक्षणः स च अव्यक्तः अनिन्द्रियगोचरः। 'परस्तस्मात्' इत्युक्तम्; कस्मात् पुनः परः? पूर्वोक्तात् भूतग्रामबीजभूतात् अविद्यालक्षणात् अव्यक्तात्। अन्यः विलक्षणः। भावः इत्यभिप्रायः। सनातनः चिरन्तनः यः सः भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥ २०॥**

आ॥**रादौ तु जायते' इति च । 'यः स सर्वेषु भूतेषु' इति वाक्यशेषाच्च ॥ १७,१८,१९॥**

**क**॥भूतानां नाशः, नापि विरिञ्चस्य; पञ्चभूतनाशेऽपि अविनाशित्वमिति भावः॥१७॥१८॥१९॥२०॥

**रा ॥ वेदविदः परमां गतिमाहुः; अयमेव [1]'यः प्रयाति त्यजन् देहं स याति परमां गतिम्' इत्यत्र परमगतिशब्दनिर्दिष्टोऽक्षरः प्रकृतिसंसर्गवियुक्तस्वरूपेणावस्थित आत्मेत्यर्थः । यमेवम्भूतं स्वरूपेणावस्थितं प्राप्य न निवर्तन्ते; तन्मम परमं धाम · परं नियमनस्थानम् ; अचेतनप्रकृतिरेकं नियमनस्थानम् ; तत्संसृष्टरूपा जीवप्रकृतिर्द्वितीयं नियमन-**

---

**ता॥**व्यपदिश्यते।'[1]ये तु'इत्यत्राक्षराव्यक्तशब्दयोर्द्वयोरपि प्रयोगादत्रापि'अयव्यक्तोऽक्षर इत्युक्तः'इति तदुभयनिर्देशाच्च तत्प्रत्यभिज्ञासिद्धेरिति भावः।ननु कथं वक्ष्यमाणप्रकरणस्थमत्र'उक्तः' इत्यनेनान्विततयोपादीयते;इत्थं-तत्तत्प्रकरणोपबृंहणीयश्रुत्यभिप्रायेण तदुपादानात्, '[2]निहताः पूर्वमेव'इतिवत्स्वसङ्कल्पारोहाद्वेति। 'आहुः'इत्यत्र कर्त्रपेक्षायां '[3]यदक्षरं वेदविदो वदन्ति'इति प्रसक्तमुचितं च कर्तृविशेषमाकृष्याह—**तं वेदविद** इति। *'स याति परमां गतिम्'इति सामान्यनिर्देश एतेन विशेषित इति दर्शयति—**अयमेव यः प्रयातीत्यादिना।** यद्वा अत्र 'तमाहुः परमां गतिम्' इति निर्देशः *'स याति परमां गतिम्' इति पूर्वोक्तप्रत्यभिज्ञापनार्थ इति भावः । तत्राक्षरपरमगतिशब्दयोः प्रयोगयोग्यतां दर्शयति—**प्रकृतीति।** अनिवृत्तिहेतुत्वेनायमर्थ उक्त इत्यभिप्रायेण—**एवंभूतं स्वरूपेणावस्थित**मित्युक्तम्। 'तद्धाम परमं मम' इति सम्बन्धमात्रविधानस्य प्रागेव सिद्धेः स्थानस्य च स्थानिसापेक्षत्वनियमात् '[4]य आत्मनि तिष्ठन्' इत्याद्युक्तमधिष्ठेयं स्थानपर्यायं धामशब्देन विवक्षितमित्याह—**नियमनस्थान**मिति । अत्र किमपरं नियमनस्थानं यद्व्यवच्छेदाय परमशब्द इत्यत्राह—**अचेतनेति।** अत्र परमधामत्वव्यपदेशात्परिशुद्धात्मविषयत्वं सिद्धम् ; ततश्चाशुद्धो जीवोऽप्यपर एव विवक्षित इत्याह—**तत्संसृष्टेति** । यदि मुक्तोऽपि परमात्मपरतन्त्रः ; तर्हि स्वतन्त्रेण परमात्मना पुनरपि संसारगर्ते प्रक्षिप्येतेत्यत्राह—**त**

---

**प्र-पा॥***गी.८-१३।। १.गी.१२-१॥ २.गी.११-३३ ॥ ३. गी. ८-११ ॥

४.शतपथ.माध्य.१४-६-५-३०.'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः'। बृहदारण्यके (५-७-२२) विज्ञानशब्दपाठः।माध्यन्दिनपाठोयम्। 'य आत्मनि' इति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते , नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात् 'यस्सर्वेषु भूतेषु तिष्ठन्' इत्युक्तानामचित्संसृष्टजीवाना परशरीरत्वस्य पृथगुक्तत्वाच्च । 'आत्मनि तिष्ठन्' इत्युक्ते 'वेश्मान्यग्निस्तिष्ठति' 'तिले तैलन्तिष्ठति' इतिवत् बहिरबहिस्स्थितिसाधारण्यं स्यात् इति तद्वैषम्यार्थमाह-आत्मनोऽन्तर इति । यमात्मा नवेदेतिइयत्तया वेदननिषेधः, भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते। 'अन्तरो यमयति' इत्यनेन शरीरलक्षणमुक्तम्। तस्मात्तन्नियाम्यं तच्छरीरमित्यर्थः। न च 'शिलापुत्रकस्य शरीरम्' इतिवदयन्निर्देशः,-अपवादकाभावे व्यतिरेकानिर्देशस्वारस्यभङ्गायोगात्' इति श्रुतप्रकाशिका ॥ ५. प्राप्यत्ववशात्. पा ॥

---

**शं॥योऽसौ अव्यक्तः अक्षरः इत्युक्तः तम् एव अक्षरसंज्ञकम् अव्यक्तं भावम् आहुः परमां प्रकृष्टां गतिम् । यं परं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय, तत् धाम स्थानं परमं प्रकृष्टं मम विष्णोः परमं पदमित्यर्थः ॥ २१ ॥**

---

**आ॥अव्यक्तो भगवान्,'यं प्राप्य न निवर्तन्ते' इति मामुपेत्येत्यस्य परामर्शात्,'अव्यक्तं परमं विष्णुम्'इति प्रयोगाच्च गारुडे।धाम स्वरूपं,तेजस्स्वरूपं 'तेजः स्वरूपं च गृहं प्राज्ञै-**

---

**ज॥**इदानीमव्यक्ताख्यात्मेति यदुक्तं तत्साधयितुमाह—**अव्यक्त**इति । मामुपेत्येत्युक्तार्थस्य 'यं प्राप्य न निवर्तन्ते' इत्यव्यक्तविषयतया परामर्शात् । न केवलमव्यक्तशब्दो युक्तिबलात् भगवति नीयते ; किं

रा॥स्थानम्; अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नियमनस्थानमित्यर्थः। तच्चापुनरावृत्तिरूपम्। अथवा प्रकाशवाची धामशब्दः; प्रकाशश्चेह ज्ञानमभिप्रेतम्; प्रकृतिसंसृष्टात् परिच्छिन्नज्ञानरूपादात्मनोऽपरिच्छिन्नज्ञानरूपतया मुक्तस्वरूपं परं धाम ॥२१॥

ज्ञानिनः प्राप्यं तु तस्मादत्यन्तविभक्तमित्याह—

पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तस्स्थानि भूतानि येन सर्वमिदं ततम् ॥ २२

*'मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' †'मामेभ्यः परमव्ययम्' इत्यादिना निर्दिष्टस्य यस्य अन्तरस्थानि सर्वाणि भूतानि,

ता॥च्चेति । अयं भावः—अविद्यादिर्हि संसारकारणम् ; न तु पारतन्त्र्यम्; अविद्यादेश्च प्रक्षयादीश्वरकारुण्यादीनां च स्वाभाविकत्वान्न मुक्तस्य संसारगन्ध इत्यर्थः । यद्वा न केवलं भगवत्प्राप्तिरेव अपुनरावृत्तिरूपा, किं तु परिशुद्धजीवप्राप्तिरपि अवरोहणाभावात्तथेति भावः । नियमनस्थानमित्याश्रितविशेषणोपादानारुचेराह—**अथवे**ति । अस्तु धामशब्दस्तेजःपर्यायः प्रकाशवाची, तस्य कथमत्रान्वय इत्यत्राह—**प्रकाशश्चे**ति। विशेषणफलितं दर्शयति—**प्रकृतिसंसृष्टा**दिति। प्रकाशपक्षे—तत् परमं धाम, मम-मच्छेषभूतम्—इति वाक्यार्थः। यद्यपि 'अपरेयम्'इत्यादिना प्रागेव स्वशेषत्वमुक्तम्; तथापि समष्टिचेतनमात्रविषयत्वं तत्र प्रतीयते; इह तु मुक्तस्यापि स्वशेषत्वमुच्यत इत्यपौनरुक्त्यम्॥२०॥२१॥

'पुरुषस्सः' इति श्लोके तुशब्देनार्थान्तरद्योतनादनन्यया भक्त्येत्यस्य सामर्थ्यात्पुरुषशब्दस्य परमात्मनि पुरिशयत्वपूर्णत्वपूर्वसद्भावपुरुदानादिभिर्निमित्तैः [1]'सहस्रशीर्षा पुरुषः' इत्यादिप्रयोगप्राचुर्यात्परशब्देन विशेषणाच्च पूर्वोक्तात्फलादधिकफलोपदेशार्थोऽयं श्लोक इत्यभिप्रायेणाह—**ज्ञानिन** इति । **विभक्तं** विवेचकैरिति शेषः । विलक्षणमितिवार्थः । गगनाद्यन्तस्थितावपि गगनादेः परत्वाभावात्तत्सिद्ध्यर्थं 'यस्य'इत्यादिप्रसिद्धवन्निर्देशोऽत्र पूर्वोक्तपरत्वपर इति दर्शयति—**मत्त** इति। अनुवादपुरोवादयोरैकार्थ्यमिति भावः । [2]'यस्मात्परन्नापरम्' इत्यारभ्य 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रु-

प्र-पा॥ *गी. ७-७॥ †गी. ७-१३॥ १. पुरुषसू॥ २. श्वेताश्वतरोप.३-अ.९॥ 'यस्मात् परं नापरमस्ति किंञ्चित् यस्मात् नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदम्पूर्णम्पुरुषेण सर्वम् ।।' तैत्तिरीये च नारायणानुवाके. १०-१८॥यस्मात्-अपरमन्यत्, परम्-उत्कृष्टं वस्तु नास्ति, यस्माच्च सूक्ष्ममधिकपरिणामं वस्तु वा नास्ति, तादृशो निस्समाभ्यधिकः, अवाप्तसमस्तकामतया तृणीकृतब्रह्मरुद्रादिप्रपञ्चः परमपदे आस्ते; तेन-पुरुषशब्दितेन वासुदेवेन व्याप्तं सकलञ्जगदित्यर्थः । अयम्मन्त्रः वेदार्थसंग्रहश्रीभाष्यश्रुतप्रकाशिकाथर्वशिखाविलासादिषु विस्तरेण व्याख्यातः ॥

शं॥तल्लब्धेरुपाय उच्यते—पुरुषः पुरि शयनात् पूर्णत्वाद्वा,स परः पार्थ, परः निरति-

आ॥धामेति गीयते' इत्यभिधानात् ॥ २१ ॥

परमसाधनमाह—

ज॥तु वाचकश्च तस्येत्याह—**अव्यक्त**मिति।कथं तर्हि भगवताऽव्यक्तस्य स्वस्थानत्वमुच्यत इत्यत आह—**धामे**ति ॥ २१ ॥

'भक्त्या युक्तः'इति भक्तेर्भगवत्प्राप्तिसाधनत्वस्योक्तत्वात् पुनरुक्तमुत्तरं वाक्यमित्यत आह—**पर**-

रा॥येन च परेण पुरुषेण सर्वमिदं ततं, स परः पुरुषः *'अनन्यचेतास्सततम्'इत्यनन्यया भक्त्या लभ्यः ॥ २२ ॥

अथात्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीमर्चिरादिकां गतिमाह; द्वयोरप्यर्चिरादिका गतिश्श्रुतौ श्रुता, सा चापुनरावृत्तिलक्षणा;यथा पञ्चाग्निविद्यायां †'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' इत्यादौ अर्चिरादिकया गतस्य परब्रह्मप्राप्तिरपुनरावृत्तिश्चाम्नाता ‡'स एनान् ब्रह्म गमयति एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति । न च प्रजापतिवाक्यादौ श्रुतपरविद्याङ्गभूतात्मप्राप्तिविषयेयं †'तद्य इत्थं विदुः' इति गतिश्रुतिः, †'ये चेमेऽरण्ये

---

ता॥तिस्मारणाय **येनचपरेणपुरुषेणे**त्युक्तम्। भक्तेरनन्यत्वं कीदृशमित्यत्राह—**अनन्यचेता** इति ॥

'यत्र काले तु' इत्यादेः 'योगयुक्तो भवार्जुन' इत्यन्तस्य तात्पर्यमाह—**अथे**ति। अत्र धूमादिमार्गकथनं हेयत्वार्थम्, अर्चिरादिमार्गोपदेशस्तु तदनुसन्धानार्थ एवेति तत्रैव तात्पर्यमिति भावः। ननु परमपुरुषार्थनिष्ठस्यैव ह्यर्चिरादिगतिः, तत्कथमत्र साधारण्यमुच्यत इत्यत्राह—**द्वयोरपी**ति। आत्मनिष्ठस्याप्यपुनरावृत्तेः पूर्वोक्तत्वात्तस्याप्यर्चिरादिकैव गतिरिति दर्शयितुमाह—**साचे**ति। साधारण्यापुनरावृत्त्योश्श्रुतिमेव दर्शयति—**यथे**ति। अङ्गिफलमेवाङ्गेऽपि व्यपदिश्यत इत्याशङ्क्य परिहरति **न चे**ति। हेतुमाह—**येचे**ति। यद्यप्यङ्गिफलमेवाङ्गेऽपि निर्देष्टुं युक्तम्, तथाप्यङ्गिना सहाङ्गस्य तुल्यवत्पृथङ्निर्दिष्टस्य तत्फलनिर्देशो न युक्त इति भावः। एतेन प्रथमषट्कोदितप्रत्यगात्मवेदनादत्रत्याक्षरयाथात्म्यानुसन्धानस्य भेदोऽपि दर्शितः। †'तद्य इत्थं विदुः'इत्यस्य प्रत्यगात्मनिष्ठविषयत्वं कथमित्य-

---

**प्र-पा** ॥ *गी. ८-१४ ॥

†छा. ५-१०-१ ॥ 'तद् य इत्थं विदुः अहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्। मासेभ्यस्संवत्सरं संवत्सरात् आदित्यमादित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवयानः पन्था इति'।'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना'(छा. ५-३-२')इति पूर्वोक्तप्रश्नस्योत्तरमाह—तद्य इत्थमिति। प्राक्प्रस्तुतस्य संसरतो जीवस्य स्वरूपं 'तत्' इत्यनेन परामृश्यते, तत् - प्रत्यगात्मस्वरूपम्, ये, इत्थं-पूर्वोक्तप्रकारेण, द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतश्शरीरकतया, देहविलक्षणतया, प्रकृतिविविक्ततया च विदुरित्यर्थः। अत्र ब्रह्मात्मकतया चेत्यपि योजनीयम्। तत्र 'तद् य इत्थं विदुः, येचेमेऽरण्ये श्रद्धा तपइत्युपासते'इति विभागान्यथानुपपत्त्या स्वात्मविशिष्टब्रह्मोपासनं, ब्रह्मात्मकस्वात्मोपासनं चेति कल्प्यम्- ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशावैयर्थ्याच्चेत्यर्थः' इति (५-३-१४) श्रुतप्रकाशिकाचार्यैरुक्तम्। अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य तपश्शब्दितं ब्रह्मोपासत इत्यर्थः। 'तपो ब्रह्म' इति 'परमं यो महत्तपः' इति तपःशब्दस्य ब्रह्मपरत्वं दृष्टम्। ब्रह्मोपासीनान् पञ्चाग्निविद्यानिष्ठांश्चोद्दिश्यार्चिरादिका गतिरुपदिश्यते। एतत्सर्वं भाष्यकारैः (४ ३-१४) प्रपञ्चितम्। विस्तरभीत्या नात्र विलिख्यते। तेऽर्चिषमभिसम्भवन्तीति- अत्रार्चिरादिशब्दास्तत्तदभिमानिदेवतापराः। तत्पुरुषः -वैद्युतपुरुषः। अमानवः - असंसारी। ब्रह्मलोकादागत्य ब्रह्मलोकं प्रापयतीत्यर्थः। 'अमानवः स एत्य ब्रह्मलोकान् गमयति'इति श्रुत्यन्तरे श्रवणात्।शेषं स्पष्टम् ॥

‡छा. ४-१५-६ ॥ 'स एनान् ब्रह्म गमयति- एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमानाः...नावर्तन्ते'। देवपथः-देवैरातिवाहिकैर्नीयमानः पन्थाः देवपथः। ब्रह्मप्रापकः पन्थाः-ब्रह्मपथः। एतेन-अर्चिरादिमार्गेण। प्रतिपद्यमानाः, इमं घोरं घटीयन्त्रवत् जननमरणाद्यावर्तकं मनुष्यादिशरीरोपलक्षितं संसारं, नावर्तन्ते-पुनर्न प्रतिपद्यन्ते ॥

१. तुल्यत्वेन. पा॥

रा॥'श्रद्धा तप इत्युपासते' इति परविद्यायाः पृथक्छ्रुतिवैयर्थ्यात्; पञ्चाग्निविद्यायां च * 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति † 'रमणीयचरणाः कपूयचरणाः' इति पुण्यपापहेतुको मनुष्यादिभावोऽपामेव भूतान्तरसंसृष्टानाम्; आत्मनस्तु तत्परिष्वङ्गमात्रमिति चिदचितोर्विवेकमभिधाय ‡ 'तद्य इत्थं विदुः' ‡ 'तेऽर्चिषमभिसंभवन्ति' § 'इमं मानवमावर्तं नावर्तन्ते' इति विविक्ते चिदचिद्वस्तुनी त्याज्यतया प्राप्यतया च य इत्थं विदुस्तेऽर्चिरादिना गच्छन्ति, न च पुनरावर्तन्त इत्युक्तमिति गम्यते । आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च § 'स एनान् ब्रह्म गमयति' इति ब्रह्मप्राप्तिवचनादचिद्वियुक्तमात्मवस्तु ब्रह्मात्मकतया ब्रह्मशेषतैकरसमित्यनुसन्धेयं, तत्क्रतुन्यायाच्च । परशेषतैकरसत्वं च ()'य आत्मनि तिष्ठन्...यस्यात्मा शरीरम्' इत्यादिश्रुतिसिद्धं—

ता॥तत्राह—पञ्चाग्निविद्यायाञ्चेति। 'आपः पुरुषवचसो भवन्ति' इति त्रिवृत्कृतानामभिधीयमानत्वाद्भूतान्तरसंसर्गसिद्धिः। अपामेवेत्यात्मस्वरूपपरिणामव्युदासायोक्तम्। एवंविधशरीरसम्बन्धमात्रस्याप्यौपाधिकत्वप्रदर्शनायाह—पुण्यपापहेतुक इति। † 'रमणीयचरणा रमणीयां योनि...कपूयचरणाः कपूयां योनिम्' इत्यादिवचनान्न केवलाचिद्विषयमिदं प्रकरणम्। ‡ 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्युक्तयद्वृत्तद्वयस्य ‡ 'तेऽर्चिषम्' इत्येकेन तद्वृत्तेन प्रतिनिर्देशादुभयोर्गतिरविशिष्टेति ज्ञापनाय ‡ 'तद्य इत्थं विदुः' ‡ 'तेऽर्चिषम्' इति व्यवहितमुपात्तम्। इत्थंशब्दानूदित प्रस्तुताकारविशेष दर्शयति —विविक्ते इति। ननु § 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' इत्यर्चिरादिना गतस्य ब्रह्मप्राप्तिश्श्रूयते; तत्कथं केवलात्मोपासकस्य ब्रह्मप्रापकार्चिरादिप्राप्तिरित्यत्राह—आत्मयाथात्म्येति । अयं पञ्चाग्निविद्यानिष्ठो न केवलात्मोपासकः, अपितु ब्रह्मात्मकस्वात्मानुसन्धायीति भावः; अन्यथा तत्क्रतुन्यायविरोध इत्यभिप्रायेणाह—तत्क्रतुन्यायाच्चेति । चकार इतरेतरयोगे। यथावस्थितात्मानुसन्धानस्य

प्र पा ॥ *छा. ५-९-१ ॥ †छा. ५-१०-७ ॥ ‡छा. ५-१०-१ ॥ §छा. ४-१५-६ ॥ () शतपथ. माध्य. १४-६-५-३० ॥ १. छा ५-९-१४ ॥

शं॥शयः, यस्मात् पुरुषात् न परं किञ्चित्। सः भक्त्या लभ्यस्तु ज्ञानलक्षणया अनन्यया आत्मविषयया । यस्य पुरुषस्य अन्तस्स्थानि मध्यस्थानि भूतानि कार्यभूतानि, कार्यं हि कारणस्य अन्तर्वर्ति भवति । येन पुरुषेण सर्वम् इदं जगत् ततं व्याप्तम् ॥ २२ ॥

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इति 'यत्र काले' इत्यादिविवक्षितार्थसमर्पणार्थम् उच्यते ; आवृत्तिमार्गोपन्यासः इतरमार्गस्तुत्यर्थः । यत्र काले प्रयाताः इति व्यवहितेन सम्बन्धः । यत्र यस्मिन् काले तु अनावृत्तिम् अपुनर्जन्म आवृत्तिम् तद्विपरीतां

आ॥पुरुषः इति ॥ २२ ॥

यत्कालाद्यभिमानिदेवतागता आवृत्त्यनावृत्ती गच्छन्ति, ता आह—

ज॥मेति। अन्यैः साधनैः सहोक्तत्वेन तत्साम्यशङ्कायां साधनेषु भक्तेः परमत्वमनेनाह। तच्च पुनर्वचनेनैव द्योत्यमिति भावः ॥ २२ ॥

यस्मिन्काले मृताः आवृत्त्यनावृत्ती यान्ति, तत्प्रतिपादनार्थमुत्तरो ग्रन्थ इत्यन्यथाप्रतीतिनिरासार्थमाह—यदिति । याश्च ताः कालाभिमानिन्यश्चेति विग्रहः । देवतागता इति तदधिष्ठितमार्गाभ्यां

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३
अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४

**ता**॥परशेषतैकरसत्वानुसन्धानरूपत्वे प्रमाणमाह—**य आत्मनी**ति।आदिशब्देन 'पतिं विश्वस्य' 'करणाधिपाधिपः' इत्यादिवाक्यशतं गृह्यते । अत्र शारीरकभाष्यादिविरोधो मन्दैराशङ्कितः, इह तावच्छ्रुतिसूत्रभाष्यादिष्वन्यत्र च पञ्चाग्निविदः परमात्मात्मकस्वात्मानुसन्धातृत्वमर्चिरादिगतिश्चाविशेषेणोच्यते। तस्याश्च ब्रह्मगमयितृत्वस्य श्रुत्यादिष्विह च 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इति सिद्धत्वात् पञ्चाग्निविदोऽपि परमात्मप्राप्तिरस्त्येवेति स्वीकर्तव्यम् । तत्र प्राप्तौ ज्ञानिनां परमात्मा स्वविशिष्टो भोग्यः; अक्षरयाथात्म्यनिष्ठाना तु स्वस्वरूपमेव पूर्वं भोग्यम् ; वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यादिन्यायादन्ततो ब्रह्मप्राप्तिः , ईदृशपर्वक्रमप्रतिनियमश्च प्राचीनापेक्षाभेदात् ; स च प्राचीनकर्मविशेषादिति 'चतुर्विधा भजन्ते माम्' इति प्रागेव दर्शितः । नचात्र जिज्ञासोरन्यएवात्मयाथात्म्यविदिति भाष्यते, जिज्ञासुवेद्यतयोक्तस्वभावविसर्गयोरत्र च पञ्चाग्निविद्योदाहरणात् ; मध्ये च कैवल्यार्थिन एव मूर्धन्यनाड्या निष्क्रमणमनावृत्तिश्चोक्ता ; आत्मयाथात्म्याक्षरयाथात्म्यशब्दयो-

**प्र-पा**॥१. तैत्ति नारा.६-११-३ ॥ पाते विश्वस्येत्यस्यार्थ -श्रुतप्रकाशिकायां जिज्ञासाधिकरणे प्रतिपादितः । तत्रत्येयं श्रीसूक्तिः,अनन्येश्वरत्वन्दर्शयति-पतिमिति । अनेन शेषशेषित्वलक्षणभेदोऽपि सिद्धः । नच 'पा-रक्षणे' इति धातोर्निष्पन्नत्वात् पतिशब्दो रक्षकवाची, न तु शेषिवाचीति वाच्यम्, शेषिणि रूढत्वात् ; अन्यथा 'गमेर्डो' इति डोप्रत्ययान्तगमिधातोर्निष्पन्नत्वात् गोशब्दस्य मनुष्यादिवाचकत्वप्रसङ्गः, गतिमत्सु सर्वेषु प्रयोगाभावात् , तिष्ठत्यपि गवि प्रयोगात् । तत्र रूढिशक्त्याश्रय इतिचेत् - एवं 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्यामनुरब्रवीत्' इति न्यायेन पितृसंरक्षके पुत्रे पित्राद्यपेक्षया पतिशब्दाप्रयोगात् , गृहाद्यरक्षकेऽपि स्वामिनि पतिशब्दप्रयोगाच्च शेषिणि पतिशब्दो रूढ. । तथा 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' इति । तथा 'नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वक.' इति दासशेषिशेषशब्दप्रयोगो भगवच्छास्त्रेषु दृश्यते' इति ॥

२. श्वेता. ६-९. 'न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणङ्करणाधिपाधिपो न चास्य कश्चित् जनिता नचाधिपः'।तस्य परमात्मनः, पति. शेषी लोके कश्चित् नास्ति ; ईशिता-नियन्ता , लिङ्गं-शरीरम्, करणानि - इन्द्रियाणि, तेषामधिपः - जीव., तेषा जीवानाम् , अधिपः स्वामी करणाधिपाधिपः ॥

३. कर्मविशेषमूलरुचिवशात् पा ॥

४. गी. ७-१६ ॥

**शं**॥**चैव योगिन इति योगिनः कर्मिणश्चोच्यन्ते, कर्मिणस्तु गुणतः 'कर्मयोगेन योगिनाम्'इति विशेषणात् योगिनः । यत्र काले प्रयाताः मृताः योगिनः अनावृत्तिं यान्ति यत्र काले च प्रयाता आवृत्तिं यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

आ॥**यत्रेत्यादिना । काल इत्युपलक्षणम्, अग्न्यादेरपि वक्ष्यमाणत्वात्** ॥ २३ ॥

**जा**॥गता इत्यर्थः।काल इत्युक्तत्वात् कथमादिपदप्रक्षेपेण व्याख्यानमित्यत आह—**कालइति**।कुत इत्यत आह—**अग्न्यादेरिति**—अग्निर्ज्योतिर्धूमानाम् ॥ २३ ॥

ता॥श्चात्र न भिन्नार्थत्वम् ; तस्योपासने किञ्चिदस्ति विशेषः ; अक्षरयाथात्म्यविदः-परमात्मशरीरभूतस्वात्मोपासकाः, ज्ञानिनस्तु-स्वात्मशरीरकपरमात्मोपासका इत्ययमेव विशेषः '[1]तद्य इत्थं विदु र्ये चेमेऽरण्ये' इति विभागनिर्देशाभिप्रेत इति भाष्यादिषूक्तः।सारे तु '[2]उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन ; स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे' इति । अत एव सप्तमे प्रक्रान्तो जिज्ञासुः परमात्मप्रातिकामज्ञानिव्यतिरिक्तत्वादब्रह्मात्मकस्वात्मानुसन्धायीति न भ्रमितव्यम् । तस्य चोदारकोटिमात्रे निवेशस्स्वात्मानुभवविलम्बविमुखज्ञानिव्यतिरेकात् । अर्चिरादिगतिनिषेधस्तु ब्रह्मात्मकत्वानुसन्धानरहितस्वात्मोपासनविषयः । इदमपि भाष्यादिषु व्यक्तमेवोक्तं—'[3]तस्मादचिन्मिश्रं केवलं वाचिद्वस्तु ब्रह्मदृष्टया तद्वियोगेन च य उपासते न तान्नयति , अपि तु परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गणो नयति' इत्यादिभिः । यत्पुनरुच्यते—'[4]ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः' इति , तत्रापि आत्ममात्रानुभवसुखस्य अस्थिरत्वादेव च्यवनधर्मत्वमुच्यते ; न तावता पुनस्संसारप्रसङ्गः, '[5]इन्द्रलोकात्परिभ्रष्टो मम लोकपरायणः। प्रमुक्तस्सर्वसंसारैर्मम लोकं च गच्छति' '[6]प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकम्' इत्यादिष्विवोत्तरोत्तरातिशयितपदप्राप्तावपि पूर्वपदभ्रंशमात्राच्च्यवनधर्मत्ववाचो युक्तेरविरोधात् , परिमितसुखानुभवविलम्बेन तदानीं निरतिशयसुखानुभवाद्भ्रष्टत्वेनापि निर्दोषपत्तेश्च । उपासनदशानुभूते परमात्मनि फलदशायां किञ्चित्कालमनुभवविच्छेदाद्वा प्राप्तभ्रंशलक्षणं च्यवनधर्मत्वम् । 'प्रतिबुद्धस्तु मोक्षभाक्' इति चाव्यवहितमोक्षभाक्त्वं प्रतिबुद्धस्योच्यते ; न तावतान्यस्य मोक्षाभावः, '[7]भुंक्त्वा च भोगान्विपुलांस्त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य मम लोकमवाप्स्यसि' इतिवदविरोधात् । यथा च मुमुक्षोरेव कस्यचिन्मध्ये ब्रह्मकायनिषेवणसुखमुच्यते, तथात्रापि स्थानविशेषे स्वात्मानुभवविलम्बः । यथा च 'अथवा नेच्छते तत्र ब्रह्मकायनिषेवणम् । उत्क्रामति च मार्गस्थश्शीतीभूतो निरामयः' इत्यादिना ब्रह्मकायनिषेवणसङ्गात् मुक्तस्य देवयानेन मार्गेण परमाकाशगमनमुच्यते; तद्वदिहापि स्वात्मानुभवस्थानात्प्रच्युतस्य परमव्योमाधिरोहस्स्यात् ; अर्चिरादिगतिश्चास्यावान्तरफलानुभवात्पश्चाद्वा, गतिमध्येवा । दक्षिणायनमृतस्य चन्द्रमसस्सायुज्यवद्विश्रममात्ररूपोऽयमवान्तरफलानुभव इत्युभयथापि न विरोधः । एतेन पश्चादेवास्याप्रतीकालम्बनत्वमित्यपि निरस्तं, मधुविद्यावदेव प्रथममपि तदुपपत्तेः । स्मरन्ति च स्वात्मानुभवस्थानं [8]मुक्तिस्थानादर्वाचीन '[9]योगिनाममृतं

प्र-पा॥१. छा. ५-१०-१ ॥
२. वेदान्तसारे. ४-३-१४ ॥
३ श्रीशारीरकमीमासाभाष्ये. ४-३ १५ ॥
४ भारते. शा मो. ३५०-अ. 'चतुर्विधा मम जना भक्ता एवहि ते श्रुता॥ ३३ ॥ तेषामेकान्तिनः श्रेष्ठा येचैवानन्यदेवताः ॥ अहमेव गतिस्तेषा निराशीःकर्मकारिणाम् ॥३४॥ येच शिष्टास्त्रयो भक्ताः ......मताः ॥ सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥३५॥ 'चतुर्विधा' इत्यस्योत्तरार्धतया 'आर्तो जिज्ञासु रर्थार्थी ज्ञानी चेति पृथक्पृथक्' इत्यस्य तत्वदीप तत्वत्रयव्याख्यानादिषूपात्तत्वात् तदप्यत्रानुसन्धेयम् ॥ ५ श्रीवाराहे. १३९-९८॥ ६. यजुषि. ६-का. १-प्र. १-अ. ५॥ ७. वि-पु-५-१९-२६॥ ८ ॥ [8]मुक्तस्थानात् पा ॥ ९. वि. पु. १-६-३८॥

शं॥तं कालमाह—अग्निः कालाभिमानिनी देवता।तथा ज्योतिः अपि देवतैव कालाभि-

आ॥ज्योतिरर्चिः । 'तेऽर्चिषमभिसंभवन्ति' इति हि श्रुतिः। तथा च नारदीये 'अग्नि

जा॥ ज्योतिःशब्दस्यानेकार्थत्वाद्विवक्षितमर्थमाह—ज्योतिरिति । अभिसम्भवन्ति—प्राप्नुवन्ति । श्रुतिपुराणयोरह्नः प्रागर्चिषः प्राप्तेरुक्तेस्तत्समाख्यानादित्यर्थः। प्रातीतिक एवार्थः किं न स्यात्?,कुतो-

ता॥स्थानं स्वात्मसन्तोषकारिणाम् । एकान्तिनस्सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः' इति । अमृतस्थानवर्तिनां च मुक्तत्वव्यपदेशो जरामरणादिविरहात्पुनर्जन्महेतुभूतपुण्यपापविगमाच्च । अस्ति च परित्यक्तस्थूलदेहानामपि तत्तदुपासनविशेषाधीनमपवर्गादर्वाचीनं फलम् । तच्च प्रकृतिलयादिशब्देन साङ्ख्याः पठन्ति 'धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण । ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः । वैराग्यात्प्रकृतिलयस्संसारो भवति राजसाद्रागात् । ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः'इति । 'विपर्ययादिष्यते बन्धः' इत्यत्रच वाचस्पतिना व्याख्यातं— 'विपर्ययात्—अतत्त्वज्ञानात्,इष्यते बन्धः;स च त्रिविधः प्राकृतिको, वैकृतिको; दाक्षिणिकश्चेति । तत्र प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते, तेषां प्राकृतिको बन्धः । यः पुराणे प्रकृतिलयान् प्रकृत्योच्यते —'पूर्णं वर्षसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः'इति । वैकारिको बन्धः तेषाम्; ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीरुपासते पुरुषबुद्ध्या; तान् प्रतीदमुच्यते; यथा—'दैशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रन्त्वाभिमानिकाः । बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः । ते खल्वमीविदेहा येषां वैकृतिको बन्धः ' इति । एवमव्यक्तादितत्त्वचिन्तकानामिव प्रत्यगात्मतत्त्वचिन्तकानामपि तदुचितदेशकालं ततोऽतिशयितं फलमुपपद्यते। अत एव भूमविद्यायां प्रत्यगात्ममात्रोपासकस्याप्यतिवादित्वमुक्तम्।ब्रह्मात्मकस्वात्मानुसन्धाने तु ब्रह्मप्राप्तौ विश्रमादपुनरावृत्तिरिति विशेषः। अत एवाक्षरानुभवस्यान्तवत्त्वे तदर्थिनः कथमैश्वर्यार्थिवदपवर्गाधिकार्यन्तरत्वमित्यपि निरस्तम्, बाह्यान्तरभोक्तव्यविभागादावृत्त्यनावृत्तियोग्यताभेदाच्च तद्भेदोपपत्तेः । विलम्बाक्षमाणां पुनरियं निष्ठा – 'सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् । लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो' इति। '[४] कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति' इत्यादिष्वपि कैवल्यशब्देनात्ममात्रानुभवसुख तदपेक्षिभिः प्राप्यमुच्यते । एतच्चान्तरायकोटिनिविष्टत्वादादितस्सावधाना ज्ञानिनः परिहरन्ति । केचित्तु ब्रह्मानुभववैमुख्येन नित्यमात्मानुभवसुखमिच्छन्ति ; न तत्र भाष्यकारादिसम्प्रदायं प्रमाणं युक्तिं वा पश्यामः ; निश्शेषकर्मक्षये स्वाभाविकरूपाविर्भावेन ब्रह्मानुभवावश्यंभावात् , कर्मशेषयोगे तु संसारप्रसङ्गाच्च जरामरणादिहेतुभूतसर्वकर्मविनाशादसंसारः ; तावन्मात्रेण च मुक्तत्वव्यपदेशः । ब्रह्मानुभवप्रतिबन्धककर्मणस्त्वविनाशात्तदनुभवाभाव इति चेत् —अस्त्वेवम्, एतत्कर्म परस्तादपि न नङ्क्ष्यतीत्यत्र न नियामकमस्ति —इत्येषा दिक् ॥—परप्राप्त्यादिरहितनित्यकैवल्यकल्पना । सूत्रभाष्यश्रुतिस्मृत्याद्यबाधेन न सिध्यति । अतोऽधिकारिभेदेन ह्यवस्थाभेदमाश्रिताः।अन्यामपि गतिं प्राज्ञः प्रतीचीं प्रत्यपादयन्। तत्रावृत्तिपरप्राप्तिवैरूप्यादेरयोगतः। अस्मदुक्तं श्रुतिस्मृत्योरनपायं रसायनम्॥ ननु—अर्चिरादिगतिमाहेति कथमुच्यते?

प्र-पा॥१. साङ्ख्यतत्त्वकौमुदी ॥ २ ॥ ३ ॥ ४. वृद्धहारीतस्मृतौ. ३-४० ॥

शं॥मानिनी।अथवा—अग्निर्ज्योतिषी यथाश्रुते एव देवते।भूयसा तु निर्देशो'यत्र काले' 'तं कालम्'इति,आम्रवनवत्।तथा अहः देवता अहरभिमानिनी;शुक्लः शुक्लपक्षदेवता;षण्मासा उत्तरायणं, तत्रापि देवतैव मार्गभूता इति स्थितः अन्यत्र अयं न्यायः ; तत्र तस्मिन्

आ॥प्राप्य ततश्चार्चिस्ततश्चाप्यहरादिकम्' इति।अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथा 'अह्न आपूर्यमाणपक्षम्' इति युज्यते । 'दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि'

जा॥ऽभिमानिदेवताग्रहणमित्यत आह—अभिमानीति। आदिशब्दसमर्थनेन सह समुच्चयार्थश्चशब्दः । अन्यथा-मरणकालपरिग्रहे। इति श्रुतिः-उपलक्षणमेतत् , 'अहश्शुक्लः' इति गीताऽपि । अहोरात्रव्यतिरिक्तपक्षाभावादिति भावः । समाख्यानाच्चैवमित्याह—दिवादीति । किञ्च 'षण्मासा उत्तरायणं'

रा॥अत्र कालशब्दो मार्गस्याहःप्रभृतिसंवत्सरान्तकालाभिमानिदेवताभूयस्त्वया मार्गोपलक्षणार्थः। यस्मिन्मार्गे प्रयाता योगिनोऽनावृत्तिं,पुण्यकर्माणश्चावृत्तिं यान्ति;तं मार्गं वक्ष्यामीत्यर्थः। 'अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम्'इति संवत्सरादीनां प्रदर्शनम्॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५**

एतच्च धूमादिमार्गस्थपितृलोकादेः प्रदर्शनम्। अत्र योगिशब्दः पुण्यकर्मसंबन्धिविषयः ॥ २५ ॥

ता॥'यत्रकाले' इति कालविशेषो ह्युपक्रम्यत इत्यत्राह—**अत्रकालशब्द** इति । शारीरके दक्षिणायनादिमृतस्यापि मोक्ष उक्तः'अतश्चायनेऽपि दक्षिणे'इति । अत्र च 'शुक्लकृष्णे गती ह्येते'इत्यनन्तरमेवोच्यते ; अन्यथा 'अग्निर्ज्योतिः' इत्यादिना च विरुध्येत ; 'नैते सृती पार्थ जानन्' इति च मार्गवाचिना शब्देनोपसंह्रियत इति भावः। **यत्र काले प्रयाता** इति व्यवहितेन सम्बन्धं दर्शयन् योगिनामावृत्तिः कथमिति च शङ्कां परिहरन् 'यत्रकाले'इति श्लोकस्य वाक्यार्थमाह—**यस्मिन्निति**। अत्र योगिनः-ज्ञानिनः,पुण्यकर्मसम्बन्धिनश्च। 'सरूपाणामेकशेष एकविभक्तौ' । यद्वा पुण्यकर्माण इत्यध्याहृतम्। 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरम्' इत्यादिश्रुत्यनुसारेणोक्तं—**संवत्सरादीनां प्रदर्शन**मिति । एतद्वैशद्यमर्चिरादिपादे । तत्रैव संगृहीतं वरदगुरुभिः 'अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः' इति। 'अग्निर्ज्योतिः' इति अग्निरूपज्योतिरित्यर्थः।तेन देवयानप्रथमपर्वस्थार्चिर्विवक्षा । अत एवाग्निज्योतिषोर्भिन्नदेवतात्वं कालाभिमानि*देवतात्वं च वदन्तः प्रत्युक्ताः ॥२३,२४॥

**पितृलोकादे**रित्यादिशब्देन आकाशचन्द्रग्रहणम् । योगिनो धूमादिमार्गः पुनरावृत्तिश्च कथमुच्यत इत्यत्राह—**अत्र योगिशब्द** इति । अत्र योगशब्द उपायमात्रवाची, यद्वा सम्बन्धमात्रवाची;

प्र पा॥१ शारीरक.४-२ १९ 'अतश्चायनेऽपि दक्षिणे' । दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति, नेति संशयः । 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति'इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात्, चन्द्रप्राप्तानाम् 'अथैतमेवाध्वानम्पुनर्निवर्तन्ते' इति वचनाच्च दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्न सम्भवतीति पूर्वः पक्षः । राद्धान्तस्तु—पूर्वोक्तात् बन्धहेत्वभावात् विदुषश्चन्द्रम्प्राप्तस्याऽपि पुनरावृत्तिर्न सम्भवति । चन्द्रसायुज्यवचनं विदुषो ब्रह्मप्रेप्सोर्विश्रमस्थानमात्रविषयम् । आवृत्तिवचनन्तु-अविदुषामेव । सूत्रार्थस्तु-यतो इतोनिशि मृतस्यापि ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावात् दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव' इति वेदान्तदीपे ॥

२. गी. ८. २६ ॥

३. गी. ८. २७ ॥

४. अष्टाध्याय्या. १. २. ६४ ॥ एकविभक्तौ यानि सरूपाण्येव दृष्टानि, तेषामेक एव शिष्यते ॥

५. छा. ५. १०. १, २ ॥

६. तत्त्वसारे १०२. श्लो ॥ *विशेषत्वं. पा ॥

शं॥'मार्गे प्रयाताः मृताः गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासकाः ब्रह्मोपासनपरा जनाः । 'क्रमेण' इति वाक्यशेषः; न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिः आगतिर्वा क्वचित् अस्ति ॥ २४ ॥

आ॥इति ब्राह्मे । मासाभिमानिभ्योऽयनाभिमानी च पृथक् । तच्चोक्तं गारुडे 'पूजित-

ज॥'षण्मासा दक्षिणायनम्'इत्येतदपि अभिमानिदेवतां गमयति,मासातिरिक्तायनाभावात्;अभिमानिनां तु पृथक्त्वेन पृथगुक्तिसम्भवादिति भावेनाह—**मासे**ति।अनेन षण्मासा एवायनमिति व्याख्यानं च नि-

**शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥** २६

रा॥ शुक्ला गतिः - अर्चिरादिका, कृष्णा च धूमादिका। शुक्लयाऽनावृत्तिं याति; कृष्णया तु पुनरावर्तते । एते शुक्लकृष्णे गती ज्ञानिनां, विविधानां पुण्यकर्मणां च श्रुतौ शाश्वते मते। *'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति †'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इति ॥ २६ ॥

ता॥धूमादिसामर्थ्यात्तु पुण्यकर्मस्वरूपसम्बन्धिविशेषसिद्धिरिति भावः । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्यादिका श्रुतिरत्रोपबृंहिता ॥ २५ ॥

उक्तमार्गद्वये श्रुतिप्रसिद्धिः प्रदर्श्यते—'शुक्लकृष्णे' इति श्लोकेन । अत्र शुक्लपक्षकृष्णपक्षान्वयाद्वा,शुद्ध्यशुद्धिविवक्षया वा,अभिमन्तृस्वरूपस्याभिमन्तव्ये आरोपाद्वा,गत्योश्शुक्लकृष्णशब्दोपचारः। अत्राधिकृतवर्गद्वयविषयजगच्छब्दाभिप्रेतप्रदर्शनं— **ज्ञानिनां विविधानां पुण्यकर्मणां चेति** । 'इष्टापूर्ते दत्तमित्युपासते' इत्युक्ततत्तत्कर्मनिष्ठभेदाभिप्रायेण विविधशब्दः । हिशब्देन श्रुतिप्रसिद्धिर्द्योतितेति—**श्रुतावित्युक्तम्**। शाश्वतत्वं प्रवाहरूपेणानाद्यनन्तत्वं व्यवस्थितत्वम् ॥ २६ ॥

प्र-पा ॥ *छा. ५-१०-१ ॥

†१.छा.५-१०-३॥ 'अथ य इमे ग्रामे...उपासते । ते धूममभिसंभवन्ति । धूमात् रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासास्तान्नैते संवत्सरमभिप्राप्नुवन्ति । अथेति - ये - पुरुषाः, ग्राम एव स्थित्वा । इष्टं - यागादि । पूर्तं-खातादि । दत्त दानम् ।इतिशब्दस्तत्सजातीयोपवासादिकर्मान्तरपर. । यागदानहोमादीनि कर्माणि येऽनुतिष्ठन्तीत्यर्थः।ते धूममिति-अत्र धूमादिशब्दास्तत्तदभिमानिदेवतापरा । दक्षिणा दक्षिणान्दिशमादित्य एति। 'दक्षिणादाच्'इत्याजन्तोऽयंशब्द.। दक्षिणायनमासाभिमनिनीर्देवताः प्रतिपद्यत इत्यर्थः । नैते संवत्सरमिति- एते इष्टादिकेवलकर्मकारिणः, दक्षिणायनमासान् प्राप्यापि विद्वांस इव न संवत्सरम्प्राप्नुवन्तीत्यर्थ. ॥

शं॥धूमो रात्रिः धूमाभिमानिनी रात्र्यभिमानिनी च देवता । तथा कृष्णः कृष्णपक्षदेवता । षण्मासा दक्षिणायनम् इति च पूर्ववत् देवतैव। तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलम् इष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयात् इह निवर्तते पुनः॥२५॥

शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे, ज्ञानप्रकाशकत्वात् शुक्ला,तदभावात् कृष्णा, एते शुक्लकृष्णे हि गती, जगतः इति अधिकृतानां ज्ञानकर्मणोः, न जगतः सर्वस्यैव एते गती भवतः, शाश्वते नित्ये, संसारस्य नित्यत्वात् , मते अभिप्रेते । तत्र एकया शुक्लया याति अनावृत्तिम्, अन्यया इतरया आवर्तते पुनः भूयः ॥ २६ ॥

आ ॥ स्त्वयनेनासौ मासैः परिवृतेन हि' इति । अहरभिजिता शुक्लं पौर्णमास्यायनं विषुवासह । तच्चोक्तं ब्रह्मवैवर्ते—'साह्ना मध्यं दिनेनाथ शुक्लेन च सपूर्णिमा।सविष्वा चायनेनासौ पूजितः केशवं व्रजेत्' इति ॥ २४, २५, २६ ॥

ज॥रस्तं भवति, पुराणविरोधात् । अत्रानुक्तमपि किञ्चिदध्याहरति--अहरिति। सहस्थितं यातीत्यप्यत्र द्रष्टव्यमिति भावः। एतदप्यभिमानिदेवतापरिग्रहसमर्थनार्थम्। प्राधान्यादेरविवक्षितत्वात्-साह्नेत्युक्तम्। सपूर्णिमा—सपूर्णिमेन, 'सुपां सुलुक्'इत्यादेः। विषुशब्दस्योवङ्यणादेशविकल्पश्छान्दसः॥२४-२६।

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥** २७

रा॥एतौ मार्गौ जानन् योगी प्रयाणकाले कश्चन न मुह्यति; अपितु स्वेनैव देवयानेन पथा याति । तस्मादहरहरर्चिरादिगतिचिन्तनाख्ययोगयुक्तो भव ॥ २७ ॥

अथाध्यायद्वयोदितशास्त्रार्थवेदनफलमाह—

**वेदेषु यज्ञेषु तपस्सु चैव दाने च यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥** २८

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

श्रीकृष्णाय परब्रह्मणे नमः.

---

**ऋग्यजुस्सामाथर्वरूपवेदाभ्यासयज्ञतपोदानप्रभृतिषु सर्वेषु पुण्येषु यत्फलं निर्दिष्टम्,**

ता॥'नैते सृती' इति श्लोकेन यद्यपि मार्गचिन्तनमप्युपासनवत्परमपुरुष†प्राप्त्यर्थमेव; तथापि मार्गज्ञानं हि गन्तुरव्याकुलगमनार्थमिति लोके सिद्धम्; अत्रापि तथोपकारस्संभवन्नपरित्याज्यः; तत्प्रसादादेव हि तत्सिद्धिरपीत्यभिप्रायेणाह—**एताविति**। **कश्चनेति**—कश्चिदपीत्यर्थः । **न मुह्यति**—'तत्प्रकाशितद्वारः' इत्यादिप्रकारेण स्पष्टमार्गो भवतीत्यर्थः। मार्गद्वयज्ञानं हेयमार्गप्रहाणार्थमित्यभिप्रायेणाह—**अपित्विति** । गतिज्ञानस्य फलमुपदिश्य तस्मादितिहेतुतया परामृश्य साक्षाद्योगविधानस्यासङ्गतत्वाद्योगशब्दोऽत्र ध्यानमात्रविषयः । तच्च ध्यानं प्रस्तुतगतिचिन्तनरूपमेव भवितुमर्हतीत्यभिप्रायेणाह--**तस्मादिति** ॥ २७ ॥

'इदं विदित्वा' इति सामान्यतो निर्देशादविशेषाच्चैकप्रकरणभूताध्यायद्वयार्थो गृह्यत इत्यभिप्रायेणाह—**अथेति** । 'वेदेषु' इत्यपि यज्ञादिवत्फलकारणतयोपादानम्; नतु प्रतिपादकतया, तदा यज्ञादिफलव्यतिरिक्तविषयतया सङ्कोचनीयत्वापातात् । वेदाभ्यासस्य च दुरितक्षयादिफलप्रदत्वं श्रुत्यादिसिद्धम्। यज्ञादिफलानां प्रतिपादकतयोपादाने च प्रस्तुताध्यायद्वयार्थस्यापि वेदार्थत्वात्ततोऽपि सङ्कोचस्स्यात्। तदेतत्सर्वमभिप्रेत्य—**वेदाभ्यासे**त्युक्तम् । 'दाने च' इति चकारस्यानुक्तसमुच्चायकत्वप्रदर्शनाय—**प्रभृति**शब्दः । 'पुण्यफलम्' इत्यत्र पुण्यशब्देन फलविशेषणतया यज्ञादीनामेव सामान्यतो निर्देशः फलस्य श्लाघ्यताप्रदर्शनार्थं इत्यभिप्रायेण यज्ञादिविशेष्यतया—**पुण्येष्वि**त्युक्तम् । अध्यायद्वयोदितं भगवन्माहात्म्यमिति—सप्तमारम्भे हि भगवन्माहात्म्यं प्रक्रान्तम्; तदनुबन्धाद-

---

प्र-पा॥ †प्रीत्यर्थमेव. पा ॥ १. शारी. ४-२-१६ ॥

---

शं॥ न एते यथोक्ते सृती मार्गौ पार्थ जानन् 'संसाराय एका, अन्या मोक्षाय' इति, योगी न मुह्यति कश्चन कश्चिदपि । तस्मात् सर्वेषु कालेषु योगयुक्तः समाहितो भव अर्जुन ॥ २७ ॥

शृणु तस्य योगस्य माहात्म्यं—वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येन अनुष्ठितेषु तपस्सु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु, एतेषु यत् पुण्यफलं प्रदिष्टं शास्त्रेण,

---

ज॥'नैते सृती पार्थ' इति मार्गज्ञानमात्रेण मोहाभावोऽभिधीयत इति प्रतीतिनिरासार्थमाह—एते

रा॥इदम्-अध्यायद्वयोदितं भगवन्माहात्म्यं विदित्वा तत्सर्वमत्येति-एतद्वेदनसुखातिरेकेण तत्सर्वं तृणवन्मन्यते । योगी-ज्ञानी च भूत्वा ज्ञानिनः प्राप्यं परमाद्यं स्थानमुपैति ॥ २८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

---

ता॥न्यत्सर्वमुक्तमिति भावः।'परं स्थानमुपैति'इति योगानुष्ठानसाध्यस्य साक्षात्फलस्य पृथगुच्यमानत्वात्तद्विषयत्वे पौनरुक्त्यादधिकपुण्यफलप्राप्तिविवक्षाया लक्षितलक्षणापातात्संसारनिवृत्तिमात्रपरत्वेऽपि पुण्यफलशब्देन पापफलस्यापि लक्षयितव्यत्वात् 'तत्सर्वमत्येति' इत्येतत्तद्विवेकमूलविरक्त्यभिप्रायम् । अतिशयितफलवेदनं हि 'मनःप्रीतिरनायासात्' इत्यादिन्यायेन फलान्तरवैतृष्ण्यहेतुरित्यभिप्रायेणाह—**एतद्वेदनेति** । भगवन्माहात्म्यज्ञानस्य परस्थानप्राप्तिहेतुत्वे प्रागुक्तज्ञानविशेषरूपद्वारप्रदर्शनं 'योगी' इत्यनेन क्रियत इत्यभिप्रायेण -**ज्ञानी च भूत्वेत्युक्तम्** । परत्वं देशकालयोगादिभिः, 'आदित्यवर्णं तमसः परस्तात्' 'तदक्षरे परमे व्योमन्' 'दिव्यं स्थानमजरं चाप्रमेयम्' 'एते वै निरयास्तात स्थानस्य परमात्मनः' इत्यादेः । आद्यम्-अनादिमित्यर्थः । 'आदौ भवं कारणं ब्रह्म इति परोक्तं तु स्थानशब्दवैघट्यादयुक्तम् ॥ २८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य

कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायाम्

अष्टमोऽध्यायः ॥ ८ ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

**प्र-पा**॥ १॥ २. पुरुषसू ॥ श्वे. ३-८ ॥ ३ तै. ना. ६-१-२ ॥ ५ भारते-मौसल.५-२७ 'दिव्यं स्थानमजरञ्चाप्रमेय दुर्विज्ञेयञ्चाऽगमैर्गम्यमाद्यम् । गच्छ प्रभो रक्ष चास्मान्प्रपन्नान् कल्पेकल्पे जायमानस्स्वमूर्त्या' ॥ ५. भारते. शा. मो. १९६-३१ ॥

---

शं॥ अत्येति अतीत्य गच्छति तत् सर्वं फलजातम्,इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेण उक्तम् अर्थं सम्यक् अवधार्य अनुष्ठाय योगी,परम् उत्कृष्टम् ऐश्वरं स्थानम् उपैति च प्रतिपद्यते आद्यम् आदौ भवं कारणं ब्रह्म इत्यर्थः ॥ २८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ

श्रीमद्गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

---

आ॥एते सृती सोपाये ज्ञात्वा अनुष्ठाय न मुह्यति । तथाह स्कान्दे 'सृती ज्ञात्वा च सोपाये अनुष्ठाय च साधनम् । न कश्चिन्मोहमाप्नोति न चान्या तत्र वै गतिः' इति ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

---

ज॥इति। अनुष्ठाय—उपायमिति शेषः। कुत एतत् ? योगीत्युक्तत्वात्, पुराणसंवादाच्चेत्याह—तथेति। मोहो भगवद्विस्मृतिरूपः । अन्या भगवत्प्राप्तेः । भाष्ये पुराणे चानुष्ठायेत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः ; मूलपुस्तकेष्वदर्शनात् ॥ २७ - २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां

जयतीर्थमुनिविरचितायाम् अष्टमोऽध्यायः ॥ ८ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

ऐश्वर्याक्षरयाथात्म्यभगवच्छरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ १२ ॥

श्रीमद्यामुनमुनये नमः.

---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

ऐश्वर्यमत्रेन्द्रप्रजापतिपशुपतिभोगेभ्योऽतिशयितभोगः; अक्षरयाथात्म्य - विविक्तात्मस्वरूपम्; वेद्यास्तु 'अक्षरं ब्रह्म परमम्' इत्यादिनोक्ताश्शुद्धात्मस्वरूपप्रभृतयः; उपादेयास्तु-तत्तदिष्टफलानुरूपपरमपुरुषचिन्तनान्तिमप्रत्ययगतिचिन्तनादयः । त एव भावाः पदार्थाः, तेषां भेदः-तत्तदधिकारानुरूपो विशेषः ॥ १२ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.






# नवमोऽध्यायः

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १

रा॥उपासकभेदनिबन्धना विशेषाः प्रतिपादिताः। इदानीमुपास्यस्य परमपुरुषस्य माहात्म्यं, ज्ञानिनांच विशेषं विशोध्य भक्तिरूपस्योपासनस्य स्वरूपमुच्यते। इदं तु ते गुह्य-

ता॥'स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम्। विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः' इति सङ्ग्रहश्लोकमपि व्याकुर्वंस्तदनुसारेणाष्टमनवमयोस्सङ्गतिं च दर्शयति—उपासकेत्यादिना। विशेषाः—ज्ञातव्योपादेयभेदाः । परमपुरुषमाहात्म्यस्य ज्ञानिनां विशेषस्य च प्रागेव प्रकृतत्वात्तत्प्रभावविशोधनमत्रोपासनतत्फलानुप्रविष्टतया क्रियते; अध्यायप्रधानार्थस्तूपासनस्वरूपनिष्कर्ष इत्यभिप्रायेण—विशोध्येति विच्छिद्य, भक्तिरूपस्येत्यादि पृथगुक्तम् । भजनोपासनशब्दयोरस्मिन्नेवाध्याये प्रकरणान्तरेषु च समानविषयतयैव प्रयोगवशाच्छ्रुतिसिद्धोपासनस्यैवात्र भक्तिशब्देन विशेषणं कृतमित्यभिप्रायेण—भक्तिरूपस्योपासनस्येत्युक्तम् । अत्र 'इदं तु ते गुह्यतमम्' इति ज्ञानस्योपक्रान्तत्वात्, 'मन्मना भव' इतिचोपसंह्रियमाणत्वात्,मध्ये च बहुशो भजनस्यैवाभ्यस्यमानत्वात्,प्रत्यक्षरूपत्वनिरतिशयप्रियत्वकीर्तनयतननमस्काररूपत्वादीनां चापूर्वाणां भक्तिस्वरूपानुप्रवेशिनां प्रकाराणां प्रतिपाद्यमानत्वात्, स्वरूपतस्साध्यतया निरतिशयफलप्रतिपादनात्, 'राजविद्या' इत्यादिना प्रशंसारूपार्थवाददर्शनाच्चात्रोपक्रमोपसंहारादितात्पर्यलिङ्गैः भक्तिस्वरूपनिष्कर्षेऽध्यायस्य तात्पर्यम्;तदन्विततयान्यदत्रोच्यत इत्यभिप्रायः।'इदं तु ते' इत्यत्र वक्ष्यमाणमेव बुद्धिस्थतया 'इदम्' इति निर्दिष्टम् । 'एष तु वा अतिवदति' इति प्राणविदपेक्षया सत्यविदोऽधिकत्ववत्, तुशब्देन कर्मयोगज्ञानयोगाभ्यामप्यस्याधिक्यं विवक्षितम् । तयोर्हि गुह्यत्वं, गुह्यतरत्वंच । इदं तु गुह्यतमम् । इदं च शुश्रूषातिशयोत्थापनार्थं, गोपनाधिक्यशिक्षणार्थं

प्र-पा ॥ १. गी. सं-१३ ॥ २. गी. ९-३४ ॥ ३. छा. ७-१६-१ ॥

शं॥अष्टमे नाडीद्वारेण धारणायोगः सगुणः उक्तः । तस्य च फलम् अग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेव अनावृत्तिरूपं निर्दिष्टम् । तत्र 'अनेनैव प्रकारेण मोक्षप्राप्तिः फलम् अधिगम्यते, न अन्यथा' इति तदाशङ्काव्याविवर्तयिषया भगवान् उवाच

आ॥ओं ॥ सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये । राजविद्या—प्रधानविद्या । प्रत्यक्षं

ज्ञा॥पूर्वसंगतत्वेनाध्यायार्थमाह—सप्तमेति । भगवन्माहात्म्यमिति शेषः। पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति सप्तमोक्तपदार्थानष्टमे व्याख्याय नवमे तद्वाक्यार्थं स्पष्टीकरोतीत्यर्थः । राज्ञामश्वपतिज-

रा॥तमं,भक्तिरूपमुपासनाख्यं-ज्ञानं विज्ञानसहितम्-उपासनगतविशेषज्ञानसहितम्,अनसूयवे ते प्रवक्ष्यामि। मद्विषयं सकलेतरविसजातीयमपरिमितप्रकारं माहात्म्यं श्रुत्वा एवमेव सम्भवतीति मन्वानाय ते प्रवक्ष्यामीत्यर्थः; यज्ज्ञानमनुष्ठानपर्यन्तं ज्ञात्वा मत्प्राप्तिविरोधिनः सर्वस्मादशुभान्मोक्ष्यसे ॥ १ ॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥** २

**राजविद्या - विद्यानां राजा, राजगुह्यं - गुह्यानां राजा, राज्ञां विद्येति वा राजवि-**

ता॥चोक्तम् । उपबृंहणीयवेदान्तवाक्येष्विवात्रापि ज्ञानशब्दस्य वक्ष्यमाणविशेषपर्यवसानप्रदर्शनाय— **भक्तिरूपमुपासनाख्यमित्युक्तम्। उपासनगतविशेषज्ञानसहितमिति** पूर्वोक्तविज्ञानादत्रत्यविज्ञानस्य भेदः; तद्धयुपास्यादिविशेषज्ञानम्, उपासनगतविशेषः, उपासनप्रकारः। प्रस्तुतौपयिकमनसूयुत्वप्रकारं दर्शयति—**मद्विषयमिति** । गुणेषु दोषाविष्करणचित्तवृत्तिविशेषो ह्यसूया, तद्विपर्ययश्च गुणेषु गुणाध्यवसाय एव हीति भावः। एतेनोपदेशयोग्यायोग्यविभागेन शिष्यशिक्षणं कृतम् । स्मरन्ति च विद्याया वचनम्—'असूयकाय मां मादाः' इत्यादि । वक्ष्यति च 'इदं ते नातपस्काय' इत्यारभ्य 'न च मां योऽभ्यसूयति'इति । प्रवक्ष्यामि-कृत्स्नं लघु व्यक्तं च वक्ष्यामीत्यर्थः । **यज्ज्ञानमनुष्ठानपर्यन्तं ज्ञात्वेति**—नह्यनुष्ठेयज्ञानमात्रादनुष्ठानफलम् ; अत उपासनस्वरूपं ज्ञात्वा तदनुष्ठानद्वारा मोक्ष्यस इत्युच्यत इति भावः । कर्मादिभिर्हि भक्त्युत्पत्त्यादिविरोधिपापनिरसनम् , भक्त्या तु भगवत्प्राप्तिविरोधिसमस्तपापनिरसनं हि प्रमाणसिद्धमित्यभिप्रायेण—**मत्प्राप्तिविरोधिनस्सर्वस्मादशुभादित्युक्तम्।** अशुभशब्दस्यात्र स्वर्गाद्यपरपर्यायव्यामोहननिरयहेतुभूतपुण्यशब्दाभिलप्यपापविषयत्वमपि - **सर्वस्मादित्यनेन** विवक्षितम् ॥ १ ॥

उपायान्तरेभ्योऽस्योपायस्यातिशयं दर्शयति—**राजविद्येति** । राजशब्दस्यात्र क्षत्रियविषयत्वे 'विशेषविधिश्शेषनिषेधं गमयति' इतिन्यायात् ब्राह्मणादेरनधिकारप्रसङ्गाद्राज्ञां विद्येति विग्रहमनादृत्याह—**विद्यानां राजा...गुह्यानां राजेति** । समानाधिकरणसमासफलमनुरुध्येदमुक्तम् , शब्दार्थस्तु

**प्र·पा** ॥ १ ॥ २. गी. १८. ६७॥

शां॥—**इदं ब्रह्मज्ञानं,वक्ष्यमाणम्,उक्तं च पूर्वेषु अध्यायेषु । तत् बुद्धौ सन्निधीकृत्य 'इदम्' इत्याह । तुशब्दो विशेषनिर्धारणार्थः । इदमेव तु सम्यग्ज्ञानं सक्षात् मोक्षप्राप्तिसाधनं, 'वासुदेवः सर्वमिति''आत्मैवेदं सर्वम्''एकमेवाद्वितीयम्' इत्यादिश्रुतिस्मृतिभ्यः;नान्यत्, 'अथ येऽन्यथाऽतो विदुः अन्यराजानः ते क्षय्यलोका भवन्ति ' इत्यादिश्रुतिभ्यश्च । ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्यामि अनसूयवे असूयारहिताय । किं तत्? ज्ञानम्, किंविशिष्टं?—विज्ञानसहितम् अनुभवयुक्तम् ; यत् ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसे अशुभात् संसारबन्धनात् ॥ १ ॥**

आ॥**ब्रह्म अवगम्यते येन तत्प्रत्यक्षावगमम्। अक्षेषु-इन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः।**

ज॥नकादीनां विद्या राजविद्येति कश्चित्, तदसत्, ब्राह्मणादीनामनधिकारप्रसङ्गादिति भावेनाह—**राजेति** । राजेव राजा, राजा चासौ विद्या चेति राजविद्येत्यर्थः। प्रत्यक्षेणावगमो यस्येति व्याख्यानमसत्, भगवन्माहात्म्यस्य शास्त्रैकसमधिगम्यत्वात् । अद्वैतोद्गारस्य प्रमाणविरुद्धत्वादिति भावेनाह—**प्रत्य-**

रा॥द्या; राजानो हि विस्तीर्णगाधमनसः; महामनसामियं विद्येत्यर्थः; महामनस एव गोपनीयगोपनकुशला इति तेषामेव गुह्यमिदम्; उत्तमं पवित्रं - मत्प्राप्तिविरोध्यशेषकल्मषापहं;प्रत्यक्षावगमम् - अवगम्यत इत्यवगमो विषयः, प्रत्यक्षभूतोऽवगमो विषयो यस्य ज्ञानस्य तत्प्रत्यक्ष्यावगमम्, भक्तिरूपेणोपासनेनोपास्यमानोऽहं तदानीमेवोपासितुः प्रत्यक्षतामुपगतो भवामीत्यर्थः।अथापि धर्म्यं-धर्मादनपेतम्,धर्मत्वं हि निश्श्रेयससाधनत्वम्; स्वरूपेणैवात्यर्थप्रियत्वेन तदानीमेव मद्दर्शनापादनतया च स्वयं निश्श्रेयसरूपमपि निर-

---

ता॥राजभूता विद्येति । राजदन्तादिषु वा पाठो द्रष्टव्यः। 'पवित्रमिदमुत्तमम्'इत्युत्तमशब्दसमानन्यायतया राजशब्दोऽत्र श्रेष्ठवाची। एवमप्रसिद्धार्थक्लेशमसहमान आह—राज्ञां विद्येति । ब्राह्मणादेरधिकारनिषेधपरत्वशङ्कापरिहारायोपचारनिमित्तं गुणं दर्शयति—राजानो हीति । फलितमाह—महामनसामिति । अजहल्लक्षणा वा, गौणी वा वृत्तिरिह विवक्षिता, अन्यैर्ज्ञातुमशक्यत्वादिति भावः । राजगुह्यम्'इत्यस्यापि सप्रयोजनत्वायौपचारिकार्थत्वं दर्शयति—महामनस एव हीति। उपायविरोधिनिवर्तककतिपयनिवर्तकव्यवच्छेदार्थमुत्तमशब्दविशेषितपवित्रशब्दविवक्षितमाह—मत्प्राप्तीति । 'प्रत्यक्षावगमम्' इत्यत्र प्रत्यक्षरूपज्ञानपरत्वे नपुंसकत्वायोगाज्ज्ञानस्यैव विशेष्यस्य ज्ञानमेव विशेषणीकृत्य बहुव्रीह्ययोगाच्च कर्मणि व्युत्पत्त्या बहुव्रीहित्वं घटयति—अवगम्यत इत्यादिना । नन्विदमयुक्तम्, उपासनस्य स्मृतिसन्ततिरूपत्वात्,उपास्यस्य चाप्रत्यक्षत्वश्रुतेः,प्रत्यक्षस्य तु विषयान्तरस्य भक्तावनन्वयादित्यत्राह—भक्तिरूपेणेति । 'भक्त्या त्वनन्यया शक्यः' इत्यादिकमिह भाव्यम् । तदानीमेवेत्यासक्तिवशादुक्तम् । स्वयं फलभूतानां हि फलान्तरसाधनत्वरूप धर्मत्वं दुर्लभमित्यभिप्रायेणाह—अथापि धर्म्यमिति । 'धर्मपथ्यर्थन्यायादनपेते' इति सूत्रानुसारेण धर्म्यशब्दं निर्वक्ति—धर्मादिति । अभिप्रेतं विवृणोति—धर्मत्वं हीत्यादिना । प्रीतिपर्यायधृतिवाचके धातौ करणविवक्षया व्युत्पन्नो ह्य-

प्र-पा ॥ १. गी. ११-५४ ॥ २. अष्टाध्याय्या-४-४-९२ ॥ ३. प्रीतिपर्यायसूचन. पा ॥

---

शां॥तत्र—राजविद्या विद्यानां राजा,दीप्त्यतिशयवत्त्वात्; दीप्यते हि इयम् अतिशयेन ब्रह्मविद्या सर्वविद्यानाम्। राजगुह्यं तथा गुह्यानां राजा। पवित्रं पावनम् इदम् उत्तमं,सर्वेषां पावनानां शुद्धिकारणम् इदं ब्रह्मविज्ञानम् उत्कृष्टतमम्।अनेकजन्मसहस्रसञ्चितमपि धर्माधर्मादि समूलं कर्म क्षणमात्रादेव भस्मीकरोति इत्यतः किं तस्य पावनत्वं वक्तव्यम्। किञ्च—प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिव अवगमो यस्य तत् प्रत्यक्षावगमम् । अनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टं, न तथा आत्मज्ञानं धर्मविरोधि, किंतु धर्म्यं धर्मादनपेतम् । एवमपि स्यात् दुःखसम्पाद्यम् इत्यत आह—सुसुखं कर्तुं, यथा रत्नविवेकवि-

---

आ॥ तथा च श्रुतिः—'यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।यो वाचि तिष्ठन्...यश्चक्षुषि तिष्ठन्'इत्यादिः। 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते'इति च।'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति

---

जा॥क्षमिति। शास्त्रैकवेद्यं ब्रह्म कथं प्रत्यक्षमित्यत आह —अक्षेष्विति । प्रत्यक्षः परमात्मा । प्रादिसमासोऽयं, नाव्ययीभाव इति ज्ञापनाय नपुंसके प्रकृतेऽपि पुल्लिङ्गनिर्देशः । अन्यथा षष्ठी न श्रूयेत । परमात्मनोऽक्षेषु स्थितत्वे किं मानमित्यत आह—तथाचेति । प्राण इति प्राणाभिमानिनी देवतोच्यते। प्राणादन्तरो भिन्नः । अङ्गुष्ठेति—कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । मनइत्यादेर्मनआदिस्थ इत्यर्थः ।

रा॥तिशयनिश्श्रेयसरूपात्यन्तिकमत्प्राप्तिसाधनमित्यर्थः । अत एव सुसुखं कर्तुं-सुसुखोपादानम्;अत्यर्थप्रियत्वेनोपादेयम्;अव्ययम्-अक्षयं,मत्प्राप्तिं साधयित्वापि स्वयं न क्षीयते; एवंरूपमुपासनं कुर्वतो मत्प्रदाने कृतेऽपि न किञ्चित्कृतं मयास्येति मे प्रतिभातीत्यर्थः॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३

अस्योपासनाख्यस्य धर्मस्य निरतिशयप्रियमद्विषयतया स्वयं निरतिशयप्रियरूपस्य परमनिश्श्रेयसरूपमत्प्राप्तिसाधनस्याव्ययस्योपादानयोग्यदशां प्राप्य अश्रद्दधानाः विश्वा-

ता॥यं धर्मशब्द इति भावः। उक्तं चाभियुक्तैः 'धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् । तद्धर्मपदवाच्यार्थनिरूपणविवक्षया' इत्यादि । श्रेयसोऽत्रावच्छेदकाभावात्'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्श्रेयसामृतम्' इति नैघण्टुकपाठाच्च—**निरतिशयेत्यादिकमुक्तम्** । **अतएवेति**—स्वरूपतस्साध्यतश्च पुरुषार्थरूपत्वादित्यर्थः। कर्तुं सुसुखं-करणे सुसुखमित्यर्थः। सुसुखमित्यस्य तुमुनन्तक्रियाकर्मीभावभ्रमव्युदासायाह—**सुसुखोपादानमिति** । उपसर्गसुखशब्दयोरत्राभिप्रेतमाह—**अत्यर्थेति** । स्वरूपतो विषयतश्चात्यर्थानुकूलत्वात्सुखेनानुष्ठेयमित्यर्थः । फलविनाश्यं हि सर्वमन्यत्कर्म; इदं तु सुकरमपि फलेनापि न क्षीयते; अपवर्गरूपं फलमप्येतस्य नालमित्यतिशयपरोऽव्ययशब्द इत्यभिप्रायेणाह—**अक्षयमिति** । तद्विवृणोति—**मत्प्राप्तिमिति** । तर्हि किमन्यदधिकं साध्यमिति शङ्कायामभिप्रेतमाह—**एवंरूपमिति**॥

उक्तप्रकारश्रद्धेयज्ञानानुष्ठानाभावे मोक्षो न सिध्यतीति दर्शयन् स्वरूपतः फलतश्च निरतिशयसुखरूपस्य सर्वैरनुष्ठानाभावे हेतुं च वदन्—'नान्यः पन्था अयनाय' इत्यादिकमुपबृंहयति 'अश्रद्दधानाः' इति श्लोकेन । अस्येति पूर्वोक्तसर्वाकारपरामर्श इत्याह—**निरतिशयेत्यादिना** । धर्मस्येति सम्बन्धसामान्यविषयायाः षष्ठ्याः फलितान्वयप्रदर्शनायाह—**उपादानयोग्यदशां प्राप्येति** । यद्वा

प्र-पा ॥ १ ॥ २. नामलिङ्गानुशासने. १ काण्डे. धीवर्गे. ४६-श्लो ॥ ३. पुरुषसूक्ते ॥

शं॥ज्ञानम्। तत्र अल्पायासानाम् अन्येषां कर्मणा सुखसम्पाद्यानाम् अल्पफलत्वं,दुष्कराणां च महाफलत्वं दृष्टमिति, इदं सुखसम्पाद्यत्वात् फलक्षयात् व्येति इति प्राप्ते आह—अव्ययम् इति । न अस्य फलतः कर्मवत् व्ययः अस्तीति अव्ययम् । अतः श्रद्धेयम् आत्मज्ञानम् ॥ २॥

ये पुनः—अश्रद्दधानाः श्रद्धाविरहिताः आत्मज्ञानस्य धर्मस्य अस्य स्वरूपे तत्फले च नास्तिकाः पापकारिणः, असुराणाम् उपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्नाः, असुतृपः पापाः पुरुषाः अश्रद्दधानाः परन्तप अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैव आशङ्का इति

आ॥ च। 'त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुरादित्यः'इत्यादेश्च मोक्षधर्मे।'स प्रत्यक्षः प्रति इति हि सोऽक्षेष्वक्षवान् भवति यः एवं विद्वान्प्रत्यक्षं वेद' इति सामवेदे बाभ्रव्यशाखायाम्। धर्मो भगवान् तद्विषयं धर्म्यम् , सर्वं जगद्धत्त इति धर्मः । 'पृथिवी धर्ममूर्धनि' इति

जा॥प्रत्यक्षशब्दस्यायमर्थ इत्यत्र श्रुतिमाह—**स इति**। प्रतिस्थितः। अक्षवान् प्रशस्तेन्द्रियः। यो विद्वानेवं प्रत्यक्षशब्दार्थं वेद । धर्मादनपेतं धर्म्यमिति निर्वचनेऽपि न प्रसिद्धधर्माविरुद्धत्वमर्थः, निवृत्तधर्मस्य ब्रह्मज्ञानाविरुद्धतायाः प्रसिद्धत्वात् , प्रवृत्तिलक्षणस्य तु तद्विरुद्धत्वादिति भावेनाह—**धर्म इति** । तस्मादनपेतमित्यर्थः—**तद्विषयमिति** । कथं भगवान् धर्म इत्यत आह—**सर्वमिति** । धृञो मन्प्रत्यय

रा॥ सपूर्वकत्वरारहिताः पुरुषाः मामप्राप्य मृत्युरूपे संसारवर्त्मनि नितरां वर्तन्ते ; अहो महदिदमाश्चर्यमित्यर्थः ॥ ३ ॥

शृणु तावत्प्राप्यभूतस्य ममाचिन्त्यमहिमानं—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५

ता॥श्रद्धानिषेधस्तत्प्रसङ्गे सति हीत्यभिप्रायः। कारणनिवृत्तेः कार्यानुष्ठाननिवृत्तिपर्यन्तत्वप्रदर्शनायोक्तं— **विश्वासपूर्वकत्वराराहिता** इति । **मृत्युरूप** इति बाधकस्वरूप इत्यर्थः । अथवा मरणगर्भत्वादेव मृत्युरूपता। 'निवर्तन्ते' इत्यत्र प्रतिनिवृत्तिविवक्षायामवधिसाकाङ्क्षत्वादत्र च तन्निर्देशाभावात्,'मामप्राप्य'इति पृथङ्निर्दिष्टत्वेन परमपुरुषस्याप्यवधित्वकल्पनायोगात्, संसारवर्त्मनीति सप्तम्यास्स्वरसत आधेयसाकाङ्क्षत्वात्, उपसर्गाणां चानेकार्थत्वात् **नितरां वर्तन्त** इत्युक्तम्। स्वरूपतः फलतश्च निरतिशयपुरुषार्थं सुकरं चोपासनं ज्ञात्वापि परित्यज्य पुरुषाः पुरुषार्थतारतम्यविदोऽपि निरतिशयापुरुषार्थमयं संसारमादरेण सेवन्त इति विस्मयाविद्धस्येश्वरस्य इदं वचनमित्यभिप्रायेणाह—**अहो** इति । आश्चर्यतमो दुष्कर्मप्रभाव इत्यभिप्रायेणाह—**महदिदमाश्चर्य**मिति । अश्रद्धाहेतव आन्तरशत्रवोऽपि त्वया निराकार्या इति 'परन्तप' इति सम्बुद्धेर्भावः ॥ ३ ॥

एवमध्यायप्रधानार्थस्य प्रापकस्य माहात्म्यमुक्तम् ; अथ प्राप्यमाहात्म्यद्वारापि तदेव स्थिरीक्रियत इत्यभिप्रायेणाह—**शृणु तावदि**ति । 'इदं सर्वम्' इति निर्देशः प्रमाणसिद्धसमस्तवस्तुपर इत्यभि-

शं॥मत्प्राप्तिमार्गभेदभक्तिमात्रमपि अप्राप्य इत्यर्थः, निवर्तन्ते निश्चयेन वर्तन्ते ; क्व ? मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारः मृत्युसंसारः, तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गः, तस्मिन्नेव वर्तन्ते इत्यर्थः ॥ ३ ॥

स्तुत्या अर्जुनम् अभिमुखीकृत्य आह—मया मम यः परो भावः तेन ततं व्याप्तं सर्वम् इदं जगत् अव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सः अहम् अव्यक्तमूर्तिः तेन

आ॥ च प्रयोगान्मोक्षधर्मे।'भारभृत्कथितो योगी'इति च। 'भर्ता सन् भ्रियमाणो बिभर्ति' इति च श्रुतिः।'धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो न ऋषयः सोऽध्यायत्' इति च सामवेदशाखायाम् ॥ १ ॥ २ ॥ ३ ॥

प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम् , तज्ज्ञानाद्याह—मयेति । तर्हि

ज॥औणादिकः । धारके धर्मशब्दप्रवृत्तिः कुत इत्यत आह—**पृथिवी**ति । पर्वतोपरीत्यर्थः। भगवतः सर्वधारकत्वे किं मानमित्यत आह—**भारभृ**दिति । सर्वत्र स्थितो भगवान् सर्वेण भ्रियते, स कथं सर्वस्य धारक इत्यत आह—**भर्ते**ति । भर्तासन्नेव भ्रियमाणो न स्वकीयस्थित्यै । धर्मशब्दस्य भगवद्वाचित्वं कुत इत्यत आह—**धर्मो वा** इति । इदमग्रे अस्याग्रे। अत्र पुण्यं धर्मः किं न स्यादिति शङ्कानिरासार्थं सोऽध्यायदिति वाक्यशेषोदाहरणम् ॥ २ ॥ ३ ॥

एवं तर्हि पुनरुक्तिः स्यात् ब्रह्मविषय ज्ञानमित्यस्य ब्रह्मावगम्यते विषयीक्रियतेऽनेन ज्ञानेनेत्यस्य च भेदाभावादित्यत आह—**प्रत्यक्षे**ति । नावगमशब्देन विषयीकरणमुच्यते, किंतु अवगति-

रा॥इदं - चेतनाचेतनात्मकं कृत्स्नं जगत्, अव्यक्तमूर्तिना-अप्रकाशितस्वरूपेण मया-अन्तर्यामिणा, ततम्-अस्य जगतो धारणार्थं नियमनार्थं च शेषित्वेन व्याप्तमित्यर्थः। यथान्तर्यामिब्राह्मणे*'यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद'†'य आत्मनि तिष्ठन् यमात्मा न वेद'इति चेतनाचेतनवस्तुजातैरदृष्टेनान्तर्यामिणा तत्रतत्र व्याप्तिरुक्ता। ततो मत्स्थानि सर्वभूतानि - सर्वाणि भूतानि मय्यन्तर्यामिणि स्थितानि। तत्रैव ब्राह्मणे*'यस्य पृथिवी शरीरं...यः पृथिवीमन्तरो यमयति' †'यस्यात्मा शरीरं...य आत्मानमन्तरो यमयति' इति शरीरत्वेन नियाम्यत्वप्रतिपादनात्तदायत्ते स्थितिनियमने प्रतिपादिते, शेषित्वं च। न-

ता॥प्रायेण—इदं चेतनाचेतनात्मकमित्युक्तम्। 'अव्यक्तमूर्तिना'इत्यस्य विग्रहविषयत्वेऽत्रानुपयोगात्स्वरूपविषयोऽयमौपचारिकः प्रयोग इति दर्शयितुम्—अप्रकाशितस्वरूपेणेत्युक्तम्। आकाशवत्सन्निधिमात्ररूपव्याप्तिव्युदासाय बहुप्रमाणसिद्धो व्याप्तिप्रकारो 'मया' इत्यनेनाभिप्रेत इत्याह—अन्तर्यामिणेति। उक्तप्रकाराया व्याप्तेः प्रयोजनं तन्निदानं च दर्शयति—अस्येति। अत्र धारणमनन्तरग्रन्थसिद्धम्। अत एव नियमनमप्यर्थसिद्धम्। धारणं हि प्रशासनाधीनं श्रूयते। शेषित्वं तु प्रागुक्तं, शरीरित्वेनार्थसिद्धं च। अप्रकाशितस्वरूपत्वेन नियामकत्वेन च सर्वव्याप्तिं श्रुतौ दर्शयति—यथेति। पृथिव्युदाहरणं तत्प्रकरणोक्तसर्वाचेतनोपलक्षणार्थम्। उक्तप्रकारव्यापकत्ववशात् 'मत्स्थानि' इत्यनेन जगतः पृथक्सिद्धता निरस्यत इत्यभिप्रायेणाह—तत इति। श्रीविश्वरूपादिषु विग्रहाश्रितत्वमपि सर्वस्योच्यते; अत्र तु स्वरूपनिष्ठतेत्यपौनरुक्त्याय—मय्यन्तर्यामिणीत्युक्तम्। अनयोर्धारणनियमनयोरपि व्याप्त्या सहाधीततामाह—तत्रैवेति। स्थितिनियमने - स्थितिप्रवृत्ती इत्यर्थः। शरीरशरीरित्ववचनात् धृतिश्शेषित्वं च तत्रार्थसिद्धे इत्यभिप्रायेणाह—शेषित्वं चेति। 'मया ततमिदं सर्वम्' इत्यभिधायैव 'न चाहं तेष्ववस्थितः' इति वचनं व्याहतम्, ''यः पृथिव्यां तिष्ठन्'इत्यादिश्रुतिविरुद्धं चेत्यत्राह

प्र-पा॥ *बृ. ५-७-३॥ †शतपथे. माध्यन्दिन. १४-६-५-५-३०॥

शं॥मया अव्यक्तमूर्तिना, करणागोचरस्वरूपेण इत्यर्थः। तस्मिन् मयि अव्यक्तमूर्तौ स्थितानि सर्वभूतानि ब्रह्मादीनि। न हि निरात्मकं किञ्चित् भूतं व्यवहाराय अवकल्पते। अतः मत्स्थानि मया आत्मना आत्मवत्त्वेन स्थितानि, अतः मयि स्थितानि इति उच्यन्ते। तेषां भूतानां अहमेव आत्मा इत्यतः तेषु स्थितः इति मूढबुद्धीनाम् अवभासते,अतः ब्रवीमि - न च अहं तेषु भूतेषु अवस्थितः,मूर्तवत् संश्लेषाभावेन आकाशस्यापि अन्तरतमो हि अहम्। न हि असंसर्गि वस्तु क्वचित् आधेयभावेन अवस्थितं भवति॥ ४॥

अत एव असंसर्गित्वात् मम—न च मत्स्थानि भूतानि ब्रह्मादीनि। पश्य मे योगं युक्तिः संघटनं मे मम ऐश्वरं योगम्,आत्मनो याथात्म्यम् इत्यर्थः।तथा च श्रुतिः असंस-

आ॥किमिति न दृश्यत इत्यत आह—अव्यक्तमूर्तिनेति॥ ४॥

ज॥साधनत्वम्। न च ज्ञानस्य तद्विरुद्धम्,परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वोपपत्तेरिति भावः। 'ज्ञानं विज्ञानसहितं प्रवक्ष्यामि'इति प्रतिज्ञाय'यज्ज्ञात्वा'इत्यदिना तत्प्रशंसादिकमुक्तम्। अतो'मया ततम्'इत्यादिकमपि किं तथाभूतमेव किञ्चित्,उत प्रतिज्ञातमुच्यत इति शङ्कायामाह—तदिति। प्रतिज्ञातमित्यर्थः। यस्यापरोक्षज्ञानसाधनत्वमुक्तं तदिति वा। कृत्स्नाध्यायप्रतिपाद्योक्तिरियम्। विशेषणवैयर्थ्यमाशङ्क्याह—तर्हीति। सर्वव्यापी चेदित्यर्थः। न दृश्यते सर्वत्रेति शेषः॥ ४॥

रा॥चाहं तेष्ववस्थितः—अहं तु न तदायत्तस्थितिः;मत्स्थितौ तैर्न कश्चिदुपकार इत्यर्थः। न च मत्स्थानि भूतानि-न घटादीनां जलादेरिव मम धारकत्वम्; कथम्?मत्सङ्कल्पेन। पश्य ममैश्वरं योगम्-अन्यत्र कुत्रचिदसम्भावनीयं मदसाधारणमाश्चर्यं योगं पश्य।कोऽसौ

ता॥—अहं त्विति। 'मत्स्थानि सर्वभूतानि' इति प्रस्तुतप्रकारा स्थितिरत्र निषिध्यते। 'स भगवः कस्मिन् प्रतिष्ठितः' इत्यत्र 'स्वे महिम्नि यदि वा न महिम्नि' इति हि श्रूयत इति भावः। उक्तं विवृणोति—मत्स्थिताविति। न कश्चिदिति-स्वरूपतस्सङ्कल्पाददृष्टादिना वेति भावः। 'मत्स्थानि' 'न च मत्स्थानि' इत्येतद्व्याहतमित्यत्राह—न घटादीनामिति। मूर्तं हि मूर्तान्तरं पतनप्रतिघातिना संयोगेन धारयति; न तथात्रेति भावः। लोकदृष्टविपरीतं न सम्भवतीत्यभिप्रायेण शङ्कते—कथमिति। शरीरशरीरिणोरिव सम्भवमभिप्रेत्याह—मत्सङ्कल्पेनेति। स्वेच्छाधीनधारकत्वं हि विहितम्। अस्वतन्त्रतया धारकत्वं तु निषिध्यत इत्यविरोध इति भावः। 'ऐश्वरम्' इत्यनेनानन्यसाधारणत्वं फलितम्; 'पश्य' इत्यनेन चाश्चर्यता द्योतितेत्यभिप्रायेणाह—अन्यत्रेति। 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इति पाठात्सङ्कल्परूपं ध्यानमिह योगः, युज्यमानस्वभावादिर्वा। 'पश्य मे योगम्' इत्युक्ते योगस्वरूपमेवानन्तरं वक्तव्यमिति तदाकाङ्क्षां दर्शयति—कोऽसाविति। 'भूतभृन्न च भूतस्थः' इत्यत्रार्थौचित्यादहमित्येव विशेष्यम्। अथवा 'भूतभावनः' इतिवत् 'ममात्मा' इति निर्दिष्टसङ्कल्पविशेषणत्वेऽपि फलि

प्र-पा॥१ छा. ७-२४-१॥ 'स भगव. कस्मिन् महिम्नि' इति। सर्ववस्तूनामाधारसापेक्षत्व दृष्ट्वा पृच्छति—स भगव इति। उत्तरमाह—स्वे महिम्नीति। स्वरूपमहिमाधारक.। 'स्वयं दासास्तपस्विन.' इतिवत् अनाधार इत्यभिप्राय:। उक्ताभिप्रायेणाऽऽचार्यः स्वयमुक्त्वा स्वशब्दस्यात्मात्मीयवचनत्वात् आत्मीये नियाम्यतया महिमभूते गवाश्वहस्तिहिरण्यदासभार्यादिलक्षणे प्रतिष्ठित इत्यभिप्रायं शिष्यो गृह्णीयात्; अथवा स्वशब्दस्य आत्मपरतया 'आत्माधारः' इत्यभिप्राय इति वा वाक्याभिप्रायं बुध्येत्। नच तदुभयमपि सम्भवति। परमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेऽप्यनाधारस्य तत्प्रतिष्ठितत्वासम्भवात्; 'नह्यतिशिक्षितोऽपि नटवटु स्वस्कन्धमारुह्य नरीनर्ति' इति न्यायेन स्वस्य स्वाश्रितत्वासम्भवाच्च न द्वयमपि युज्यते। अतश्शिष्यस्य सा बुद्धिर्निवर्तनीयेति मत्वा पुनराह—यदि वा न महिम्नीति। यदि वा-अन्यथा पश्यसि, तदा न महिम्नीति ब्रूमः इत्यर्थः' इति रङ्गरामानुजीयम्। तत्रस्थवाक्यानि सर्वाण्यपि अत्रानुसन्धेयानि। विस्तरभीत्या न लिख्यन्ते। श्रुतप्रकाशिकायाम् (१-३-७) 'अस्य महिमानमिति वीतशोक' 'एता विभूतिं योगञ्च' इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमात्, 'यदि वा न महिम्नि' इति न महिमनिषेधः, अपितु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोऽवगम्यते' इत्युक्तम्॥

२. नामलिङ्गानुशासने ३ काण्डे नानार्थवर्गे, १०९-श्लो॥

शं॥र्गित्वात् असङ्गतां दर्शयति—'असङ्गो न हि सज्यते'।इदं च आश्चर्यम् अन्यत् पश्य—भूतभृत्, असङ्गोऽपि सन् भूतानि बिभर्ति; न च भूतस्थः, यथोक्तेन न्यायेन दर्शितत्वात् भूतस्थत्वानुपपत्तेः। कथं तु पुनः उच्यते 'असौ मम आत्मा' इति? विभज्य देहादिसङ्घातं,तस्मिन् अहङ्कारम् अध्यारोप्य,लोकबुद्धिम् अनुसरन् व्यपदिशति'मम आत्मा'इति;

आ॥ मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह— न चेति। 'न

ज॥'मत्स्थानि सर्वभूतानि' इत्युक्त्वा पुनः कथं 'न च मत्स्थानि'इति व्याहतमुच्यत इत्यत आह—मत्स्थत्वेऽपीति। स्पृष्ट्वेति—स्पर्शनेन्द्रियेण तां ज्ञात्वाऽन्योन्यधर्मसंक्रान्तिमासाद्य चेत्यर्थः। परमेश्वरस्य स्पर्शनावेद्यत्वे प्रमाणमाह—नेति। संज्ञया शब्देनैव संज्ञा सम्यग् ज्ञानं यस्यासौ तथोक्तः। मत्स्थानी-

रा॥योग:? ; भूतभृन्न च भूतस्थो ममात्मा भूतभावन: - सर्वेषां भूतानां भर्ताऽहं, नच तैः कश्चिदपि ममोपकारः । ममात्मैव भूतभावनः—मम मनोमयस्सङ्कल्प एव भूतानां भावयिता धारयिता नियन्ता च ॥ ५ ॥

सर्वस्यास्य स्वसङ्कल्पायत्तस्थितिप्रवृत्तित्वे निदर्शनमाह—

यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६

ता॥तत्कथनं-सर्वेषां भूतानां भर्ताहमित्यादि।'आत्मा'इति विशेषनिर्देशः परिसङ्ख्यानयात्तदतिरिक्तसहकारिव्यवच्छेदार्थं इत्यभिप्रायेणाह—ममात्मैवेति । 'ममात्मा' इति व्यधिकरणनिर्देशस्वारस्यसिद्धमात्मशब्दार्थमाह— मम मनोमयस्सङ्कल्प इति। एतेन देहादिसङ्घातेऽहङ्कारमध्यारोप्य लोकबुद्ध्यनुसारेण 'ममात्मा' इति व्यपदेशः' इति शङ्करोक्त प्रत्युक्तम् । सङ्कल्प एव मनःकार्यतयान्यत्र प्रसिद्धो मनःप्रतिपादकेनात्मशब्देनात्र व्यपदिष्टः । यद्वा आत्मशब्दोऽत्र सङ्कल्परूपमनःपर एव, 'मनसैव जगत्सृष्टिं' 'मनोऽकुरत स्यामिति' इत्यादेः। तदर्थज्ञापनाय तु मनोमयशब्दः । धारणनियमनयोरेव प्रकृतत्वात्,अनन्तरश्लोके च निर्दिश्यमानत्वात्,सृष्टेश्च ततोऽप्यनन्तरं वक्ष्यमाणत्वादत्र'भूतभावनः'इत्येतत्सत्तातादधीन्यनियमनाद्युपलक्षणमित्यभिप्रायेणाह —धारयिता नियन्ताचेति । अथ वा 'भूतभृन्न च भूतस्थः' इत्यस्यैवायमर्थः ॥ ४ ॥ ५ ॥

यथाकाशस्थितः' इति श्लोके स्वस्मिन् सर्वभूतस्थितेराकाशे वायुस्थितिर्दृष्टान्त इति केचिदाहु, तदयुक्तम्, आकाशस्य वाय्वपेक्षया नियमनधारणयोरभावात्तथाविधस्थितेरिह प्रकृतत्वेन तन्निदर्शनार्थत्वस्यैवौचित्याच्चेत्यभिप्रायेणाह — सर्वस्येति । 'आकाशस्थितस्सर्वत्रगः' इत्याभ्यामीश्वरैकधार्यत्वं त-

प्र-पा॥१ वि० पु ५-२२-१५॥ 'मनसैव जगत्सृष्टिं संहारञ्च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
२. बृ १-२-१ ॥

श॥न पुनः आत्मनः आत्मा अन्यः इति लोकवत् अजानन्। तथा भूतभावनः-भूतानि भावयति वर्धयति उद्भावयति वा भूतभावनः ॥ ५ ॥

यथोक्तेन श्लोकद्वयेन उक्तम् अर्थं दृष्टान्तेन उपपादयन् आह-यथा लोके आकाश-

आ॥ दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च'इति हि मोक्षधर्मे । 'संज्ञासंज्ञः' इति च । ममात्मा देह एव भूतभावनः । महाविभूतेर्माहात्म्यशरीरेति हि मोक्षधर्मे ॥ ५ ॥

'मत्स्थानि न च मत्स्थानि' इत्यत्र दृष्टान्तमाह—

ज॥त्यादेरुक्तत्वात् भूतभृदित्यादिकं पुनरुक्तमित्यत आह —ममेति । प्राक् भूताधारत्वादिकं स्वस्योक्तम्, अत्र पुनरव्यक्तमूर्तिनेति मूर्तावुक्तायां सास्मदादीनामिव भिन्नेति भ्रान्तिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तं —भूतेति । स्यादिदं व्याख्यानं, यदि भगवद्देहस्येदं भवेत्, तदेव कुत इत्यत आह —महाविभूतेरिति । माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ॥ ५ ॥

एकमेकत्राश्रितमित्यत्रासंभावनाभावात् किं दृष्टान्तोक्त्येत्यत आह—मत्स्थानीति । तत्र स्थित-

रा॥यथा आकाशे अनालम्बने महान् वायुस्स्थितस्सर्वत्र गच्छति; स तु वायुर्निरालम्बनो मदायत्तस्थितिरित्यवश्याभ्युपगमनीयो मयैव धृत इति विज्ञायते; एवमेव सर्वाणि भूतानि तैरदृष्टे मयि स्थितानि मयैव धृतानीत्युपधारय, यथाहुर्वेदविदः—*'मेघोदयस्सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः। विद्युद्विभङ्गो गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः'इति; विष्णोरनन्यसाधारणानि महाश्चर्याणीत्यर्थः; श्रुतिरपि †'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ‡'भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च' इत्यादिका ॥ ६ ॥

सकलेतरनिरपेक्षस्य भगवतस्सङ्कल्पात्सर्वेषां स्थितिः प्रवृत्तिश्चोक्ता; तथा तत्सङ्कल्पादेव सर्वेषामुत्पत्तिप्रलयावपीत्याह—

ता॥देकप्रेर्यत्वं च विवक्षितमित्यभिप्रायेणाह—**यथाकाशेऽनालम्बन** इति। महत्त्वं चान्याशक्यत्वायोक्तम्। अभिप्रेतं निदर्शनप्रकारं विशदयति—**सत्विति**। यथा निरालम्बने विहायसि विहङ्गमशरीरादेश्चेतनविशेषाधिष्ठेयत्वम्; एवमेव वाय्वादेरपीति भावः। **तैरदृष्ट** इत्यनेन अनुपलम्भबाधनिरासाय पूर्वोक्तश्रुत्यादिसिद्धायोग्यत्वप्रदर्शनम्। ईश्वरानुमानमनभ्युपगच्छतां कथमिदं निदर्शनमित्यत्राह—**यथाहुर्वेदविद** इति। आगममूलसम्भावनातर्कपरमिति भावः। **वेदविद** इत्यनेनाधीयमानवेदोपबृंहणरूपता द्योतिता। अस्मदाद्यगोचरोपादानोपकरणसम्प्रदानादिकानां तत्क्षणादेव सकलदिङ्मुखव्यापिनां धाराधराणामुत्पत्तिः, सकलभुवनाप्लावनलम्पटस्यैव जलनिधेरम्बरालम्बिनां तरङ्गाणां वेलातले निवृत्तिः,प्रतिनियतकलावृद्धिक्षयशृङ्गोन्नमनादिरूपश्चन्द्रमसो विभागः, अशङ्कितागमानामनियतदिग्विशेषाणां तृणगिरितरुषण्डलुण्टाकानां चण्डमारुतादीनां विष्फूर्तयः, प्रशान्तदहनमिहिरहिमकरादिमहसि प्रावृषि निशीथेऽप्यविदितपूर्वोत्तरक्षणानां क्षणरुचीनां विभङ्गः, निरालम्बने विहायसि महीयसो मिहिरमण्डलस्य प्रतिनियतदिनरजनिमासायनसंवत्सरादिदेशिकस्सञ्चारः, एवंविधान्यन्यानिच परिवेषोपरागेन्द्रचापकरकास्तनिताशनिभूकम्पप्रभञ्जनभ्रमणादयोऽत्यद्भुतप्रकारास्सर्वे सर्वव्यापिनस्सर्वशक्तेर्विष्णोरेव विचित्रसृष्टिशक्तिमूला भवितुमर्हन्तीति श्लोकार्थः। मायाशब्दस्य मिथ्यार्थत्वनिरसनायाह—**विष्णोरिति**। सम्बन्धसामान्यस्य नियाम्यत्वधार्यत्वादिविशेषपर्यवसानाय 'यथाहुर्वेदविदः' इत्यनेनाभिप्रेतं विवृणोति—**श्रुतिरपीति**। प्रशासनमत्र सङ्कल्पविशेषः; भीषेति - भयादित्यर्थः॥ ६ ॥

अप्रस्तुतसृष्टिप्रलयाभिधानस्य सङ्गतिमाह—**सकलेति**। प्रवृत्तिश्चेत्यर्थसिद्धोक्तिः; 'मामिकाम्'

प्र-पा ॥ * †बृ ५-८-९ ॥ ‡तै. आन. ८-अनु ॥

शं॥स्थितः आकाशे स्थितः नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगः महान् परिमाणतः तथा आकाशवत् सर्वगते मयि असंश्लेषेणैव स्थितानि इत्येवम् उपधारय विजानीहि॥६॥

एवं, वायुः आकाशे इव, मयि स्थितानि भूतानि स्थितिकाले, तानि—सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकाम् अपरां यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले।

आ॥यथाकाशस्थित इति। न ह्याकाशस्थितो वायुः स्पर्शाद्याप्नोति ॥ ६ ॥

ज॥त्वेऽप्यन्योन्यधर्मासंक्रान्त्यादावित्यर्थः; तदत्र न प्रतीयत इत्यतो व्याचष्टे—**नहीति**। **स्पर्शादीति**—तद्धर्मोपलक्षणम् ॥ ६ ॥

यथा 'मया ततम्' इत्याद्युक्तोपपादनार्थान्युत्तरवाक्यानि, न तथा सर्वभूतानीत्यादि; किंतु स्वत-

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥** ७

**रा॥स्थावरजङ्गमात्मकानि सर्वाणि भूतानि, मामिकां-मच्छरीरभूतां,प्रकृतिं-तमश्शब्द-वाच्यां नामरूपविभागानर्हां, कल्पक्षये चतुर्मुखावसानसमये मत्सङ्कल्पाद्यान्ति; तान्येव भूतानि कल्पादौ पुनर्विसृजाम्यहम्;यथाह मनुः—*'आसीदिदं तमोभूतं सोऽभिध्याय शरीरात्स्वात्'इतिःश्रुतिरपि †'यस्याव्यक्तं शरीरम्' ‡'अव्यक्तमक्षरे लीयते।अक्षरं तम-सि लीयते' इत्यादिका, §'तम आसीत्तमसा गूढमग्रे प्रकेतम्' इति च ॥ ७ ॥**

**ता॥**इत्यनेन शेषत्वं सिद्धम्;तच्च शरीरतयेत्यवगत—'[1]यस्य तमश्शरीरम्'इति;अतो **मच्छरीरभूतामि-त्युक्तम्**।सर्वभूतशब्देन समस्तकार्यावस्थासङ्ग्रहात्—**तमश्शब्दवाच्यामित्युक्तम्**।'[2]तमः...एकी भवति' इत्युक्तप्रदर्शनं-**नामरूपविभागानर्हा**मिति। सर्वभूतशब्दात्,'प्रकृति यान्ति'इति वचनाच्च प्राकृतप्रलय एवात्र विवक्षित इत्याह —**चतुर्मुखावसानसमय** इति।कल्पक्षये—अन्तिमब्रह्मदिवसावसान इत्यर्थः। कल्पानां क्षय इति वा विवक्षितम् । ब्रह्मायुःपरो वात्र कल्पशब्दः, '[3]संहर्ता च स्वयं प्रभुः' '[4]मनसैव-जगत्सृष्टिं संहारं च करोति यः'इत्याद्युक्तेः,अतैव 'पुनस्तानि विसृजामि'इति वचनाच्च। मदीयां प्रकृतिं यापयामीत्यभिप्रायः । तदाह—**मत्सङ्कल्पाद्यान्तीति** । तानि-तत्सजातीयानीत्यर्थः; तदभिप्रायेण **तान्येवेत्युक्तम्** । '[5]यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव' इतिवत् । यथा कुन्तीशरीरात्तवोत्पत्तिस्त्वयानुपलब्धाप्यासवाक्याद्दृढप्रतिपन्ना, तथा मच्छरीरात्प्रपञ्चस्योत्पत्तिं ममैव वा-क्यादभ्युपगच्छेति 'कौन्तेय'इत्यस्य भावः।'मच्छरीरभूतां...तमश्शब्दवाच्याम्'इति स्वोक्तमर्थं भेषजा-यमानयत्किञ्चनोक्तेर्[6]मनोर्वचनेन सवादयति—**यथाहे**ति। '[6]आसीदिदम्'इत्यादिकायां सप्तश्लोक्यां नारा-यणस्यैव परमकारणत्वं ब्रह्मादेरशेषस्य [7]तत्सृष्टत्वं च सुव्यक्तमुक्तमनुसन्धेयम् । कारणावस्थस्याप्यचिद्-व्यस्य परमात्मशरीरतयात्यन्तभिन्नत्वे तमश्शब्दवाच्यत्वादौ च मनोरुपबृंहणीयां श्रुतिं दर्शयति—**श्रु-तिरपीति** ॥ ७ ॥

**प्र-पा ॥** *मनु. १-५ ॥ †सुबाल. ७-खं ॥
§२-अष्ट. ८-प्र. ९-अनु ॥
१. बृ. ५-७-१३ ॥ ‡२. सुबाल २-खं॥
३. वि. पु. १-२-६७॥ 'स्रष्टा सृजति चात्मानं विष्णुः पाल्यञ्च पाति च । उपसंह्रियते चान्ते संहर्ता च स्वयम्प्रभुः । स्रष्टारं ब्रह्माणं सृज्यं दक्षादिगणं संहर्तारं रुद्रं संहार्यं त्रैलोक्यं च युगपन्निर्दिश्य तद्रूपत्वविधानात् सृज्यसंहार्यभूताद्वस्तुनः स्रष्टृसंहर्त्रोर्न विशेष इति प्रदर्शनमस्मिन् श्लोके विशेषः; तस्य क्षेत्रज्ञकर्मानुगुणं गुणनियन्तृत्वमेव, न भोक्तृत्वमित्याह—स्वयं प्रभुरिति ॥
४. वि. पु ५-२२-१५ ॥
५ वि. पु. १-६-६५॥ 'यथर्तुष्वृतुलिङ्गानि... दृश्यन्ते तानितान्येव तथा भावा युगादिषु॥' यथा ऋतुलिङ्गानि-पुष्पफलादीनि, पर्यये - पुनरावृत्तौ, तानि तानि - तत्तज्जातीयान्येव, दृश्यन्ते, तथैव युगादिषु कल्पाद्यावृत्तिषु, भावाः-देवादयः ॥
६. मनुः ॥ ७. तद्विसृष्टत्वं. पा ॥

**शं॥पुनः भूयः तानि भूतानि उत्पत्तिकाले कल्पादौ विसृजामि उत्पादयामि अहम् ॥ ७ ॥**

**आ॥ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति—सर्वभूतानीत्यादिना ॥ ७ ॥**

**ज॥**न्त्रमेव ज्ञानप्रतिपादकमिति भावेनाह—**ज्ञाने**ति । प्रलयादीति तत्कारणत्वम्, 'प्रकृतिं स्वामवष्टभ्य' इति वचनात् ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८**

रा॥स्वकीयां विचित्रपरिणामिनीं प्रकृतिमवष्टभ्याष्टधा परिणमय्येमं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं भूतग्रामं मदीयाया मोहिन्या गुणमय्याः प्रकृतेर्वशादवशं पुनःपुनः

---

**ता॥**'विसृजामि'इत्युक्तायास्समष्टिव्यष्टिरूपायास्सृष्टेः प्रकारः प्रदर्श्यते—'प्रकृतिं स्वाम्'इति श्लोकेन। ''विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्। ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनी' इत्यादिश्रुत्यनुसारेणास्य श्लोकस्यार्थमाह—**स्वकीयामिति**। उपादानद्रव्यस्य कर्त्रावष्टम्भो ह्यधिष्ठानम्; तच्चाभिमतकार्यविशेषानुगुणमध्यमावस्थाप्रापणमेवेत्यभिप्रायेणोक्तम्—**अष्टधा परिणमय्येति**। 'भूमिरापः' इत्यादिना प्रागुक्तमष्टविधत्वम्। एवमर्थसिद्धस्समष्टिसृष्टिप्रकार उक्तः; भूतग्रामशब्दोऽत्र देवतादिजात्यवच्छिन्नव्यष्टिजीवस्तोमपरः, अचेतनपरत्वे 'प्रकृतेर्वशादवशम्'इत्यनेनानन्वयात्। तस्य चतुर्विधस्य सावान्तरभेदस्य सङ्ग्रहार्थः कृत्स्नशब्दः। एवंविधकार्यत्वे प्रकृतिपरवशत्वे च योग्यताप्रदर्शनार्थम्—' इमम् ' इति निर्देश इत्यभिप्रायेणोक्तम्—**इमं चतुर्विधम्**—इत्यादि। चातुर्विध्यमेव विवृणोति—**देवेति**। 'प्रकृतेर्वशात्' इत्यनेनाभिप्रेतः 'प्रकृतिं मोहिनीं श्रिताः' इत्यत्र च कण्ठोक्तोऽपशत्वहेतुः—**मोहिन्या** इत्युक्तः। तत्रापि हेतुर्गुणमयत्वं ''त्रिभिर्गुणमयैः' इत्यादिनोक्तम्। 'पुनः पुनः' इत्यनेन तदुत्प-

**प्र-पा॥**१. मन्त्रिकोप॥ 'विकारजननीं... भूतभाविनी॥ ३-५॥ अस्यार्थः-अष्टरूपत्व 'भूमिरापोऽनलः'इत्युक्तप्रकारेण, अजाम्-उत्पत्तिरहिताम्, ध्यायते-परमात्मना संकल्परूपज्ञानेन ज्ञायते, अध्यासिता-अधिष्ठिता, तन्यते-विस्तार्यते, स्थूलावस्थं क्रियते समष्टिभूतरूपेण क्रियते, प्रेर्यते-व्यष्टिसृष्ट्यर्थंप्रेर्यते; पुरुषार्थं - पुरुषाणामर्थनीयभोग्यभोगोपकरणभोगस्थानरूपं जगत्, सूयते। 'जनित्री भूतभाविनी' इति समष्टिव्यष्टिसृष्टिरुच्यते' इति॥

२. गी. ७-४॥ ३. गी. ७-१३॥

---

शं॥एवम् अविद्यालक्षणां—प्रकृतिं स्वाम् अवष्टभ्य आश्रित्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायम् इमं वर्तमानं कृत्स्नं समस्तम् अवशम् अस्वतन्त्रं,

---

आ॥प्रकृत्यवष्टम्भस्तु यथा कश्चित्समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति।'सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि'इति,'सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि' इति च मोक्षधर्मे। 'विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम्। प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति' इति च। 'न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य। तथापि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु' इति ऋग्वेदखिलेषु। 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इति भागवते। 'अथ कस्मादुच्यते परं ब्रह्मेति बृहति बृंहयति' इति चाथर्वणे। 'परास्य शक्तिर्विविधैव श्रूयते' इति च। 'विष्णोर्नु कं वीर्याणि प्रवोचं यः

---

**जा॥**तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह—**प्रकृतीति**। तथा लीलयैव, न तु केवलस्य, सामर्थ्याभावादिति शेषः। कुत एतत्? भगवतः सर्वसामर्थ्यसंपूर्णस्य प्रमितत्वादित्याह—**सर्वेति**। सर्ववस्तुसामर्थ्यैः। एवं-भूतवत् पारतन्त्र्याद्युपेतं। किंतु दैवं देवोत्तमम्। पञ्चमहाभूतानि महदहंकारौ च सप्त सूक्ष्माणि। सर्वज्ञता तृप्तिरित्युक्तप्रकारेण षडङ्गं। प्रधानस्य मूलप्रकृतेर्विनियोगः कार्येषु यो व्यापारः, तत्स्थः तज्ज्ञानी। मायामधिरुह्य-प्रकृतिमवष्टभ्य। कं-कः, प्रवोचं-प्रावोचत्।

रा॥कालेकाले विसृजामि ॥ ८ ॥

एवं तर्हि विषमसृष्ट्यादीनि कर्माणि नैर्घृण्याद्यापादनेन भगवन्तं बध्नन्तीत्यत्राह—

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९**

**न च तानि विषमसृष्ट्यादीनि कर्माणि मां निबध्नन्ति - मयि नैर्घृण्यादिकं नापादयन्ति, यतः क्षेत्रज्ञानां पूर्वकृतान्येव कर्माणि देवादिविषमभावहेतवः; अहन्तु तत्र वै-**

ता॥त्तिप्रलयोचितद्विपरार्धसहस्रयुगादिप्रतिनियतानाद्यनन्तप्रवाहकालावच्छेदविशेषो विवक्षित इत्यभिप्रायेणाह —**कालेकाल** इति । **विसृजामि**—विविध सृजामि, विचित्रनामरूपदेशकालभोगादियुक्त करोमीत्यर्थः ॥ ८ ॥

'न च मां तानि कर्माणि' इत्येतन्न पुण्यपापरूपकर्मविषयम्, तस्याप्रस्तुतत्वेन 'तानि' इति परामर्शायोगात्; सृष्टिसंहारादेश्च प्रसक्तत्वात्तत्परामर्श एवोचितः; तस्य दोषरूपत्वमपि सृज्यदेवादिवैषम्यादिना द्योतितमिति तन्निरासार्थोऽयं श्लोक इत्यभिप्रायेणाह—**एवं तर्हीति** । **सृष्ट्यादीनी**त्यादिशब्देन स्थितिसंहारनिग्रहानुग्रहादिसङ्ग्रहः। **नैर्घृण्यादी**त्यादिशब्देन पक्षपातित्वाव्यवस्थितत्वादि सङ्गृह्यते। 'निबध्नन्ति' इति न संसाररूपो बन्ध उच्यते, जगत्सृष्ट्यादेस्संसारहेतुत्वाश्रवणात्, परोक्तधर्माधर्मसम्बन्धशङ्काप्रसङ्गाभावात्, दौर्जन्ये सत्यपीश्वरस्य नियामकाभावात्; अतो नैर्घृण्यादिरूपदोषानुबन्ध एवात्र शङ्कितः प्रतिषिध्यत इत्याह—**मयीति** । चश्शङ्कानिवृत्त्यर्थः । सृष्टिवैषम्ये प्रयोजकमभिप्रेतमाह—**यत**

शं॥अविद्यादिदोषैः परवशीकृतं, प्रकृतेः वशात् स्वभावात् ॥ ८ ॥

**तर्हि तस्य ते परमेश्वरस्य, भूतग्रामम् इमं विषमं विदधतः, तन्निमित्ताभ्यां धर्माधर्माभ्यां सम्बन्धः स्यादिति? इदम् आह भगवान्—न च माम् ईश्वरं तानि भूतग्रामस्य विषमसर्गनिमित्तानि कर्माणि निबध्नन्ति धनञ्जय । तत्र कर्मणाम् असम्बन्धित्वे कारणम् आह—उदासीनवत् आसीनं, यथा उदासीनः उपेक्षकः कश्चित् तद्वत् आसीनं, आत्मनः अविक्रियत्वज्ञम्, असक्तं फलासङ्गरहितम्, अभिमानवर्जितम् 'अहं करोमि' इति तेषु कर्मसु। अतः अन्यस्यापि कर्तृत्वाभिमानाभावः फलासङ्गाभावश्च असम्बन्धकारणम्, अन्य-**

आ॥**पार्थिवानि विममे रजांसि' 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादेश्च । प्रकृतेर्वशादवशम् 'त्वमेवैतत्सर्जने सर्वकर्मण्यनन्तशक्तोऽपि स्वमाययैव। मायावशं चावशं लोकमेतत्तस्मात्स्रक्ष्यस्यत्सि पासीश विष्णो' इति गौतमखिलेषु ॥ ८ ॥**

**उदासीनवत्, नतूदासीनः। तदर्थमाह—असक्तमिति 'अवाक्यनादरः' इति श्रुतिः ।**

ज॥प्रकृतेर्वशाद्विसृजामीत्याविद्यकमेवेश्वरस्य कर्तृत्वम्; वस्तुतस्तु निष्क्रियत्वमित्युच्यत इत्यन्यथाप्रतीतिनिरासायान्यथाऽन्वयमाह—**प्रकृतेरिति** । कुत एतदित्यतः पूर्वोक्तार्थसहितेत्यत्र प्रमाणमाह—**त्वमेवेति** । एतत्सर्जने-एतस्य लोकस्य सृष्ट्याम् । अन्यस्मिन्नपि-पालनादौ सर्वकर्मणि । तस्मान्मायावशत्वादेवावशम्, एतत्-एतं स्रक्ष्यसि- सृजसि ॥ ८ ॥

स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यत इति चेत् न, वतिना तस्य निषिद्धत्वादिति भावेनाह—**उदासीनव**दिति। अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात्, अन्यस्य तदर्थस्याभावादित्यत आह—**तदर्थमिति** । वत्यर्थं सादृश्यं स्वयमेव विवृणोतीत्यर्थः। परमेश्वरस्य कर्मसु सक्त्यभावे प्रमाणमाह—**अवा-**

रा॥षम्ये असक्तः तत्रोदासीनवदासीनः;यथाह सूत्रकारः—*'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' *'न कर्माविभागादिति चेन्नानादित्वात्' इति ॥ ९ ॥

ता॥इति। 'स्वशक्त्या वस्तु वस्तुतां'[1]'कर्मभिर्भाविताः पूर्वैः'[2]'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः'[3] 'वाचिकैः पक्षिमृगताम्'[4] 'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा। संसारतापानखिलानवाप्नोत्यतिसन्ततान्। तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते'[5] इत्यादिभिस्सिद्धोऽयमर्थः। 'तेषु कर्मस्वसक्तम्'इत्युक्ते सति अकर्तृत्वादिभ्रमस्स्यादिति तन्निरासायोक्तं—**तत्र वैषम्य** इति।**असक्तः**—प्रयोजकत्वरूपसम्बन्धरहित इत्यर्थः। असक्तत्वे दृष्टान्त उच्यते—**उदासीनवदासीन** इति। यथा कस्मिंश्चित्कर्मणि उदासीनस्तत्र प्रयोजकत्वरूपसम्बन्धरहितः; तथा कर्ताप्यसौ तस्मिन्नंशे उदासीनवदासीन इत्यर्थः। तेन कर्मानुष्ठानदशायामीश्वरस्य वैषम्यादुदासीनत्वमेवोच्यते। विषमसृष्टेः कर्मसापेक्षत्वे जीवानां तत्कर्मप्रवाहाणां च अनादितया प्रलयकालेऽपि तत्सद्भावे सूत्रद्वयं दर्शयति—**यथाहे**ति॥

प्र-पा॥ *शारी २-१-३४, ३५॥

१. वि पु. १-४-५२ 'निमित्तमात्रमुक्त्वैवं नान्यत् किंचिदपेक्षते। नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम्। निमित्तमात्रमेनम्परमपुरुषं मुक्त्वा नान्यत्किञ्चित् विशेषकारणमपेक्षते, वस्तु - देवादि, स्वशक्त्या-स्वकर्मभिः; वस्तुतां-तत्तद्रूपताम्, नीयते, जीवकर्मायत्तत्वात् विचित्रसृष्टेः, तेषु प्रधानकारणत्वोक्तिरौपचारिकी ॥

२. वि. पु. १-५-२८॥ 'कर्मभिर्भाविताः पूर्वैः कुशलाः कुशलैस्तुताः। ख्यात्या तया विनिर्मुक्ताः संहारेऽप्युपसंहृताः'॥ ख्यात्या-बुद्ध्या, तत्तत्कर्मानुसारिण्या बुद्ध्येति यावत्॥

३. विष्णुधर्मे-१०४-अ.२३,३६॥ आब्रह्मस्तम्ब-...वर्तिनः॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः। अविद्यान्तर्गतास्सर्वे ते हि संसारगोचराः॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः। नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्॥' 'आब्रह्म' इत्यारभ्य 'तेषामप्यन्यतो यतः' इत्यन्तस्य ग्रन्थस्य 'चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा, बद्धानामेव पश्चात् योगेनोद्भूतबोधानां स्वस्वरूपापन्नानाञ्च स्वतः शुद्धिविरहात् भगवता शौनकेन शुभाश्रयता निषिद्धा' इति। 'तस्मात्तदमलम्' इत्यादेः 'परस्य ब्रह्मणो विष्णोस्स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम्' इति च पुराणभट्टे श्रीभाष्यकारैस्संग्रहेणार्थ उक्तः। श्रुतप्रकाशिकायामस्यार्थो विस्तरेण (२-१-३) प्रपञ्चितः॥

४. मनुस्मृतौ. १२-९॥ 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्'॥

५. वि पु. ६-७-६१, ६३॥ अविद्याकर्म ...तारतम्येन वर्तते॥ अविद्येति। सर्वगा-चतुर्मुखादिपिपीलिकान्तसर्वशरीरस्था, जातावेकवचनम्, यद्वा धर्मभूतज्ञानेन स्वतः सर्वं व्याप्तुं क्षमा, कर्मणा वेष्टिता-कर्मणा सङ्कुचितज्ञानेत्यर्थः, तर्हि सर्वे अज्ञास्स्युरित्यत्राह-तयेति। कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः, सर्वेषां ज्ञाननित्यत्वस्य, मुक्तौ सर्वविषयकत्वस्य च प्रामाणिकत्वात् बद्धावस्थायां सङ्कोचविकासौ सिद्धौ, तत्तारतम्यञ्च - 'पुंसश्शक्त्युपलक्षित.' 'तच्छक्त्या पशवोऽधिकाः' इति स्पष्टीकृतम्'इति श्रुतप्रकाशिका (१-१-१.)॥

शं॥ था कर्मभिः बध्यते मूढः कोशकारवत् इत्यभिप्रायः॥ ९॥

आ॥'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'

ज॥**क्येति**। सर्वथोदासीन एव किं न स्यादिति चेत्—न,तथा सति प्रकृत्यादीनामसत्त्वप्रसङ्गादिति भावेनाह—**द्रव्यमिति**। यदीश्वरस्य स्वतः कर्तृत्वं स्यात्,तदोदासीनमित्येतत्'न तु मां तानि कर्माणि निब-

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥ १०

रा॥तस्मात् क्षेत्रज्ञकर्मानुगुणं मदीया प्रकृतिस्सत्यसङ्कल्पेन मयाऽध्यक्षेणेक्षिता सचराचरं जगत्सूयते; अनेन क्षेत्रज्ञकर्मानुगुणमदीक्षणेन हेतुना जगत्परिवर्तत इति मत्वा-

ता॥यदि कर्मानुगुणा विषमसृष्टिः; तर्हि प्रकृतिरेव परिणामशीला तदनुगुणं परिणमतां, किं त्वयेत्यत्रोच्यते—मयाध्यक्षेणेति । 'सर्वभूतानि' इत्युपक्रान्तस्वसङ्कल्पाधीनसृष्टिप्रलयोपसहारताद्योतनायाह—तस्मादिति। 'मयाध्यक्षेण' इति पदद्वयाभिप्रेत श्रौतमर्थमाह —सत्यसङ्कल्पेन ..ईक्षिता—इति। 'कर्माध्यक्षस्सर्वभूताधिवासः' 'यो ऽस्याध्यक्षः' 'ध्यायते ऽध्यासिता तेन' इत्यादिकमत्र भाव्यम् । अधिकमश्नुत इति अध्यक्ष इति केचित्। जगच्छब्दस्तत्राप्यन्वेतव्यः । पूर्वार्धगतसचराचरशब्द उत्तरत्रापीत्यभिप्रायेण—सचराचरं जगदित्युक्तम् । 'सूयते' इत्यनेन 'सूयते पुरुषार्थं च' इत्यादिश्रुतिः स्मारिता । पूर्वार्धे सृष्टिहेतुतयोक्तमेवोत्तरत्रापि संहारहेतुतया 'अनेन हेतुना' इति परामर्शार्हम्; न पुनः प्रधानतयोपस्थापितापि सृष्टिः, तस्याः प्रलयादिक प्रत्यहेतुत्वादित्यभिप्रायेणाह—अनेनेति । तेनाध्यक्षशब्दस्यात्र †अविक्रियदृशिमात्रपरतां वदन्तः प्रत्युक्ताः । कर्मवशाजीवशेषभूत प्रपञ्चं प्रति कथं

प्र-पा॥१.श्वेता. ६-११.एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवास: साक्षी चेता केवलो निर्गुणश्च। 'केवल ' इतिपदेन फलान्वयराहित्यं विवक्षितम् । निर्गुणः-अगुणवश्यत्वात् अभोक्तेत्यर्थः । साक्षी अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयाऽवस्थानात् न भोक्तेतिभावः।।
२. ऋग्वे. ७-७-१०-१-१७. 'योऽस्याध्यक्षः परमे व्योमन् । सोऽङ्गवेदेत्यादि । यः - परमात्मा परमे व्योमन् - विभक्तिलोपः छान्दसः, परमे पदे, अस्य - जगतः,अध्यक्षः साक्षात्कारक्षमः, ईश्वरो वा॥ सोऽङ्गेत्यादिकम्पूर्वमेव व्याख्यातम् ।।
३. मन्त्रिकोपनिषदि. ५१५. पुटे. व्याख्यातम् ॥
†निर्विकारचैतन्यपरता. पा।।

शं॥तत्र'भूतग्रामम् इमं विसृजामि''उदासीनवत् आसीनम्'इति च विरुद्धम् उच्यते ; इति तत्परिहारार्थम् आह—मया आध्यक्षेण सर्वतो दृशिमात्रस्वरूपेण अविक्रियात्मना अध्यक्षेण मया, मम माया त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः सूयते उत्पादयति सचराचरं जगत् । तथा च मन्त्रवर्णः—'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च'इति साक्षिमात्रेण

आ॥इति भागवते।यस्यासक्त्यैव सर्वकर्मशक्तिः, कुतस्तस्य सर्वकर्मबन्ध इति भावः । 'न कर्मणा वर्धते नो कनीयान्' इति हि श्रुतिः । यः कर्माणि नियामयति, कथं च तं कर्म बध्नाति ॥ ९ ॥

उदासीनवदिति चेत्—स्वयमेव प्रकृतिः सूयत इत्यत आह —मयेति। प्रकृतिसूतिद्र-

ज॥ध्नन्ति'इत्यत्र कथं हेतुः स्यादित्यत आह—यस्येति।असक्त्या-अनादरेणानायासेनेति यावत्।भगवतोऽपि कर्मबन्धोऽस्तीति केषांचित्प्रलापः। यथा 'विष्णुर्येन'इत्यादि। तन्निरासाय श्रुत्युपपत्ती प्राह—न कर्मणेति । नियामयति-नियच्छति ॥ ९ ॥

कथं तर्ह्यहं केवलं द्रष्टैव, प्रकृतिरेव चराचरं सूयत इत्युत्तरवाक्यमित्यतस्तन्निवर्त्याशङ्कां प्रदर्श्य व्याचष्टे —उदासीनवदिति । भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् , तदज्ञात्वा क्रियाभाव एवोक्त इति मत्वा शङ्कितम्। पुरा 'प्रकृतिं स्वामवष्टभ्य विसृजामि ' इत्युक्तम्; इदानीं तूदासीनवदिति

रा॥म्यं सत्यसङ्कल्पत्वं नैर्घृण्यादिदोषरहितत्वमित्येवमादिकं मम वसुदेवसूनोरैश्वरं योगं पश्य;यथाह श्रुतिः—†'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति ॥ १० ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११

ता॥तव स्वाम्यं,कथं च कारुणिकस्यापि कर्मपरतन्त्रतया दुःखमुत्पादयितुस्सत्यसङ्कल्पतेत्यत्राह—मत्स्वाम्यमिति । 'पश्य मे योगम्'इत्युपक्रान्तनिर्वहणरूपताप्रदर्शनाय—ममेत्यादिकम्। 'अवजानन्ति माम्' इत्यनन्तरश्लोकस्थास्मच्छब्दानुसन्धानवशात् ' मे ' इत्येतन्निरतिशयसौलभ्यसंछादितेश्वरभावमवतारमभिप्रैतीति—वसुदेवसूनोरित्युक्तम् । एतेन 'मनुष्यत्वे परत्वं च' इति सङ्ग्रहश्लोकांशोऽनुसहितः । युज्यत इति व्युत्पत्त्या स्वाम्यादेरत्र योगशब्दार्थतोक्ता । प्रकृतेरीश्वराधीनपरिणामत्वे जीवानां कर्मानुगुणप्रकृतिवशत्वे च श्रुतिमुदाहरति—यथाहेति ॥ १० ॥

महात्मनां विशेषं वक्तुं मूढानां स्वभाव उच्यते—'अवजानन्ति' इति श्लोकद्वयेन । प्रकृतसङ्गत्यर्थमेवंशब्दः। 'भूतमहेश्वरम्' इत्यस्य भावविशेषणत्वायोगात् व्यवहितेनापि 'माम्'इत्यनेनान्वयः ।

प्र.पा॥†श्वेता ४-९ ॥ 'अस्मान्मायी .सन्निरुद्धः ॥ मायान्तु...महेश्वरम्॥ १० ॥ अस्मात् - स्वशरीरभूतात्, स्वेनाविभक्तात् सूक्ष्मावस्थात् प्रकृतेः, मायी - सर्वेश्वरः, एतत् सर्वं जगत् , सृजतीत्यर्थः । तस्मिन् - प्रकृतौ, अन्यः - बद्धजीवः, मायया - प्रकृत्या, अविद्ययेति यावत् , 'अनादिमायया सुप्तः' इति श्रुतेः; सन्निरुद्धः - बद्ध इत्यर्थः । मायामायिशब्दयोरर्थमाह - मायान्त्विति ॥ १.गी. सं.१३॥

शं॥हेतुना निमित्तेन अनेन अध्यक्षत्वेन कौन्तेय जगत् सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु। दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिः'अहम् इदं भोक्ष्ये''पश्यामि इदम्''शृणोमि इदम्''सुखम् अनुभवामि' 'दुःखम् अनुभवामि''तदर्थमिदं करिष्ये' 'इदं ज्ञास्यामि' इत्याद्या अवगतिनिष्ठा अवगत्यवसानैव। 'यो अस्याध्यक्षः परमे व्योमन्' इत्यादयश्च मन्त्राः एतमर्थं दर्शयन्ति । ततश्च एकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसम्बन्धिनः अन्यस्य चेतनान्तरस्य अभावे भोक्तुः अन्यस्य अभावात् किंनिमित्ता इयं सृष्टिः इत्यत्र प्रश्नप्रतिवचने अनुपपन्ने,'को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः' इत्यादिमन्त्रवर्णेभ्यः। दर्शितं च भगवता—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति ॥ १० ॥

एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वजन्तूनाम् आत्मानम् अपि सन्तम्—अ-

आ॥ष्टा कर्ता अहमेवेत्यर्थः।तथा च श्रुतिः'यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम्' इति ॥ १० ॥

ज॥निष्क्रियत्वमुच्यते। एवं तर्हि प्रकृतिरेव सूयते,त्वयि तु तत्सन्निधानात्कर्तृत्वोपचारमात्रमित्यापन्नमिति तन्निवृत्त्यर्थमिद वाक्यम् । तत्राध्यक्षेणेत्यनेन प्रकृतिसूतेर्द्रष्टाहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव, न तु तस्याः स्वातन्त्र्यमिति । दर्शनपूर्वकत्वात्प्रयोजकत्वस्य तदुक्तिः । अन्यथा तृतीया व्यर्था स्यादिति भावः। प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुत इत्यत आह—यत इति । प्रसूता-सृष्टावभिमुखीभूता, प्रसूती-प्रसूतिः, तोयेन कर्मणा, व्यससर्ज - विससर्ज, बहुलग्रहणात् ॥ १० ॥

रा॥एवं मां भूतमहेश्वरं सर्वज्ञं सत्यसङ्कल्पं निखिलजगदेककारणं परमकारुणिकतया सर्वसमाश्रयणीयत्वाय मानुषीं तनुमाश्रितं स्वकृतैः पापकर्मभिर्मूढा अवजानन्ति-प्राकृत मनुष्यसमं मन्यन्ते,भूतमहेश्वरस्य ममापारकारुण्यौदार्यसौशील्यवात्सल्यनिबन्धनं मनुष्यत्वसमाश्रयणलक्षणमिमं परं भावमजानन्तो मनुष्यत्वसमाश्रयणमात्रेण मामितरसजातीयं मत्वा तिरस्कुर्वन्तीत्यर्थः ॥ ११ ॥

ता॥भूतमहेश्वरादिशब्देनाभिप्रेतप्रदर्शनं—**सर्वज्ञ**मित्यादि।**मानुषीं**-मनुष्यसम्बन्धिनीम्;*मनुष्यसजातीयसन्निवेशवतीमित्यर्थः। यथा हिरण्मयमृण्मयघटयोर्द्रव्यवैजात्येऽपि संस्थानसाम्यं, तद्वदत्रापि। इदं च मत्स्यादितन्वाश्रयणस्याप्युपलक्षणम्। मौढ्यस्यापीश्वराधीनत्वेन तद्दोषव्युदासाय—**स्वकृतैः पापकर्मभि**रित्युक्तम् । अवज्ञाकारणं दर्शयति—**प्राकृते**ति । 'परं भावमजानन्तः' इत्यनेन भ्रमहेतोर्भेदाग्रहस्य कथनम् ; 'मानुषीं तनुमाश्रितम्' इति तु सादृश्यस्य; ताभ्यां प्राकृतमनुष्यसजातीयताभ्रमः ; ततश्च यथाकथञ्चित्प्रतीयमनोत्कर्षापह्नवेन निकर्षापादनरूपावज्ञा; तदेतदखिलं विशदयति—**भूतमहेश्वरस्ये**ति। **मनुष्यत्वसमाश्रयणलक्षण**मिति—अजहत्स्वस्वभावस्य अनितरसाधारणमेवंविधमनुष्यत्वाश्रयणमपि वस्तुतः परत्वानुप्रविष्टमिति भावः ॥ ११ ॥

प्र पा ॥ *मनुष्यजातीय. पा ॥

शं॥वजानन्ति अवज्ञां परिभवं कुर्वन्ति मां मूढाः अविवेकिनः मानुषीं मनुष्यसम्बन्धिनीं तनुं देहम् आश्रितम्,मनुष्यदेहेन व्यवहरन्तमित्येतत्,परं प्रकृष्टं भावं परमात्मतत्त्वम् आकाशकल्पम् आकाशादपि अन्तरतमम् अजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तम् ईश्वरं स्वात्मानम् । ततश्च तस्य मम अवज्ञाभावेन आहताः ते वराकाः ॥ ११ ॥

आ॥तर्हि केचित्कथं त्वामवजानन्ति? का च तेषां गतिरित्यत आह—अवजानन्तीत्यादिना—मानुषीं तनुं मूढानां मानुषवत्प्रतीतां तनुं न तु मनुष्यरूपाम् । उक्तं च मोक्षधर्मे—'यत्किञ्चिदिह लोकेऽस्मिन्देहबद्धं विशांपते। सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः । ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् । भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च । भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' इति । अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराः पृथक् शङ्क्याः।'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः। वाराहं नारसिंहं च

जा॥उत्तरवाक्यस्य संगत्यप्रतीतेस्तामाह—**तर्ही**ति । यदित्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता, कैश्चिदवज्ञानात् तेषां चानर्थाभावादुक्तमसदिति शङ्काभिप्रायः । 'मानुषीं तनुमाश्रितम्' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे—**मानुषी**मिति । भ्रान्त्यनुवाद एवायमिति भावः । कुतो नेत्यत आह—**उक्तंचे**ति । चो हेतौ । शरीराणि हि भौतिकानि भवन्ति; भूतानि चेश्वरस्य बुद्धिजानि ; तत्कथं तानि बध्नीयुरित्यर्थः । अत्रैव 'ईश्वरो हि' इत्यादिनान्ये हेतवोऽभिधीयन्ते। विराट् नित्याभिव्यक्तरूपः, वरदो मोक्षप्रदः । सगुणः - स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिंस्तदव्यक्तम्,तदभिमानिनी देवता तस्य शुश्रूषुः । लिङ्गव्यत्ययश्छान्दसः । अस्त्वेतन्मूलरूपविषयम् । अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह—**अवतारे**ति । 'यत्तद्ददृशिवान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्गे। अस्तु हयग्रीवस्यैवं, कृष्णस्तु मानुषशरीर एव किं न स्यादिति चेत्—न, युक्तिसाम्यात् , विशेषप्रमाणाच्चेत्याह—**रूपाणी**ति।असृजत्-व्यभजत्। प्रादुर्भावभवायेत्तरत्र। सः-नारायणः। मानुषं-कृष्णादिकम्। तत्रैव-मोक्षधर्म एव, प्रथमसर्गकाल एव । मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः।उपसंहरति—**अत** इति।

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥** १२

रा॥**मम मनुष्यत्वे परमकारुण्यादिपरत्वतिरोधानकरीं राक्षसीमासुरीं च मोहिनीं प्रकृतिमाश्रिताः, मोघाशाः-मोघवाञ्छिताः निष्फलवाञ्छिताः, मोघकर्माणः-मोघारम्भाः,**

---

**ता**॥'मोघाशाः' इति श्लोकेन प्रस्तुतस्य हेतुफले प्रतिपाद्येते। मोहनप्रकृत्याश्रयणं हि मोघाशत्वादौ हेतुरिति पूर्वमुत्तरार्धव्याख्या। राक्षसीं-रक्षस्सम्बन्धिनी तामसीम्; आसुरीम्—असुरसम्बन्धिनीं राजसीं क्रोधलोभादिमयीमित्यर्थः। प्रकृतिं-स्वभावमित्यर्थः। 'यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः। भूतान् प्रेतगणांश्चान्ये यजन्ते तामसा जनाः' 'मन्ये त्वां राक्षसं क्रूरमथवा तामसात्मकम्। यस्मात्क्षिपसि गोविन्दं पाण्डवं च धनञ्जयम्'इत्यादिष्विवेति द्रष्टव्यम्। 'मोहिनीम्'इत्यनेन भगवत्परत्वतिरोधानादिकमभिप्रेतम्। 'मोघाशाः' इति समासांशद्वयार्थकथनं-**मोघवाञ्छिता निष्फलवाञ्छिता** इति। फलपर्यन्तकर्मस्वरूपासिद्ध्यभिप्रायेण—**मोघारम्भा** इत्युक्तम्। उपक्रमप्रभृति निष्फलप्रवृत्तय इ-

---

**प्र-पा**॥ १. गी. १७-४॥ | २॥

---

शं॥**कथम्?—मोघाशाः वृथा आशाः आशिषो येषां ते मोघाशाः, तथा मोघकर्माणः यानि च अग्निहोत्रादीनि तैः अनुष्ठीयमानानि कर्माणि, तानि च, तेषां भगवत्परिभवात् स्वात्मभूतस्य च अज्ञानात्, मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः। तथा मोघज्ञानाः मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः, ज्ञानमपि येषां निष्फलमेव**

---

आ॥**वामनं मानुषं तथा' इति; तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेः। अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम्। भूतं महदीश्वरं चेति भूतमहेश्वरम्। तथा हि बाभ्रव्यशाखायाम् 'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्' इति; 'अस्य महतो भूतस्य निश्श्वसितम्' इति च। 'ब्रह्मपुरोहितब्रह्मकायिकमहाराजिक' इति च मोक्षधर्मे॥**

**तेषां फलमाह—मोघाशा इति। वृथाशाः-भगवद्द्वेषिभिराशासितं न किंचिदाप्यते। यज्ञादिकर्माणि च वृथैव तेषाम्; ज्ञानं च। केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न क-**

---

ज॥तेषाम्-अवताराणाम्। उत्तरपदविरोधश्चान्यथेति भावेन तद्व्याचष्टे-**भूतमि**ति। भूतं- सर्वदा विद्यमानमिति कालानन्त्यमाचष्टे। **महदिति**—देशानन्त्यम्। ईश्वरमिति गुणानन्त्यम्। भावं याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकम्। अत्र श्रुतिं पठति—**तथाही**ति। ईशं वराणामितीश्वरम्। षष्ठ्याः परनिपातः। देवाः वीर्ये पुत्रा यस्यासौ तथोक्तः। महतो भूतस्येति देशकालानन्त्यमुच्यते। वराणां देवानामीशत्वे ब्रह्मेति मोक्षधर्मवाक्यं प्रमाणम्। पुरोहितादिदेवनिकायास्त्वदधीना इत्यर्थः। ब्रह्मेति द्विरुक्तिरादरार्था॥

किञ्च तेषां फलमित्यस्य परिहारो न दृश्यते, अत आह—**तेषामिति**। अनर्थत्वप्रदर्शनाय व्याचष्टे—**वृथे**ति। सम्पदादिप्राप्तिदर्शनात्कथमित्यत—आह—**भगव**दिति। युद्धादिकर्मणां साफल्यदर्शनात्कथं मोघकर्माण इत्यत आह—**यज्ञादी**ति। ज्ञानं तत्त्वविषयं तेषां नास्त्येव। अतः कथं तस्य मोघत्वमुच्यत इत्यत आह—**ज्ञानं चे**ति। ज्ञानं च तेषां वृथैवेत्यस्य केनापीत्यर्थ इति संबन्धः। अनेन ज्ञानपदमुपलक्षणमिति चोक्तं भवति। न केवलं पुरुषार्थानवाप्तिः, अपितु दुःखावाप्तिश्चेति

रा॥मोघज्ञानाः-सर्वेषु मदीयेषु चराचरेष्वर्थेषु विपरीतज्ञानतया निष्फलज्ञानाः,विचेतसः-

ता॥त्यर्थः।ज्ञानस्य मोघत्वं हि स्वाधीनप्रवृत्त्यभिमतफलराहित्यम्।तच्चायथार्थत्वनिबन्धनम् । तस्य चात्र विषयविशेषनिर्देशाभावाद्यथासम्भव सर्वविषयत्वमुचितमित्यभिप्रायेणाह—सर्वेष्विति । वैपरीत्यं च अस्वतन्त्रे स्वतन्त्रत्वम्, अन्यदीये स्वकीयत्वम्, अजडे नित्ये जडत्वानित्यत्वादिकम्, अस्थिरे स्थिरत्वमित्यादिकं द्रष्टव्यम् । 'मोघज्ञानाः' इति ज्ञानविशेषस्य विहितत्वात्तत एव तत्कारणस्य च निषिद्धम-

शं॥स्यात्।विचेतसः विगतविवेकाश्च ते भवन्ति इत्यभिप्रायः।किञ्च—ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावम् आसुरीम् असुराणां च प्रकृतिं मोहिनीं मोहकरीं श्रिताः आ-

आ ॥ श्रितपुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च 'तानहं द्विषतः क्रूरान्' इत्यादि । मोक्षधर्मे च 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः । यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित्' इति । सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये । सर्वाधमे द्वेषयुतश्च तस्मिन्भ्रूणानन्तघ्नोऽस्य समो नचैव'इति सामवेदे शाण्डिल्यशाखायाम् । 'द्वेषाच्चैद्यादयो नृपाः' 'वैरेण यन्नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः। ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम्' इति भागवते । भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं च, स्वभक्तस्य कदाचिच्छापबलात् द्वेषिणोऽपि भक्तिफलमेव भगवान्ददातीति । भक्ता एव हि ते पूर्वं शिशुपालादयः ; शापबलात् द्वेषिणः । तत्प्रश्नपूर्वं पार्षद-

जा॥भावेन तत्र प्रमाणान्याह—वक्ष्यतिचेति।आ सम्यक् । लोकान्तस्य चण्डालादेः । पुष्करविष्टराद्ये पद्मासनस्य पितरि । भ्रूणानन्तघ्नः-अनन्तभ्रूणघ्नः।यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनमित्यत आह—द्वेषादिति। तद्गतिं गता इति संबन्धः । वैरेण ध्यायन्तः यदीयगत्यादिभिराकृतधियः आकृष्टबुद्धयः । ये पूर्वं भक्ताः शिशुपालदयः, तद्विषये भवत्वेषा गतिः, न तु पौण्ड्रसाल्वादिविषये; अत आह—नित्येति । भक्तप्रियत्वज्ञापनार्थमित्युक्तं विवृणोति—स्वभक्तस्येति । इति भक्तप्रियत्वज्ञापनार्थमिति योजना । स्यादेतत्, यदि तेषां स्वतो भक्तत्वं शापबलादेव द्वेषित्वमित्येतत्प्रमितं स्यात्,तदेव कुत इत्यत आह—भक्ता एवहीति। प्रसिद्धमेवैतत् भागवतादावित्यर्थः।कुतो वचनानामर्थान्तरकल्पनेति चेत्—'यो द्विष्यात्'इत्याद्युदाहृतवाक्याविरोधात्;हेत्वन्तरं चाह—तत्प्रश्न इति । 'अहो अत्यद्भुतं ह्येतत् दुर्लभैकान्तिनामपि । वासुदेवे भगवति गतिश्चैद्यस्य विद्विषः' इति युधिष्ठिरेण द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपे तद्विषये प्रश्ने कृते सति नारदेन'मातृष्वसेयो वश्चैद्यो दन्तवक्त्रश्च पाण्डव । पार्षदप्रवरौ विष्णोर्विप्रशापात्पदच्युतौ' इति तदुत्तरत्वेन पूर्वपार्षदत्वादिकं कथ्यते; ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते। कथमित्यत आह—अन्यथेति । यदि द्वेषो मोक्षसाधनं स्यात्तदा किमत्राद्भुतम् ; यतो द्वेषोऽप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम्; पूर्वपार्षदत्वादिकं त्वप्रस्तुतमनुपयुक्तं न वक्तव्यं स्यादित्यर्थः।ननु नारदेन'निन्दनस्तवसत्कार'इत्यादिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते ; यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् , तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह—भगवत इति । साम्यं निर्विकारत्वम् । भक्ता-

रा॥तथा सर्वत्र विगतयाथात्म्यज्ञानाः,मां सर्वेश्वरमितरसमं मत्वा मयि यत्कर्तुमिच्छन्ति, यदुद्दिश्यारम्भान् कुर्वते, तत्सर्वं मोघं भवतीत्यर्थः ॥ १२ ॥

---

ता॥शक्यत्वात्'विचेतसः'इति निषेधस्तदतिरिक्तज्ञानपर इत्यभिप्रायेणाह-सर्वत्र विगतयाथात्म्यज्ञानाइति । ननु मोघाशत्वादिकमसिद्धं, स्वर्गपश्वाद्यभिलषितसिद्धेः, तदुपायभूतयागादिषु यथार्थज्ञानाच्चेत्यत्राह—मामिति।अत्र यथार्थज्ञानाभावान्मोघज्ञानत्वम्, तत एव मोघाशत्वमोघारम्भत्वे इति क्रमः॥

---

शं॥श्रिताः'छिन्द्धि, भिन्द्धि, पिब, खाद,परस्वम् अपहर'इत्येवंशीलाः क्रूरकर्माणो भवन्ति इत्यर्थः ॥ १२ ॥

---

आ॥त्वशापादिकथनाच्चैतज्ज्ञायते।अन्यथा किमिति तदप्रस्तुतमुच्यते।भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यति'इति वक्ष्यति । न च 'भावो हि भवकारणम्' इत्यादिविरोधः । द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणामपि गुरुत्वं भवतीत्यनिष्टमापद्येत । न चाकृतधीत्वे विशेषः; तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः। 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः' इति । 'यदनिन्दत्पिता मह्यम्' इत्यारभ्य 'तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्' इति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु च निषेधः, कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिंस्तदुच्यते तत्रैव निषेध उक्तः । महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्भ्यो युक्तिमन्त्येव बलवन्ति वाक्यानि। युक्तयश्चोक्ताः अन्येषाम् । नचैषां काचि-

---

ज॥नामपराधं भगवान्न गणयतीत्येतत्कुत इत्यत आह—नेति।द्वेषस्य मुक्तिसाधनत्वाभावे—भावो-यथा कथंचिच्चिन्तनं,भवस्य-मोक्षस्य कारणम्-इत्यादिवचनविरोधः स्यादित्यत आह—नचेति । कुतो नेत्यत आह—द्वेषेति । हि-यस्मादेतद्वचनमिति युक्तं-घटनोपेतं, तस्मादित्यर्थः । यथोक्तं 'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी' इति। प्रतीत एवार्थः किं न स्यादित्यत आह—अन्यथेति। भगवद्द्वेषिणो मुक्तिभाजस्तदाकृतधीत्वाद्भगवद्भक्तवदित्यनुमानविरोध इत्यत आह—नचेति । उभयोराकृतधीत्वे सति फलेऽप्यविशेष इति च नेत्यर्थः । कुत इत्यतः कालातीतत्वादित्याह—तेषामेवेति । आकृतधीनामिव विविक्षुः-वेक्ष्यतीति संभावनाविषयः, आशङ्कायामचेतनेष्पसंख्यानात् । मह्यं-मम । ननु वचनत्वाविशेषात्'यो द्विष्यात्'इत्यादिभिः'द्वेषाच्चैद्य'इत्यादीनां कथं बाधनमित्यत आह—बह्विति। निषेधः द्वेषस्य मुक्तिसाधनतायाः । न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः,किंतु स्वव्याहतत्वास्वव्याहतत्वरूपोऽपीत्याह -यस्मिन्निति।भागवतादौ ग्रन्थे'भगवन्निन्दया'इत्यादिर्निषेधः।भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम् ; इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाह—महातात्पर्येति। उक्तः-उक्तप्रायः। इतोऽपि बाध्यबाधकभावो युक्त इति-भावेन व्याप्तिं तावदाह—अयुक्तिमद्भ्यइति । सप्तम्यर्थे मतुप्। ततः किमित्यत आह—युक्तयश्चेति। महातात्पर्यविरोधश्चेत्यपेक्षया। अन्येषाम् अनुकूलाः।'अव्ययं विबुधश्रेष्ठम्' 'पुष्करविष्टराद्ये'इति सावकाशत्वनिरवकाशत्वविशेषाच्चैवमित्याह—नचेति। इतरेषां तूक्तैवेति शेषः। इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३

रा॥ये तु स्वकृतैः पुण्यसञ्चयैः मां शरणमुपगम्य विध्वस्तसमस्तपापबन्धा दैवीं प्रकृतिमाश्रिता महात्मानस्ते, भूतादिमव्ययं-वाङ्मनसागोचरनामकर्मस्वरूपं परमकारुणिकतया साधुपरित्राणाय मनुष्यत्वेनावतीर्णं मां ज्ञात्वाऽनन्यमनसो मां भजन्ते; मत्प्रियत्वातिरेकेण मद्भजनेन विना मनसश्चात्मनश्च बाह्यकरणानां च धारणमलभमाना मद्भजनैक-

ता॥एवमवज्ञाप्रवृत्तमूढभूयिष्ठे लोके निष्फलस्तवावतार इति शङ्कायामवतारसाफल्यकारिणां महात्मनां वृत्तकथनव्याजेन भक्तिं प्रसञ्जयति—**महात्मानस्त्विति** । महात्मशब्देन, तुशब्देन च सिद्धं भजनौपयिकमतिशयं दर्शयन् उद्देश्योपादेयांशं च विभजते—**येत्विति** । 'जनास्सुकृतिनः' 'मामेव ये प्रपद्यन्ते' इत्यादि प्रागुक्तं प्रतिसंधापयति—**स्वकृतैः पुण्यसंचयैर्मां शरणमुपगम्येति**।दैवीं-सात्त्विकीम्। भूतादिमित्यनेनाशक्योपासन परत्वं विवक्षितमित्याह—**वाङ्मनसेति**।'माम्'इत्यनेनावतारपर्यवसितं सौलभ्य सहेतुकमाह--**परमकारुणिकतयेति** । अवतारस्य दयादिमूलत्वेन कर्ममूलत्वाभावाज्ज्ञानसङ्कोचाद्यभावोऽव्ययशब्देनोच्यते । अनन्यमनस्त्वं सहेतुकं विवृणोति—**मत्प्रियत्वेति** । आर्ताद्यधिकार्यन्तरव्यवच्छेदार्थत्वादनन्यप्रयोजनत्वविवक्षालोचिता—**मत्प्रियत्वेति** । पार्थशब्देनेन्द्रसूनुत्त्वमपि दैव-

प्र-पा॥ १. गी, ९-१३ ॥ | २. गी. ७-१४ ॥

शं॥ये पुनः श्रद्दधानाः भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः—महात्मानस्तु अक्षुद्रचित्ताः माम् ईश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणाम् आश्रिताः सन्तः भजन्ति सेवन्ते अनन्यमनसः अनन्यचित्ताः ज्ञात्वा भूतादिं भूतानाम् आदिकारणम्

आ॥द्गतिः।साम्येऽपि वाक्ययोर्लोकानुकूलाननुकूलयोर्लोकानुकूलमेव बलवत्।लोकानुकूलं भक्तप्रियत्वं च; नेतरत् । उक्तं च तेषां पूर्वं भक्तत्वं 'मन्ये सुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्' इत्यादि । अतो न भगवद्द्वेषिणां काचिद्गतिरिति सिद्धम्। द्वेषकारणमाह—राक्षसीमिति ॥ १२॥

नेतरे द्विषन्तीति दर्शयितुं

ज॥—**साम्येऽपीति**।गुणान्तरेण साम्येऽपीति कैमुत्यार्थम्।लोकानुकूलशब्देन लोकदृष्टव्याप्तिकानुमानानुकूलत्वमुच्यते, ततः किमित्यत आह—**लोकेति** । इतरत्-द्वेषिप्रियत्वम् । भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव । शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम् , तत्कथमिति चेत्—पार्षदत्वात् , वचनाच्चेत्याह—**उक्तंचेति** । त्रयाणां लोकानामधीशे संरम्भेण मार्गमात्रेणाभिनिविष्टचित्तान् । उपसंहरति—**अतइति**। गतिः—सद्गतिः। स्वमौढ्यादेव मामवजानन्ति, न मद्दोषात्तेषां च महाननर्थ इति सर्वं समाहितम् । राक्षसीमित्यादि तु किमर्थमित्यत आह—**द्वेषेति** । मौढ्यान्मिथ्याज्ञानं भवतु, प्रज्वलनात्मको द्वेषस्तु कुत इत्याशङ्कानिवृत्त्यर्थमिति शेषः । अन्येषामविद्यमानं मौढ्यमेव तेषां कुत इत्याशङ्कानिरासार्थमिति वा । अत्र कारणमिति मूलकारणम् ॥ १२ ॥

ननु कुतोऽयं विवेक इत्याकाङ्क्षायां राक्षसादिभ्य इतरे न द्विषन्तीत्येतावदेव वक्तव्यम्; भजन्तीत्यादि तु व्यर्थमित्यत आह—**नेतरइति**। सत्यमेतत् , तथापि देवानां स्वरूपकथनार्थमेतत् । तच्च द्वेषा-

रा॥प्रयोजना भजन्ते ॥ १३ ॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४**

**अत्यर्थमत्प्रियत्वेन मत्कीर्तनयतननमस्कारैर्विना क्षणाणुमात्रेऽप्यात्मधारणमलभमानाः मद्गुणविशेषवाचीनि मन्नामानि स्मृत्वा पुलकाञ्चितसर्वाङ्गा हर्षगद्गदकण्ठा नारायणकृष्णवासुदेवेत्येवमादीनि सततं कीर्तयन्तः तथैव यतन्तः-मत्कर्मस्वर्चनादिकेषु तदु-**

---

ता॥प्रकृतिरिति सूचितम् ॥ १३ ॥

भजन्तीत्युपासनं प्रसक्तम्; अथ तदेव कीर्तनयतननमस्कारेषु प्रेरयदत्यर्थप्रियत्वलक्षणावस्थया विशेष्यते—**सतत**मिति । कीर्तनादीनां त्रयाणां वाङ्मनःकायकर्मरूपतां तेषामेव प्रकरणान्तरेषु सिद्धं प्रकारं,सततमित्यस्य च कीर्तनयतननमस्कारनित्ययुक्तत्वोपासनेष्वविशेषेणान्वयमाह—**अत्यर्थे**ति । अत्यर्थमत्प्रियत्वं भक्त्येत्यस्यार्थः । क्षणे महापृथिव्यादिवत्कल्पितेऽप्यस्य चरमावयवतया कल्पितोंशः—**क्षणाणुमात्रेऽपी**त्युक्तः । नाम्नां स्वादुत्वातिशयसिद्ध्यर्थं—**मद्गुणविशेषवाचीनी**त्युक्तम् । नामकीर्तनं चेष्टितादिकीर्तनस्योपलक्षणम् । गुणानुसन्धानाभावेऽपि स्वरूपतः प्रीतिजननाय पुनः—**मन्नामानी**ति व्यपदेशः।**पुलकाञ्चितसर्वाङ्गा** इत्यादिकं तत्तत्प्रदेशोक्तशब्दोपादानम्; यथा 'तन्नामस्मरणोद्भूतपुलकश्चेदिपुङ्गवः' इति । **हर्षगद्गदकण्ठा** इत्यनेन 'स्वरनेत्राङ्गविक्रिया' इत्यादिभक्तिलक्षणग्रन्थस्मारणम् । 'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः' इति कृष्णशब्दोऽपि पुरुषार्थहेतुत्वप्रतिपादनमुखेन परव्यूहादिसमस्तावस्थासाधारण इति ज्ञापनाय व्यापकयोर्मध्ये पठितः । अवतारान्तरेष्वपि कृष्णशब्दः प्रयुज्यते—'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति।यद्वा **नारायणे**ति परत्वानुसन्धानम्, **कृष्णवासुदेवे**ति तु अवतारविशेषपरतया सौलभ्यानुसन्धानम्; 'येशेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम्' 'नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः' 'कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे' 'एतावतालमघनिर्हरणाय पुंसां' 'सङ्कीर्त्य नारायणशब्दमात्रम्' इत्यादिषु सर्वत्र सङ्कीर्तनप्रभावः प्रसिद्धः । रहसि जनसन्निधौ च व्रीडादिराहित्यमपि सततशब्देन व्यञ्जितम् । **तथैव**-सततं भक्त्येत्यर्थः। **मत्कर्मस्वि**त्यादिकं भक्तियोगासाधारणयतन-

---

प्र-पा॥ १ ॥

२ ॥ ३. भार. उद्यो. ६९-५ ॥

४. तैत्ति-नारा-१ अनु. 'उद्धृताऽसि...बाहुना । पातालगता त्वं वराहरूपिणा भगवता शतबाहुना महता यत्नेन उद्धृतासीति भूमिस्तुतिः ॥

५ ॥ ६ ॥

७. वि-पु-७-३३. 'कमलनयन.. शङ्खचक्रपाणे। भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तान-पापान् ॥'

८. भागवते. ६-३ - २४. 'एतावताऽलमघनिर्हरणाय पुंसां(यत्की) सङ्कीर्तनम्भगवतो गुणकर्मनाम्नाम्।आ(वि)क्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण उपैति (इयाय) मुक्तिम् ॥

९. 'आर्ता विषण्णाश्शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः। सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखास्सुखिनो भवन्ति ॥' आर्ताः - नष्टैश्वर्यकामाः, विषण्णाः - अपूर्वैश्वर्यकामाः, शिथिलाः - भगवत्प्राप्तिरहिताः, आत्मप्राप्तिकामाः; भीताः-भगवत्प्राप्तिव्यतिरेकेण संसरणाद्भीताः, घोरेषु च व्याधिषु वर्तमानाः-'यन्मुहूर्तं क्षणं वापि' 'वरं हुतवहज्वाला' 'तदप्राप्तिमहादुःख' इत्यादिरीत्या प्रसिद्धाः परमार्ताः, नारायणशब्दमात्रम् - अष्टाक्षरस्याप्युपलक्षणम् । शिष्टं स्पष्टम् ॥

रा॥पकारकेषु भवननन्दनवनकरणादिकेषु च दृढसङ्कल्पा यतमानाः,भक्तिभारावनमितमनोबुद्ध्यभिमानपदद्वयकरद्वयशिरोभिरष्टाङ्गैरचिन्तितपांसुकर्दमशर्करादिके धरातले दण्डवत्प्रणिपतन्तः,सततं मां नित्ययुक्ताः-नित्ययोगं काङ्क्षमाणा आत्मान्तं मद्दास्यव्यवसायिन उपासते ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५

अन्येऽपि महात्मानः पूर्वोक्तैः कीर्तनादिभिः ज्ञानाख्येन यज्ञेन च यजन्तो मामुपासते ; कथं? बहुधा पृथक्त्वेन-जगदाकारेण विश्वतोमुखं-विश्वप्रकारमवस्थितं मामेकत्वेनोपासते; एतदुक्तं भवति—भगवान् वासुदेव एव नामरूपविभागानर्हातिसूक्ष्मचिद

ता॥विषयप्रदर्शनम्। तत्कर्मयतने दृढसङ्कल्पत्वं महत्यामापदि,सम्पदि चान्याश्रयणपरिहारार्थम्।भक्तिभारेत्यादिक प्रणामस्य रागप्राप्तत्वकथनम् । 'मनोबुद्ध्यभिमानेन सह न्यस्य धरातले । कूर्मवच्चतुरः पादाञ्छिरस्तत्रैव पञ्चमम्' इत्युक्तोऽष्टाङ्गप्रणामः । 'नित्ययुक्ताः' इति आशंसायां क्त इत्याह—नित्ययोगमाकाङ्क्षमाणा इति । काङ्क्षमाणशब्दश्चानश्प्रत्ययान्तः, 'ताच्छील्यवयोवचनशक्तिषु चानश्' इत्यनुशासनात्। 'दासभूताः' इत्याद्युक्तस्वरूपानुरूपेण नित्ययोगं विशिनष्टि—आत्मान्तं मद्दास्यव्यवसायिन इति ॥ १४ ॥

'भजन्त्यनन्यमनसः' इत्यनन्यमनस्त्वेन प्रथममुपासनं विशेषितम् ; ततश्च कीर्तनादिभिरन्तरङ्गैः । अथ वेद्याकारविशेषप्रदर्शनेनापि तदेव विशेष्यते—'ज्ञानयज्ञेन' इत्यादिना 'सदसच्चाहमर्जुन' इत्यन्तेन । चकारः पूर्वोक्तकीर्तनादिसमुच्चयार्थः । अपिस्त्वन्य इत्यनेनान्वितः, अन्यथा नैरर्थक्यादित्यभिप्रायेणाह—अन्येऽपीति । अन्यशब्दोऽत्र पूर्णोपासकपरः। यज्ञेन यजन्तः-यज्ञेन प्रीणयन्त इत्यर्थः। 'बहुधा' 'पृथक्त्वेन' इत्यनेन समष्टिव्यष्टितदवान्तररूपसमस्तसङ्ग्रह इत्याह—जगदाकारेणेति। विश्वतोमुखशब्दस्यात्र समभिव्याहारानुगुणं विवक्षितमाह—विश्वप्रकारमिति । नन्वेकत्वेन पृथक्त्वेन चोपासत इत्यन्वयः किं नोच्यते ; कथ चैकस्यैव सतो बहुत्वेनावस्थानम् ;? तथात्व सविकारत्वसंसारित्वादिदोषाश्च स्युः ; बहुधावस्थितस्यैकत्वेनोपासितुर्दृष्टिविधिवद्भ्रान्तिश्च स्यादित्यत्राह—एतदुक्तमिति । एतेन परोक्तप्रक्रिययोपासनविधात्रयपरत्वं भेदाभेदादिवर्णनं च प्रत्युक्तम्। भगवानित्यनेन—सृ-

प्र-पा॥ १ सात्वतसं. ६. परिच्छेदे. १८७-श्लो ॥ २. अष्टाध्याय्यां. ३-२-१२९ । एषु द्योत्येषु कर्तरि चानश्।भोगं भुञ्जानः,कवचं बिभ्राणः, शत्रून्निघ्नानः ॥ ३. पञ्चरात्रे ॥

शं॥अव्ययम् ॥ १३ ॥

कथम्—सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तः यतन्तश्च इन्द्रियोपसंहारैः शमदमदयाऽहिंसादिधर्मैः दृढव्रताः दृढं स्थिरम् अचाल्यं व्रतं येषां ते दृढव्रताः नमस्यन्तश्च मां हृदयेशयम् आत्मानं भक्त्या नित्ययुक्ताः सन्तः उपासते सेवन्ते ॥ १४ ॥

ते केन प्रकारेण उपासते इति? उच्यते—ज्ञानमेव भगवद्विषयं यज्ञः, तेन ज्ञानयज्ञेन यजन्तः पूजयन्तः माम् ईश्वरं च अपि अन्ये अन्याम् उपासनां परित्यज्य उपासते।तच्च

आ॥देवानाह—महात्मान इति ॥ १३ ॥ १४ ॥

ज॥भावोपपादनार्थमिति भावः । देवानित्युत्तमजीवोपलक्षणम् ॥ १३ ॥ १४ ॥

रा ॥ चिद्वस्तुशरीरस्सन् सत्यसङ्कल्पो विविधविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीर स्स्यामिति सङ्कल्प्य स एक एव देवतिर्यङ्मनुष्यस्थावराख्यविचित्रजगच्छरीरोऽवतिष्ठत इत्यनुसन्दधानाश्च मामुपासते—इति ॥ १५ ॥

तथा हि विश्वशरीरोऽहमेवावस्थित इत्याह—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६

अहं क्रतुः - अहं ज्योतिष्टोमादिकक्रतुः; अहमेव महायज्ञः; अहमेव पितृगणपुष्टि

---

ता॥ष्ट्याद्यौपयिकगुणप्रपञ्चप्रदर्शनम्। वासुदेवशब्दे प्रथमांशेन सर्वसामानाधिकरण्यव्यपदेशनिदानसर्वशरीरकत्वपर्यवसितव्याप्तिविशेषः, द्वितीयांशेन सृष्टिप्रयोजनं क्रीडादिरेवेत्युच्यते । द्वाभ्यां च पदाभ्याम् अनन्योपासकैकान्तिजनशीलितमन्त्रविशेषोऽपि स्मारितः । पृथिव्यादिबहुत्वमात्रस्य प्रत्यक्षादिसिद्धत्वादेकस्यैव सतो बहुत्वं हि शास्त्रवेद्यम् , ततश्च तथाभूतैकत्व एवात्र वाक्यतात्पर्यम् ; तच्चैकस्य सर्वशरीरत्वेन निर्व्यूढमिति न कश्चिद्दोषः ॥ १५ ॥

यद्यपि परव्यूहादिरूपेणैकत्वपृथक्त्वे वक्तुं शक्ये , तथापि अनन्तरग्रन्थानुसारादुक्त एवार्थ इत्यभिप्रायेण 'अहं क्रतुः' इत्यादिश्लोकचतुष्टयस्य प्रकृतसङ्गतिमर्थं चाह—**तथाहीति** । **ज्योतिष्टोमादिक** इत्यनेन **महायज्ञ** इत्यनेन च *विषयविशेषप्रदर्शनात्क्रतुयज्ञशब्दयोः पौनरुक्त्यपरिहारः । शारीरमानसश्रौतस्मार्तादिविभागस्तु न प्रसिद्ध्यनुसारीति भावः । महायज्ञः—ब्रह्मयज्ञादिः पञ्चविधः । अविशेषादेवकारस्सर्वत्रान्वेतव्यः । क्रतुतदवयवादिप्रसङ्गात् स्वधाशब्दसहपाठादाज्यस्य च पृथगु-

---

प्र-पा॥ *इत्यनेन च विशेषप्रदर्शनात् . पा ॥

---

शं॥ज्ञानम्—एकत्वेन'एकमेव परं ब्रह्म'इति परमार्थदर्शनेन यजन्तः उपासते । केचिच्च पृथक्त्वेन 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुः अवस्थितः' इति उपासते। केचित् 'बहुधा अवस्थितः स एव भगवान् सर्वतोमुखः विश्वरूपः' इति। तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेण उपासते ॥ १५ ॥

यदि बहुभिः प्रकारैः उपासते, कथं त्वामेव उपासते इति? अत आह—अहं क-

---

आ॥सर्वत्र एक एव नारायणः स्थित इत्येकत्वेन, पृथक्त्वेन सर्वतो वैलक्षण्येन बहुधा हि तस्य रूपमाभाति—'शुक्लमिव लोहितमिवाथो नीलमथोऽर्जुनम्' इति सनत्सुजाते । 'दैवमेवापरे' इत्युक्तप्रकारेण बहवो वा बहुधा ॥ १५ ॥

प्रतिज्ञातं विज्ञानमाह—अहं क्रतुरित्यादिना। क्रतवोऽग्निष्टोमादयः । यज्ञो देवता-

---

ज॥'एकत्वेनाद्वैतभावनया'इति व्याख्यानमसत् ,मिथ्याभावनात्वादिति भावेनाह—**सर्वत्रेति**।सर्वत्र स्थितो नारायण एक एवेति योजना।पृथक्त्वेनादित्यचन्द्रादिरूपेणेत्यसदिति भावेनाह—**पृथक्त्वेनेति**। अपरस्तु पृथक्त्वेनेत्येतत्सम्यग्व्याख्याय बहुधेत्येतदादित्यादिरूपेणेति व्याख्यातवान् ;अत आह—**बहुधेति** । कथमित्यत आगमेनैव दर्शयति—**शुक्लमिवेति** । इवशब्दोऽप्यर्थः । प्रकारान्तरेण व्याख्याति —**दैवमेवेति** ॥ १५ ॥

'विश्वतोमुखमित्युक्तं सर्वात्मकत्वं प्रपञ्चयत्युत्तरेण'इत्यन्यथा व्याख्याननिरासार्थमाह-**प्रतिज्ञात**मिति।

रा॥दा स्वधा;औषधं—हविश्चाहमेव,अहमेव च मन्त्रः;अहमेवचाज्यम्,प्रदर्शनार्थमिदम्; सोमादिकंच हविरहमेवेत्यर्थः; अहमाहवनीयादिकोऽग्निः; होमश्चाहमेव ॥ १६ ॥

**पिताऽहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ॥** १७

अस्य-स्थावरजङ्गमात्मकस्य जगतः, तत्रतत्र पितृत्वेन, मातृत्वेन, धातृत्वेन, पितामहत्वेन च वर्तमानोऽहमेव । अत्र धातृशब्दो मातापितृव्यतिरिक्ते उत्पत्तिप्रयोजके चेतनविशेषे वर्तते । यत्किञ्चिद्वेदवेद्यं पवित्रं-पावनं, तदहमेव । वेदकश्च वेदबीजभूतः प्रणवोऽहमेव । ऋक्सामयजुरात्मको वेदश्चाहमेव ॥ १७ ॥

---

ता॥क्तत्वादोषधिविकारहविर्विषयोऽयमौषधशब्द इत्याह—**औषधं हविश्चाहमेवेति**। एतेन स्वधौषधशब्दयोरन्नभेषजादिपरत्वव्याख्या प्रत्युक्ता । 'विशेषविधिश्शेषनिषेधार्थः' इति शङ्कां परिहरति—**प्रदर्शनार्थमिति** । एवमुत्तरेष्वपि पितामहादिकथनं प्रपितामहादिप्रदर्शनार्थं ग्राह्यम् । अत्राग्निशब्दस्य प्रकरणविशेषाद्भूततृतीयादिमात्रविषयत्वं न युज्यत इत्यभिप्रायेणाह—**अहमाहवनीयादिकोऽग्निरिति** । हविषां प्रागुक्तत्वादत्र हुतशब्दो भावार्थ इत्याह—**होमश्चेति** ॥ १६ ॥

'पिताहमस्य' इत्यादौ न स्वस्वरूपेण पितृत्वादिकमिहोच्यते, अपि तु पितृत्वादिरूपेण प्रतिपन्नानां स्वान्तर्यामिकत्वम् । तथा सति हि प्रकृतसङ्गतिरित्यभिप्रायेणाह—**अस्येति** । स्थावरेष्वपि तानितानि कारणानीश्वरशरीराणीति तत्रापि तस्य पितृत्वादिव्यवहारः । धातृशब्दो हि स्रष्टृचेतनविशेषपरतया प्रसिद्धः; ततश्चात्र पौनरुक्त्यमित्याशङ्क्याह —**अत्रेति** । गोबलीवर्दन्यायादिति भावः । एकस्यैव सर्वपितृत्वाद्यभावात् प्रतिनियतप्रदर्शनाय—**तत्रतत्रेत्युक्तम्** । **अत्रेति**—पित्रा समभिव्याहृतत्वादित्यर्थः । रुद्रेन्द्रादिसहपाठे हि चतुर्मुखपरतेति भावः । धात्वर्थभूतधारणादिद्वारोत्पत्तिप्रयोजकत्वम् । वेद्यत्वमात्रस्य सर्वसाधारण्यात् वेद्यपवित्रशब्दयोर्विशेषणविशेष्यभावेन अन्वयस्सम्भवन्प्रतीयमानो बाधकाभावान्न त्याज्य इत्यभिप्रायेणाह—**यत्किञ्चिदिति** । वेदनस्यानन्तरमभिधीयमानत्वात्पवित्रत्वसामर्थ्याच्च—**वेदवेद्यमित्युक्तम्** । नपुंसकनिर्देशाद्विशेषकाभावाच्च अनुक्तसमस्तवेदवेद्यसङ्ग्रहविषयोऽयमिति ज्ञापनाय—**यत्किञ्चिच्छब्दः** । सङ्कोचकसंज्ञापरत्वव्युदासाय—**पावनमित्युक्तम्** । सम्प्रति सम्बन्धिनिर्देशमध्यपाताद्वेद्यप्रतिसम्बन्धिनिर्देशरूपत्वज्ञापनाय—**वेदकश्चेत्युक्तम्** । ऋक्सामयजुषां पृथगभिधानेऽपि तदनुप्रविष्टस्य पृथगुक्तिः किमभिप्रायेत्यत्राह—**वेदबीजभूत इति** ॥ १७ ॥

---

शं॥तुः, श्रौतकर्मभेदः अहमेव। अहं यज्ञः स्मार्तः। स्वधा अन्नम् अहम्, पितृभ्यो यत् दीयते। अहम् औषधं. सर्वप्राणिभिः यत् अद्यते तत् औषधशब्दशब्दितं व्रीहियवादिसाधारणम् । अथवा—'स्वधा' इति साधारणम् अन्नम्, औषधम्' इति व्याध्युपशमनार्थं भेषजम् । मन्त्रः अहं, येन पितृभ्यो देवताभ्यश्च हविः दीयते । अहम् एव आज्यं हविश्च । अहम् अग्निः, यस्मिन् हूयते हविः सः अग्निः अहम् । अहं हुतं हवनकर्म च ॥

किञ्च—पिता जनयिता अहम् अस्य जगतः माता जनयित्री धाता कर्मफलस्य प्रा-

---

आ॥मुद्दिश्य द्रव्यपरित्यागः।'उद्दिश्य देवान्द्रव्याणां त्यागो यज्ञ इतीरितः'इत्यभिधानात्॥

---

जा॥अन्यथा प्रतिज्ञातानुक्तिप्रसङ्ग इति भावः। व्याख्यानं तु 'रसोऽहम्'इत्यादेरिव द्रष्टव्यम्।**क्रतवइति** क्रतुयज्ञशब्दयोरर्थभेदमाह । सामान्यविशेषभावेन भेद इत्यर्थः ॥ १६ ॥ १७ ॥

**गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ।**
**प्रभवप्रलयस्थानं निधानं बीजमव्ययम् ॥** १८

रा ॥ गम्यत इति गतिः- तत्रतत्र प्राप्यस्थानमित्यर्थः ; भर्ता - धारयिता, प्रभुः-शासिता, साक्षी-साक्षाद्द्रष्टा, निवासः-वासस्थानं वेश्मादि, शरणम् - इष्टस्य प्रापकतयाऽनिष्टस्य निवारणतया च समाश्रयणीयश्चेतनश्शरणं, स चाहमेव ; सुहृत् - हितैषी, प्रभवप्रलयस्थानं - यस्यकस्यचिदुत्पत्तिप्रलययोर्यत् स्थानं, तदहमेव, निधानं निधीयत

ता॥गतिशब्दस्याग्रयप्रायन्यायेन द्रव्यपरत्वौचित्यान्नात्र भावार्थपरत्वमित्यभिप्रायेण स्थानपरत्वमाह—**गम्यत इती**ति । सर्वजनसाधारणेषु अर्थेषु निर्दिश्यमानेषु तन्मध्ये स्त्रीविशेषमात्रप्रतिसम्बन्धिपदार्थो न वक्तुमुचितः, धारणार्थत्वं च बिभर्तिधातोः प्रसिद्धमित्यभिप्रायेणाह—**भर्ता धारयितेति** । प्रभुशब्दस्यात्र प्रभूततामात्रपरत्वे 'जगतः' इत्यनेनान्वयो न स्यादित्यभिप्रायेणाह—**शासितेति** । **साक्षाद्द्रष्टे**ति—'साक्षाद्द्रष्टरि संज्ञायाम्'[1]इति हि साक्षिशब्दोऽनुशिष्यते।**वासस्थान**मिति-अत्र भावादिपरत्वानौचित्यादधिकरणार्थोऽयं घञिति भावः । गतिशब्देन पौनरुक्त्यनिरासायोक्तं—**वेश्मादी**ति । गतिशब्दस्तु स्वर्गपृथिव्यादिगन्तव्यदेशपर उक्तः, तत्तद्देशानुभाव्यभोग्यपरो वा । शरणशब्दस्यात्र निवासशब्दनिर्दिष्टगृहाद्यचेतनपरत्वव्युदासायाह—**इष्टस्ये**ति । इष्टप्राप्त्यनिष्टनिवारणयोर्यथेच्छं प्रत्येकसमुदायाभ्यामन्वयः । 'शरणं गृहरक्षित्रोः'[2] इति पाठादत्र रक्षितृपरश्शरणशब्दः । **हितैषी**ति—शोभनहृदययुक्तो हि सुहृत्, शोभनत्वं च हृदयस्य हितगोचरत्वमिति भावः । **यस्यकस्यचिदि**ति—न केवलं ब्रह्मादेरव्यक्तादेर्वा यदुत्पत्तिप्रलयस्थानमित्यभिप्रायः । 'प्रभवः' इति व्यस्तं परोक्तं पाठान्तरमप्रसिद्धेरनार्जवाच्चानादृतम्। 'प्रभवप्रलयस्थानम्'इति प्रसक्तत्वात् तत्र यत्प्रभवति,यच्च प्रलीयते, तदत्र निधानशब्देन विवक्षितमित्यभिप्रायेणाह—**निधीयते इति निधान**मिति । कर्मार्थोऽयं ल्युट् प्रत्ययः ।

प्र पा॥१. अष्टाध्याय्यां. ५ २-९१ ॥ २. नामलिङ्गानुशासने. ३. काण्डे. नानार्थवर्गे २०९-श्लो ॥

शं॥णिभ्यो विधाता,पितामहः पितुः पिता,वेद्यं वेदितव्यं,पवित्रं पावनम् ओंकारः,ऋक्साम यजुः एव च ॥ १७ ॥

**किञ्च—गतिः कर्मफलम्। भर्ता पोष्टा। प्रभुः स्वामी। साक्षी प्राणिनां कृताकृतस्य। निवासः यस्मिन् प्राणिनो निवसन्ति। शरणम् आर्तानां प्रपन्नानाम् आर्तिहरः । सुहृत् प्रत्युपकारानपेक्षः सन् उपकारी। प्रभवः उत्पत्तिः जगतः। प्रलयः प्रलीयते अस्मिन् इति। तथा स्थानं तिष्ठति अस्मिन् इति । निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनाम् । बीजं**

**आ॥गम्यते मुमुक्षुभिरिति गतिः । तथा हि सामवेदे वासिष्ठशाखायाम्'अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति तद्धि गम्यते पापविमुक्तैः' इति । साक्षादीक्षत इति साक्षी । तथाहि बाष्कलशाखायां—'स साक्षादिदमद्राक्षीद्यदद्राक्षीत्तत्साक्षिणः साक्षि-**

ज॥'गतिः कर्मफलम् इति व्याख्यानमपाकर्तुमाह—**गम्यते** इति। शरणमित्यतो भेदार्थमुक्तं-**मुमुक्षुभिरिति**।अत एव गम्यत इत्यस्यावगम्यत इत्यर्थः।कुत एतदित्यत आह-**तथाही**ति।किमुच्यत इत्यपि प्रश्नोऽध्याहार्यः।साक्षीत्यौदासीन्यं प्रतीयते;अत आह - **साक्षादि**ति।कुत एतदित्यत आह **तथाही**ति। यदद्राक्षीत्साक्षात्तत्साक्षिणः परमेश्वरस्य साक्षित्वं साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तं —'सा-

रा॥ इति निधानम्, उत्पाद्यमुपसंहार्यं चाहमेवेत्यर्थः ; अव्ययं बीजं- तत्रतत्र व्ययरहितं यत्कारणं, तदहमेव ॥ १८ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९

अग्न्यादित्यादिरूपेणाहमेव तपामि, ग्रीष्मादावहमेव वर्षं निगृह्णामि ; तथा वर्षासु

ता॥ एतेन निधानशब्दस्य प्रलयस्थानविशेषणत्वेन अव्याकृतपरत्वयोजना निरस्ता । 'प्रभवप्रलयस्थानम्' इत्यस्योपादानविवक्षायां बीजशब्दः कारणमात्रपरः ; तस्योपादानपरत्वविवक्षायां बीजाधारक्षित्यादिदेशपरः पूर्वं इत्यभिप्रायेणाह—तत्रतत्रेति ॥ १८ ॥

एवं 'प्राधान्यतः' इति वक्ष्यमाणप्रकारेण लोके तत्तच्छब्दवाच्यतया प्रसिद्धानां प्रकृष्टपदार्थानां सत्तायास्स्वाधीनत्वप्रदर्शनम् ; अथ प्रवृत्तितादधीन्यमनेनोच्यते—'तपामि' इति । स्वरूपतस्तापहेतुत्वाभावाद्विशिष्टे तद्दर्शयति—अग्न्यादित्यादीति । आदिशब्देन अग्न्यादितसद्द्रव्यविवक्षा । एककर्तृकयोर्विरुद्धयोः कालादिभेदेन व्यवस्थेत्यभिप्रायेणाह—ग्रीष्मादाविति वर्षास्विति च । अत्र पर्जन्यादिरूपेणेति भाव्यम् । एव रश्मिविशेषोऽपि ग्राह्यः । [१]'अहं क्रतुः' इत्युपक्रम्य एतावताधियज्ञाधिप्रजाधिवेदाध्यात्माधिदैवतविवक्षेति केचित् । अथ साधकबाधकरूपेण सगृह्योच्यते—'अमृतं चैव मृत्युश्च' इति। मृतिकारणाभिधायिमृत्युशब्दसहप्रयोगान्मृतिप्रतिबन्धकमात्रविषयोऽयममृतशब्दः, सुधापरत्वे तु विषेण सह पठितव्यम् , अमृतसहपाठाच्च मृत्युशब्दस्य वैवस्वतादिपरत्वमयुक्तमित्यभिप्रा-

प्र-पा॥ १. गी. १०-१९ ॥ २ गी ९-१६ ॥

शं॥प्ररोहकारणं प्ररोहधर्मिणाम्, अव्ययं, यावत्संसारभावित्वात् अव्ययम्। न हि अबीजं किञ्चित् प्ररोहति; नित्यं च प्ररोहदर्शनात् बीजसन्ततिः न व्येति इति गम्यते ॥ १८ ॥

किञ्च—तपामि अहम् आदित्यो भूत्वा; अहं वर्षं कैश्चित् रश्मिभिः उत्सृजामि; उत्सृज्य पुनः निगृह्णामि कैश्चित् रश्मिभिः अष्टभिः मासैः; पुनः उत्सृजामि प्रावृषि;अमृतं

आ॥त्वम्' इति । शरणमाश्रयः संसारभीतस्य। 'परं परायणम्' इत्याद्युक्तम्। 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति च । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा हि ऋग्वेदखिलेषु—'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः' इति ॥ १८॥

सत् कार्यम्, असत् कारणम् । 'सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात्कारणं चापि शब्दितम्'इत्यभिधानम्।'असच्च सच्चैव च यद्विश्वं सदसतः

ज॥क्षाद्द्रष्टरि संज्ञायाम्'इति।निवासशब्दागतार्थतया शरणशब्दार्थमाह—शरणमिति । संसारभीतस्येति मुक्तोपलक्षणम् । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह – परमिति । परायणं मुक्तानामाश्रयः । तथापि निधानमिति पुनरुक्तिरित्यत आह —संहारेति । सर्वभूतानि प्रकृतिं यान्तीत्युक्तत्वात् कथं भगवति निधीयन्त इत्यत उक्तं—प्रकृत्येति । प्रथमं प्रकृतिं यान्ति, पश्चात्तत्र निधीयन्त इत्यर्थः।तत्कुत इत्यत आह—तथाहीति । विश्वकर्मणीश्वरे शुभ्रचक्षुः शुद्धदृष्टिरहम् ॥ १८ ॥

असतो नियाम्यत्वानुपपत्तेः'सदसच्चाहम्' इत्ययुक्तमित्यत आह—सदिति। कार्यं सदित्युच्यते। अभिव्यक्तिरूपत्वादित्यनेन सदेर्गत्यर्थस्य क्वापि कर्मणि रूपमेतदित्युच्यते । कारणमप्यव्यक्तरूपत्वादेव असच्छब्दितम । कार्यकारणयोः सदसच्छब्दप्रयोगं च दर्शयति—असच्चेति। तस्मात्सदसतोर्नियम्या-

रा॥चाहमेवोत्सृजामि। अमृतं चैव मृत्युश्च— येन जीवति लोको येन च म्रियते, तदुभयमहमेव, किमत्र बहुनोक्तेन; सदसच्चाहमेव—सद्यद्वर्तते, असद्यदतीतमनागतं च, सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्तत्प्रकारोऽहमेवावस्थित इत्यर्थः। एवं बहुधा पृथक्त्वेन विभक्तनामरूपावस्थितकृत्स्नजगच्छरीरतया तत्प्रकारोऽहमेवावस्थित इत्येकत्वज्ञानेनानुसन्दधानाश्च मामुपासते ॥ १९ ॥

एवं महात्मनां ज्ञानिनां भगवदनुभवैकभोगानां वृत्तमुक्त्वा तेषामेव विशेषं दर्शयितुमज्ञानां कामकामानां वृत्तमाह—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्॥ २०
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥ २१

---

ता॥येगाह—येनेति।त्रैकाल्यवर्तिसर्वसंग्रहेण उपसंहारपरतां दर्शयति—किमत्रेति। अत्र सच्छब्दवदसच्छब्दोऽपि भावान्तराभाववादाद्वस्तुविशेषपरः, अन्यथा अहमिति सामानाधिकरण्योयोगादित्यभिप्रायेणाह—यद्वर्तते यदतीतमनागतञ्चेति। असच्छब्दोऽत्र वर्तमानान्यविषयः।ननु प्रकरणान्तरेष्विव चेतनाचेतनादिविषयत्वमनयोः किं नोच्यत इत्यत्राह—सर्वावस्थेति। सर्वस्य भगवदात्मकत्वं हि प्रकृतम्; त्रैकालिकसमस्तसंग्रहौचित्याय वर्तमानत्वादिविवक्षायामपि चिदचितोर्न त्यागः; तयोरेव तत्तदवस्थाविशेषविशिष्टस्वरूपविषयत्वात्। अथवा सर्वेत्यादिकम्, 'अहं क्रतुः' इत्याद्युक्तकृत्स्नवाक्यार्थकथनमनुध्येयम्। सर्वतादधीन्यवचनं प्रकृतेनोपासनेन सङ्गमयति—एवं बहुधेत्यादिना। विशिष्टैकत्वमिह विवक्षितम्; न पुनः प्रलयदशापन्नमविभक्तत्वलक्षणम्। प्रस्तुतज्ञानयज्ञत्वस्मारणाय—ज्ञानेनानुसन्दधाना इत्युक्तम् ॥ १९ ॥

'सदसच्चाहमर्जुन' इत्यस्यानन्तरं 'त्रैविद्याः' इत्यादिकमसङ्गतमिति शङ्कायां पूर्वोत्तरानुवृत्तप्रघट्टकार्थं प्रदर्शयन् सङ्गतिमाह—एवं महात्मनामिति।महात्मनां ज्ञानिनां भगवदनुभवैकभोगानामिति त्रिभिः 'महात्मानस्तु' 'ज्ञात्वा' 'अनन्यमनसः' इति प्रागुक्तस्मारणम्। 'अवजानन्ति' इत्याद्यपेक्षया 'महात्मानस्तु'इत्यादेः विशेषकथनरूपत्वेऽपि भजनकीर्तनादेर्भक्तस्वरूपनिरूपकतया-वृत्तमुक्त्वेत्युक्तम्। एवं निरूपितस्वरूपाणां तेषां निरतिशयफलसौकर्यादिकमभिधास्यमानं विशेषो भवितुमर्हतीति—तेषामेव विशेषं दर्शयितुमित्युक्तम्। अज्ञानामित्यनेन'परं भावमजानन्तः' इति प्रागुक्ता

प्र-पा॥ १. गी. ९-१६॥   २ गी ९-१३॥   ३. गी ९-११॥

---

शं॥चैव देवानां,मृत्युश्च मर्त्यानाम्।सत् यस्य यत् सम्बन्धितया विद्यमानं तत्,तद्विपरीतम् असच्च एव अहम् अर्जुन। न पुनः अत्यन्तमेव असत् भगवान्, कार्यकारणे वा सदसती॥

ये पूर्वोक्तैः निवृत्तिप्रकारैः एकत्वपृथक्त्वादिविज्ञानैः यज्ञैः मां पूजयन्तः उपासते

---

आ॥परम्' इति च भारते ॥ १९॥

तथापि

---

ज॥ब्रह्म परम् ॥ १९ ॥

'सदसच्चाहमर्जुन' इति विज्ञानस्योपसंहृतत्वादुत्तरस्यासङ्गतिमाशङ्क्याह—तथापीति । 'अहं

रा॥ऋग्यजुस्सामरूपास्तिस्रो विद्यास्त्रिविद्यम्; केवलं त्रिविद्यनिष्ठास्त्रैविद्याः, न तु त्रय्यन्तनिष्ठाः;त्रय्यन्तनिष्ठा हि महात्मानः पूर्वोक्तप्रकारेण निखिलवेदवेद्यं मामेव ज्ञात्वाऽतिमात्रमद्भक्तिकारितकीर्तनादिभिर्ज्ञानयज्ञेन च मदेकप्राप्या मामेवोपासते। त्रैविद्यास्तु वेदप्रतिपाद्यकेवलेन्द्रादियागशिष्टसोमान् पिबन्तः पूतपापाः-स्वर्गादिप्राप्तिविरोधिपापात्पूतास्तैः केवलेन्द्रादिदैवत्यतयाऽनुसंहितैर्यज्ञैर्वस्तुतस्तद्रूपं मामिष्ट्वा तथावस्थितं मा-

ता॥एवात्र फल्गुफलयागादिभिः प्रपञ्चयन्तइति सूचितम्।'त्रैविद्याः'इत्यत्र सङ्ख्याविशेषप्रसिद्ध्या'त्रयीधर्मम् इति वक्ष्यमाणानुसन्धानाच्च विद्यां विशिंषन् समासार्थं चाह—ऋग्यजुरिति। तिस्रो विद्यास्समाहृताः इति द्रष्टव्यम्।द्विगुसमासत्वात् त्रिविद्यमित्येकवद्भावनपुंसकत्वे।'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्यस्य 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इत्यपवादः। 'तदधीते तद्वेद' इत्यण्प्रत्ययविवक्षयाह—त्रिविद्यनिष्ठा इति। सर्ववेदविषयत्वे विरोधात्कर्ममात्रविषयत्वज्ञापनाय—केवलशब्दः। तदेव विशदयति—नतु त्रय्यन्तनिष्ठा इति।विषयव्यवस्थापनाय पूर्वोक्तानां महात्मनामपि वेदैकदेशभूतोपनिषन्निष्ठत्वं सर्वस्यापि वेदस्य तत्तद्द्वारा भगवत्परत्वस्वीकारं च वदन्, यथावस्थितज्ञानाधीनपुरुषार्थविशेषाभिलाषतदुपायनिष्ठतामात्रेण विशेषात्सिद्धान्तान्तरनिष्ठत्वभ्रमं च व्युदस्यन्, केवलत्रयीनिष्ठवृत्तव्याख्यानावसरे तद्व्यवच्छेद्यमखिलं दर्शयति—त्रय्यन्तनिष्ठा हीति। एतेन प्रकरणान्तरेषु 'चतुर्थी विद्या' इति मोक्षसाधनभूता त्रय्यन्तविद्यैवोच्यते इति दर्शितम्। यथाह जनकाय याज्ञवल्क्यः—'ऐषा तेन्वीक्षिकी विद्या चतुर्थी साम्परायिकी' इति 'चतुर्थी राजशार्दूल विद्यैषा साम्परायिकी'इति च। वेदप्रतिपाद्येति—कर्मभागमात्रप्रतिपाद्येत्यर्थः। महात्मनामपि विद्याङ्गकर्मगतसोमपानसद्भावात्तद्व्यवच्छेदायोक्तं— केवलेन्द्रादियागशिष्टेति। अयज्ञशिष्टसोमपानस्याधर्मत्वाद्यागशिष्टत्वोक्तिः। 'स्वर्गतिं प्रार्थयन्ते' इत्यनन्तरमभिधानात्तत्प्रतिबन्धकपापनिरासकत्वमात्रमेवात्र सोमपानस्येत्याभिप्रायेण—स्वर्गादिप्राप्तिविरोधिपापात्पूता इत्युक्तम्। स्वर्गशब्दोपलक्षणार्थत्वज्ञापनायादिशब्दः। पापस्य पूतत्वं नाम निरस्तत्वम्; तदेव हि पुरुषस्य पूतत्वमित्यभिप्रायेण—पापात्पूता इति निर्देशः। पापान्मुक्ता इत्यर्थः। स्वर्गाद्यर्थिनां तत्त्वतो भगवज्ज्ञानाभावस्य साक्षाद्भगवद्याजिनां भगवत्प्राप्तेः केवलेन्द्रादियागानामपि वस्तुतः परमपुरुषाराधनरूपत्वस्य तज्ज्ञानाभावाच्च तेषां वैकल्यस्य'ये त्वन्यदेवताभक्ताः'इत्यादिश्लोकत्रयेण वक्ष्यमाणत्वात्,'यज्ञैर्मामिष्ट्वा'इत्येतत्परमपुरुषस्य स्वानुसन्धानमात्रमूलं वचः;

प्र-पा॥ १ ॥ २ ॥ ऽन्वीक्षि साम्परायिकी ॥
३. अष्टाध्याय्या. ४-२-५९ ॥
४. भारते-शान्ति-मोक्ष. ३२३-४७. 'एषा ते
५. भा.शा.मो.३२३-अ.चतुर्थी ..सम्परायिकी॥
६. गी ९-२३ ॥

शं॥ज्ञानविदः, ते यथाविज्ञानं मामेव प्राप्नुवन्ति। ये पुनः अज्ञाः कामकामाः त्रैविद्या ऋग्यजुस्सामविदः मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति, तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषाः, यज्ञैः अग्निष्टोमादिभिः इष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिः तां, प्रार्थयन्ते। ते च पुण्यं पुण्यफलम् आसाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानम् अश्नन्ति भुञ्जते दिव्यान् दिवि भवान् अप्राकृतान् देवानां भोगान्॥२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकं विशन्ति आविश-

ज॥क्रतुः' इत्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तं भगवतस्तदसदिति वक्ष्यामीति गूढाभिसंधिना यदि सर्वत्र भोक्ता भगवान्, तर्हि किं भागवतानां त्रैविद्यानां च फलसाम्यमेवेति पृष्टस्येदमुत्तरमित्याशयः।

।।मजानन्तः स्वर्गगतिं प्रार्थयन्ते;ते पुण्यं-दुःखासम्भिन्नं सुरेन्द्रलोकं प्राप्य तत्रतत्र दि-ान् देवभोगानश्नन्ति , ते तं विशालं स्वर्गलोकं भुक्त्वा तदनुभवहेतुभूते पुण्ये क्षीणे नरपि मर्त्यलोकं विशन्ति । एवं त्रय्यन्तसिद्धज्ञानविधुराः काम्यस्वर्गादिकामाः केवलं यीधर्ममनुप्रपन्नाः गतागतं लभन्ते - अल्पास्थिरस्वर्गादीननुभूय पुनःपुनर्निवर्तन्त इ र्थः ॥ २० ॥ २१ ॥

।।नपुनर्यजमानानुसन्धानमूलमिति ज्ञापनायोक्तं-तैरित्यादि अजानन्तइत्यन्तम्।अनुष्ठानस्य फलकाम-पूर्वकत्वेऽपि यज्ञानन्तरमेव हि फलं देहीति देवतां प्रति प्रार्थनम्;अत'इष्ट्वा प्रार्थयन्ते'इति क्रमोपपत्तिः। ण्यक्रियातज्जन्यादृष्टयोर्लोकसामानाधिकरण्यायोगात्सुरेन्द्रलोकस्य फलमात्ररूपस्य पावनत्वेनाश्रुतत्वा-भूतदुःखसम्भिन्नत्वस्य च श्रुतत्वात्पुण्यप्रतिक्षेप्यपापकार्यदुःखनिवृत्तिपरोऽयं पुण्यशब्द इत्यभिप्राये-ोक्तं—दुःखासम्भिन्नमिति । पुण्यसाध्यसुखमयत्वलक्षणाया वा दुःखनिवृत्तिरर्थसिद्धा । पुण्यसा-त्वलक्षणायां त्वर्थतः पुनरुक्तिस्स्यात्।सुरेन्द्रलोकं प्राप्येत्युक्तेऽपि पुन'दिवि'इति निर्देशो विचित्रभो-ाश्रयतत्तदवान्तरप्रदेशविशेषविषयो भवितुमर्हतीति—तत्रतत्रेत्युक्तम्। दिव्यानिति-मोहनत्वाय भौ-भोगवैलक्षण्यकथनम् । दिव्यान्-दिवि भवान् , देवभोगान्-देवाना भोग्यानित्यर्थः । देवभोग्यपशु-रोडाशादिभौमव्यवच्छेदार्थं च दिव्य शब्दः । देवा हि स्वरूपतः कालतश्च परिमितान् स्वभोगान् त्रयाजिभ्यस्संविभजन्ते । अश्नन्ति—भुञ्जते, अनुभवन्तीत्यर्थः । भुक्त्वेति ह्यनूद्यते। 'विशालम्' इ-नेन भौमभोगापेक्षया पृथुत्वसूचनम्।स्वर्गलोकं भुक्त्वेति—स्वर्गलोकसम्भवान् भोगाननुभूयेत्यर्थः। हि स्वर्गानुभवाद्बन्धकपुण्यान्तरक्षयः ; कर्मशेषेण विशिष्टजात्यादिप्राप्तिश्श्रूयत इत्यभिप्रायेणोक्तं—दनुभवहेतुभूत इति । एतेन—'स्वर्गेऽपि पातभीतस्य' इत्यादि दर्शितम् । मर्त्यशब्देन भूलोके-ऽप्यस्थिरत्वं द्योतितम् । एवंशब्दाभिप्रेतेन प्रकारेण त्रयीशब्दस्य तत्र सङ्कोचं,कामकामत्वे हेतुं च द-र्शयति—एवं त्रय्यन्तासिद्धज्ञानविधुरा इति । अनुवादोऽयं स्वरूपतो मोक्षानुगुणस्यापि धर्मस्य कारविशेषात्पुनरावृत्तिहेतुत्वमिति ज्ञापनार्थः । पूर्वः कामशब्दः कर्मणि व्युत्पन्न इत्याह—काम्यस्व-र्गादिकामा इति । मोक्षस्यापि फलतया काम्यमानत्वात्ततोऽत्र सङ्कोचाय स्वर्गादिशब्दः । केवलश-ब्देन त्रय्यन्तासिद्धस्त्वाङ्गिभूतपरमधर्मराहित्योक्तिः । गतं चागतं च गतागतं ; तदेव लभन्ते । नहि ग-मनागमनमात्रं दोष इत्यत्राह—अल्पेति । अनुभवदशायामप्यल्पत्वात् 'यथा पशुरेवं स देवानाम्' इ-ते प्रक्रिययातिशयितब्रह्मादिसुखानुसन्धानेन दुःखत्वम् ; तस्य चास्थिरत्वानुसन्धानाद्दुःखतरत्वम् ; त-प्रध्वंसागमे तु दुःखतमत्वम् ; घटीयन्त्रन्यायेन पुनरावृत्त्यधीनगर्भवासव्याधिनिरयादिसम्भवं तु दुःखं क्तुमपि दुस्सहम्; तच्चासंख्यातप्रवाहमिति भावः ॥ २० ॥ २१ ॥

त्र-पा ॥ १. वि-पु. ६-५-५०॥ | २. छा. ३-४-१० ॥

शं।।न्ति।एवं यथोक्तेन प्रकारेण त्रयीधर्मं केवलं वैदिकं कर्म अनुप्रपन्नाः गतागतं गतं च आगतं च गमनागमनं कामकामाः कामान् कामयन्ते इति कामकामाः लभन्ते गतागत-मेव, न तु स्वातन्त्र्यं क्वचित् लभन्ते इत्यर्थः ॥ २१ ॥

आ।।मद्भजनमेवान्यदेवताभजनाद्वरमिति दर्शयति — त्रैविद्या इत्यादिना ॥ २० ॥ २१ ॥

ज।।तथापि—सर्वत्र भगवतो भोक्तृत्वेऽपि। मद्भजनं भागवतैरनुष्ठितम्। देवतेति पित्राद्युपलक्षणम् । त्रैविद्याद्यनुष्ठितात् वरम् उत्कृष्टफलम् । इत्यादिना श्लोकत्रयेण ॥ २० ॥ २१ ॥

अ॥ **महात्मानस्तु निरतिशयप्रियरूपमच्चिन्तनं कृत्वा मामनवधिकातिशयानन्दं प्राप्य न पुनरावर्तन्त इति तेषां विशेषं दर्शयति—**

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥** २२

रा॥ **अनन्याः-अनन्यप्रयोजनाः, मच्चिन्तनेन विनात्मधारणालाभान्मच्चिन्तनैकप्रयोजनाः मां चिन्तयन्तो ये महात्मानो जनाः पर्युपासते — सर्वकल्याणगुणान्वितं सर्वविभूतियुक्तं मां परित उपासते, अन्यूनमुपासते, तेषां नित्याभियुक्तानां — मयि नित्याभियोगं काङ्क्षमाणानाम् अहं — मत्प्राप्तिलक्षणं योगम् अपुनरावृत्तिरूपं क्षेमं च वहामि ॥ २२ ॥**

**ता॥** उपायस्यापि सुखरूपतया फलस्य च नित्यनिर्दोषनिरतिशयानन्दतया महात्मना विशेषोऽभिधीयत इत्याह—**महात्मानस्त्विति** । अनन्यत्वविशेषणवशाच्चिन्तनस्य निरतिशयसुखरूपत्वसिद्धिः । **मामि**त्यादिना योगक्षेमशब्दविवक्षितमुक्तम् । यद्यपि '[1]ये त्वन्यदेवता' इति वक्ष्यमाणावेक्षणेनान्यदेवताप्रतीतिः; तथापि प्रकृतकाम्यव्यवच्छेदार्थत्वादुपायसहचरं ततोऽन्यत्फल व्यवच्छेत्तुम्—**अनन्यशब्दः** । अत एवैकत्वानुसन्धानपरत्वं चायुक्तमिति दर्शयति—**अनन्यप्रयोजना** इति । तत्र हेतुमाह—**मच्चिन्तनेन विनेति** । '[2]अनन्याश्चिन्तयन्तः' इति समभिव्याहारसामर्थ्याच्चिन्तनादन्यस्य निषेधसिद्धिः। निर्विशेषणस्य जनशब्दस्याकृतिगणतुल्ये जने प्रयोगात्तद्व्यवच्छेदाय प्रकरणसिद्धमुक्त—**ये महात्मानो जना** इति । तेषामेव हि जननसाफल्यमिति भावः । 'पर्युपासते' इत्यत्र प्रयुक्तस्य परीत्यस्योपसर्गस्य नैरर्थक्यायोगात्तदर्थे परित इति विवक्षिते तस्यैव प्रमाणान्तरसिद्धविशेषं दर्शयति—**सर्वकल्याणेति** । प्रतीकोपासनव्यवच्छेदार्थमिदमुक्तमित्यभिप्रायेणाह—**अन्यून**मिति । अखण्डितगुणविभूतिकमित्यर्थः । अत्र 'अहम्' इत्यनेन परमोदारत्वसौशील्यादिगुणविवक्षा । नहि मोक्षकाङ्क्षिणामानुषङ्गिकभोगप्रदानेऽपि मोक्षानुपयुक्तशरीरयात्रादिरूपौ योगक्षेमौ दातव्यावित्यभिप्रायेणाह—**मत्प्राप्तीति**। अलब्धलाभो योगः; लब्धरक्षणं क्षेमः। समाहारार्थत्वादेकवद्भावः । वहामि ददामीत्यर्थः ॥ २२ ॥

**प्र-पा** ॥ १. गी. ९-२३ ॥ | २ गी. ९-२२ ॥

शां॥ **ये पुनः निष्कामाः सम्यग्दर्शिनः—अनन्याः अपृथग्भूताः परं देवं नारायणम् आत्मत्वेन गताः सन्तः चिन्तयन्तः मां ये जनाः संन्यासिनः पर्युपासते, तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं, योगः अप्राप्तस्य प्रापणं, क्षेमः तद्रक्षणं तदुभयं वहामि प्रापयामि अहम्; 'ज्ञानी त्वात्मैव मे मतम्' 'स च मम प्रियः' यस्मात्, तस्मात् ते मम आत्मभूताः प्रियाश्च इति । ननु अन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यं, वहत्येव; किन्तु अयं विशेषः—अन्ये ये भक्ताः ते आत्मार्थं स्वयमपि**

आ॥ **अनन्याः अन्यदचिन्तयित्वा। तथाहि गौतमखिलेषु—'सर्वं परित्यज्य मनोगतं यद्भिन्ना देवं केवलं शुद्धमाद्यम्। ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्ति' इति। 'कामं कालेन महता एकान्तित्वात्समाहितैः । शक्यो द्रष्टुं स भगवान्प्रभासंदृश्यमण्डलः'**

**ज॥** अद्वैतज्ञानिनोऽनन्या इति प्रतीतिनिरासार्थमाह— **अनन्या** इति । अविद्यमानमन्यद्येषां ते अनन्याः। तच्च 'अनन्याश्चिन्तयन्तो माम्' इति प्रसङ्गाच्चिन्तनीयामिति लब्धे **अन्यदचिन्तयित्वेति** सिध्यति। प्रतीत एवार्थः किं न स्यादित्यत आह—**तथाहीति** । देवमेव विशन्तीत्यनेन 'योगक्षेमं वहाम्यहम्'

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३

रा॥ये त्विन्द्रादिदेवताभक्ताः केवलत्रयीनिष्ठाः श्रद्धयान्विताः इन्द्रादीन् यजन्ते; तेऽपि पूर्वोक्तेन न्यायेन सर्वस्य मच्छरीरतया मदात्मकत्वेनेन्द्रादिशब्दानां च मद्वाचित्वाद्वस्तुतो मामेव यजन्ते; अपित्वविधिपूर्वकं यजन्ते; इन्द्रादीनां देवतानां कर्मस्वाराध्यतया अन्वयं यथा वेदान्तवाक्यानि 'चतुर्होतारो यत्र संपदं गच्छन्ति देवैः' इत्यादीनि विदधति, न तत्पूर्वकं यजन्ते। वेदान्तवाक्यजातं हि परमपुरुषशरीरतयावस्थितानामिन्द्रादीनामाराध्यत्वं विदधदात्मभूतस्य परमपुरुषस्यैव साक्षादाराध्यत्वं विदधाति । चतुर्होतारः-

ता॥सर्वासामपि देवतानां भगवच्छरीरत्वात् 'त्रैविद्या माम्' इत्युक्तप्रकारेण वस्तुतस्त्वत्समाराधनमिति जानन् भवान् किं न केवलकर्मिणामपि मोक्षरूपयोगक्षेमं प्रयच्छतीत्यत्रोत्तरमुच्यते 'ये तु' इत्यादि श्लोकद्वयेन। तुशब्दश्शङ्कानिवृत्त्यर्थः । 'अन्यदेवताभक्ताः' इत्येतत्समभिव्याहारफलितम्— **इन्द्रादीनिति।** **पूर्वोक्तेन न्यायेनेति** —'मयि सर्वम्' इत्यादावस्मिन्नप्यध्याये'मया ततमिदं सर्वम्' इत्यादौ चेति भावः । मामेव यजन्तीत्यन्त शङ्कितानुवादरूपम् , शेषं तु विधेयरूपमित्यभिप्रायेणाह—**अपि त्विति ।** विधिस्स्वज्ञानद्वारा यस्य पूर्वं कारणं, तद्विधिपूर्वकम् ; तदन्यदविधिपूर्वकम्। कथमविधिपूर्वकत्वं विहितानामित्यत्राह—**इन्द्रादीनामिति ।** **तत्पूर्वकमिति**-तथाविधविध्यनुसन्धानपूर्वकमित्यर्थः । यथा विदधतीत्युक्तं विवृणोति—**वेदान्तेति।** इन्द्रादीनामाराध्यत्वमात्रं कर्मभागे प्रतिपादितम्, तेषामेव यथावस्थितं स्वरूपं वेदान्तेष्विति न विरोधः।**साक्षादिति**-निरुपाधिकमित्यर्थः, प्रधानतयेति वा । हविरुद्देश्यपरमपुरुषविशेषणतयेन्द्रादीनामुद्देश्यानुप्रवेशः; यथा प्रतर्दनविद्यादिषूपास्यानुप्रवेश इति भावः । 'चतुर्होतारः' इति उपात्तवाक्यस्य कथं प्रस्तुतार्थता; तत्राह—**चतुर्होतारइति ।** उपलक्षणता-

प्र-पा॥ १. गी. ७-७ ॥ | २ गी. ९ ४ ॥

शां॥योगक्षेमम् ईहन्ते,अनन्यदर्शिनस्तु न आत्मार्थं योगक्षेमम् ईहन्ते,नहि ते जीविते मरणे वा आत्मनः गृधिं कुर्वन्ति केवलमेव भगवच्छरणाः ते;अतः भगवानेव तेषां योगक्षेमं वहति—इति ॥ २२ ॥

ननु, अन्या अपि देवताः त्वमेव चेत्,तद्भक्ताश्च त्वामेव भजन्ते। सत्यम् एवम्— येऽपि अन्यदेवताभक्ताः अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तः यजन्ते पूजयन्ति श्रद्धया आस्तिक्यबुद्ध्या अन्विताः अनुगताः, तेऽपि मामेव कौन्तेय यजन्ति अवि-

आ॥इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ॥ २२ ॥
तर्हि 'अहं क्रतुः'

ज॥इत्युक्तार्थं भवति । अत्रैव काममित्यागमान्तरम् । प्रभया संदृश्य-मण्डल स्वरूपं यस्यासौ तथोक्तः। दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव । नित्याभियुक्तानामित्यस्यापवादविषयाणामित्यन्यथाप्रतीतिनिरासार्थमाह—**नित्यमिति ।** **सर्वतः** सर्वस्मिन्देशे, शरीरेन्द्रियमनोभिर्वा। **युक्तानां** भगवति सेवोद्युक्तानाम् ॥ २२ ॥

उक्तप्रश्नस्योत्तरं जातम्, तत्किमुत्तरेणेत्यतः प्रश्नाभिसंध्युद्घाटनस्येदमुत्तरमित्याह—**तर्हीति ।** भगवद्योगनिमित्तं हि फलम्, स चेत्सर्वत्र समस्तदा सर्वेषां फलसाम्येन भाव्यम्, तदभावश्चेत्—

रा॥अग्निहोत्रदर्शपूर्णमासादीनि कर्माणि,यत्र-परमात्मन्यात्मतयावस्थिते सत्येव तच्छरीरभूतैरिन्द्रादिदेवैः, संपदं गच्छन्ति--इन्द्रादिदेवानामाराधनान्येतानि कर्माणीतीमां संपदं गच्छन्तीत्यर्थः ॥ २३ ॥

अ॥अतस्त्रैविद्या इन्द्रादिशरीरस्य परमपुरुषस्याराधनान्येतानि कर्माणि, आराध्यश्च स एवेति न जानन्ति,ते च परिमितफलभागिनश्च्यवनस्वभावाश्च भवन्ति;तदाह—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४

प्रभुरेवच—तत्रतत्र फलप्रदाता चाहमेवेत्यर्थः ॥ २४ ॥

अहो महदिदं वैचित्र्यं, यदेकस्मिन्नेव कर्मणि वर्तमानास्सङ्कल्पमात्रभेदेन केचिद-

ता॥मभिप्रेत्योक्तम्—अग्निहोत्रदर्शपूर्णमासादीनीति।'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इत्यादिप्रसिद्धः यत्रशब्दार्थ उच्यते—परमात्मनीत्यादिना । 'यस्यादित्यश्शरीरम्' इत्यादिवाक्यानुसन्धानेन—तच्छरीरभूतेत्यादिकमुक्तम्। कर्मणां देवैस्साध्या संपत् तदाराधनत्वरूपोऽतिशय एव; स चान्ततः फलसाधनत्वप्रकारे पर्यवसित इत्यभिप्रायेणाह— इन्द्रादिदेवतानामित्यादि ॥ २३ ॥

अविधिपूर्वकत्वविवरणरूपतां, तथाविधस्यात्यन्तनैष्फल्यशङ्कापरिहाररूपतां च 'अहं हि' इति श्लोकस्य दर्शयति – अत इति । सर्वशब्देनेन्द्राद्युद्देशेन क्रियमाणानामित्यभिप्रेतम् । आराध्यश्चेति भोक्तृशब्दाभिप्रेतोक्तिः । 'च्यवन्ति'इत्यनेन कुतश्चिदिति सिद्धम् ,तच्च तत्तत्कर्मसाध्यमस्थिरं फलमेवेति 'यान्ति' इत्यनन्तरश्लोकवशाद्वाक्यान्तराच्च लब्धम्; तदाह—परिमितेत्यादिना । फलस्य परिमितत्वं देशतः कालतस्स्वरूपतश्च । अतस्तद्भागिनां च्यवनस्वभावता । प्रभुशब्दस्यात्र 'गतिर्भर्ता प्रभुः' इत्यादिष्विव शास्तृत्वादिविवक्षाव्युदासाय योग्यमर्थमाह—तत्रतत्रेति।सूत्रं च 'फलमत उपपत्तेः' इति। यथेन्द्राद्याराधनतया प्रयोगेऽपि तत्रतत्र फलप्रदोऽहम् , न तथा मदाराधनत्वेऽन्यः फलप्रद इत्येवकारार्थः ॥ २४ ॥

एकस्यैव कर्मणः कथं भोगमोक्षविरुद्धफलसाधनत्वमित्यत्र सङ्कल्पाख्यसहकारिवैचित्र्यात्तदुपपत्तिरिति प्राप्यवैषम्यं 'यान्ति' इति श्लोकेन प्रदर्श्यत इत्यभिप्रायेणाह-अहोमहदिति।सङ्कल्पभेदाद्विचि-

प्र-पा॥ १ यजु आर ३-१०-२॥ २. बृ. ५-७-९ ॥ ३. शारी. ३-२-३७ ॥

शा॥धिपूर्वकम्; अविधिः अज्ञानं, तत्पूर्वकं यजन्ते इत्यर्थः ॥ २३ ॥

कस्मात् ते अविधिपूर्वकं यजन्ते इति? उच्यते—यस्मात् अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्वेन भोक्ता च प्रभुः एव च । मत्स्वामिको हि यज्ञः, 'अधियज्ञोऽहमेवात्र' इति हि उक्तम्। तथा न तु माम् अभिजानन्ति तत्त्वेन यथावत् । अतश्च अविधिपूर्वकम् इष्ट्वा यागफलात् च्यवन्ति प्रच्यवन्ते ॥ २४ ॥

आ॥इत्यादि असत्यमित्यत आह—येऽपीति॥२३॥

कारणमाहाविधिपूर्वकत्वे—अहं हीति ॥ २४ ॥

जा॥तर्हि 'अहं क्रतुः' इत्युक्तं सर्वत्र भगवतो भोक्तृत्वमप्यसत्यमित्यर्थः ॥ २३ ॥

'अहं क्रतुः' इत्यादिनोक्तत्वात् 'अहं हि' इति पुनरुक्तिरित्यत आह—कारणमिति । त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद्भोक्ता कथं तर्ह्यविधिपूर्वकत्वमिति शङ्कायामिति शेषः ॥ २४ ॥

रा॥त्यल्पफलभागिनश्च्यवनस्वभावाश्च भवन्ति; केचनानवधिकातिशयानन्दपरमपुरुषप्राप्तिरूपफलभागिनोऽपुनरावर्तिनश्च भवन्तीत्याह—

यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोऽपि माम् ॥ २५

व्रतशब्दस्सङ्कल्पवाची; देवव्रताः-दर्शपूर्णमासादिभिः कर्मभिः 'इन्द्रादीन्यजामहे' इति इन्द्रादियजनसङ्कल्पाः ये,त इन्द्रादीन् देवान्यान्ति; ये च पितृयज्ञादिभिः 'पितॄन् यजामहे'इति पितृयजनसङ्कल्पाः,ते पितॄन् यान्ति; ये च 'यक्षरक्षःपिशाचादीनि भूतानि यजामहे'इति भूतयजनसङ्कल्पाः,ते भूतानि यान्ति,ये तु तैरेव यज्ञैः'देवपितृभूतशरीरकं परमात्मानं भगवन्तं वासुदेवं यजामहे'इति मां यजन्ते,ते मद्याजिनो मामेव यान्ति;देवादिव्रताः देवादीन् प्राप्य तैस्सह परिमितं भोगं भुक्त्वा तेषां विनाशकाले तैस्सह विनष्टा भवन्तिः मद्याजिनस्तु मामनादिनिधनं सर्वज्ञं सत्यसङ्कल्पम् अनवधिकातिशयासंख्येयकल्याणगुणगणमहोदधिमनवधिकातिशयानन्दं प्राप्य न पुनर्निवर्तन्त इत्यर्थः ॥ २५ ॥

ता॥त्रफलसाधनत्वं ज्योतिष्टोमादिष्वपि सिद्धम्।**व्रतशब्दस्सङ्कल्पवाची**ति-अत्र सङ्कल्पविशेषाद्धि फलभेद इति भावः । 'देवव्रताः' इत्यादौ यजनं 'भूतेज्या' इत्यत्र व्रतं चापेक्षया मेलितम्। भूतशब्दस्यात्र प्राणिमात्रादिपरत्वव्युदासेन राजसतामसयाज्यवर्गप्रदर्शनाय—**यक्षे**त्यादिकम् । न देवयजनपितृयजनादिवत् क्रियास्वरूपभेदोऽत्रेति ज्ञापनाय —**तैरेवे**त्युक्तम्। वाक्यान्तरविहितदेवयजनाद्यनुवादेन फलविशेषोऽत्र प्रदर्श्यते।न तु ज्योतिष्टोमादिवाक्यवत्फलार्थोपायविधानं क्रियत इति ज्ञापनाय यत्तच्छब्दविन्यासेन व्याख्यातम्।देवेषु व्रतं येषां ते देवव्रताः;भूतानुद्दिश्येज्या येषां ते भूतेज्याः। तत्तत्प्राप्यभेदवचनं तत्तत्समानदेशकालसमानभोगत्वार्थमिति दर्शयति —**देवादिव्रता** इति।**अनादिनिधन**मित्यनेन प्राप्यानित्यत्वनिबन्धनायाः पुनरावृत्तेः प्रतिक्षेपः ; **सर्वज्ञ**मित्यनेन विरोध्यज्ञाननिमित्तायाः , **सत्यसङ्कल्प**मित्यनेन त्वशक्तिमूलाया भगवत्स्वातन्त्र्यशङ्कितायाश्च। 'भक्तान्नावर्तयेयम्' इत्यपि *सङ्कल्पस्सत्य इति भावः । स्वरूपतश्च परिमितत्वप्रयुक्तभोगाल्पत्वव्युदासाय-**अनवधिके**त्यादि विशेषणद्वयम् । एतेनान्यवैतृष्ण्यहेतुतया स्वेच्छोपाधिकपुनरावृत्तिव्युदासः॥ २५ ॥

प्र-पा॥*सङ्कल्पोऽस्य सत्य . पा ॥

शं॥येऽपि अन्यदेवताभक्तिमत्त्वेन अविधिपूर्वकं यजन्ते, तेषामपि योगफलम् अवश्यंभावि। कथम्? ; यान्ति गच्छन्ति देवव्रताः देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रताः देवान् यान्ति । पितॄन् अग्निष्वात्तादीन् यान्ति पितृव्रताः। श्राद्धादिक्रियापराः पितृभक्ताः। भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्याः भूतानां पूजकाः । यान्ति मद्याजिनः मद्यजनशीला वैष्णवाः माम् एव यान्ति । समाने अपि आयासे मामेव न भजन्ते अज्ञानात्; तेन ते अल्पफलभाजः भवन्ति इत्यर्थः ॥ २५ ॥

आ॥फलं विविच्याह—यान्तीति ॥ २५ ॥

ज॥'ते पुण्यमासाद्य'इति 'योगक्षेमं वहाम्यहम्'इति च फलभेदस्योक्तत्वात्किं 'यान्ति'इत्यादिनेत्यत आह—**फल**मिति । तस्यैवायं प्रपञ्च इति भावः ॥ २५ ॥

रा॥मद्याजिनामयमपि विशेषोऽस्तीत्याह—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६

सर्वसुलभं पत्रं वा पुष्पं वा फलं वा तोयं वा यो भक्त्या मे प्रयच्छति-अत्यर्थमत्प्रियत्वेन तत्प्रदानेन विनात्मधारणमलभमानतया तदेकप्रयोजनो यो मे पत्रादिकं ददाति; तस्य प्रयतात्मनः तत्प्रदानैकप्रयोजनत्वरूपशुद्धियुक्तमनसः, तत्-तथाविधभक्त्युपहृतम्

ता॥समानेऽप्यायासे प्राप्यवैषम्यमुक्तम्; अथोपायवैषम्यमुच्यत इत्याह—मद्याजिनामिति। मद्यजनशीलानामित्यर्थः । अयमपीति—उपास्यसौलभ्यातिशयप्रयुक्तोपायसौकर्यरूप इत्यर्थः । पत्रपुष्पफलानां प्रायशो हेतुकार्यभावात्क्रमविन्यासः। तस्य तत्तत्कालानुरूपं यथासम्भवं किमपि लभ्यमिति भावः। पत्रादीनां समासाकरणादसमुच्चयाच्च परस्परनैरपेक्ष्यं सूचितम् ; तद्द्योतनाय-पत्रं वेत्यादिविकल्पकरणम् । एकैकेन तुष्यति भगवानिति ह्युच्यते । 'अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् । अन्यत्कुशलसम्प्रश्नान्न चेच्छति जनार्दनः ' इति सर्वाभावेऽपि तोयं लभ्यमित्यभिप्रायेण तस्य पश्चादुक्तिः। नह्येतद्वित्तव्ययादिसाध्यतया दरिद्रादीनां दुर्लभमित्यभिप्रायेण —सर्वसुलभमित्युक्तम्। अन्यत्र चाहुः—' पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः' इति । य इति सामान्यनिर्देशेन सापराधनिरपराधजडाजडादिविभागमपि न पश्यामीत्यभिप्रेतम्। वक्ष्यति हि ''येऽपि स्युः पापयोनयः। स्त्रियो वैश्याः'इत्यादि। भक्त्येत्यनेन दृष्टादृष्टप्रत्यवायपरिहारफलान्तरहेतुत्वव्यवच्छेदः ; तद्व्यञ्जयति—अत्यर्थेति । प्रयतात्मशब्दं व्याख्याति —तत्प्रदानेति । 'तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलङ्कृतौ । प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ' इत्यादिष्विव प्रयोजनान्तररागरूपाशुद्धिविरहः प्रयतत्वमित्यर्थः । पुण्येष्वपि फलाभिसन्धिरेव हि मनसोऽशुद्धिः । तदप्याहुः 'तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्य *वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः' इति । 'भक्त्युपहृतम्' इति पुनः कीर्तनं भगवदादरणीयत्वे हेतुरयमेवेति ज्ञापनार्थम् । तथाच स्वयमेवाह—'अण्वप्युपहृतं भक्तैर्मम भोगाय जायते । भूर्यप्यभक्तोपहृतं न मे भोगाय जायते' इति । फलाभिलाषिणामपि काचिद्भक्तिरस्तीति तद्व्युदासाय तच्छब्द इत्यभिप्रायेण —तथाविधभक्त्युपहृतमित्युक्तम् । पत्रादिक्षुद्रद्रव्यपरिग्रहपरिपन्थिनः प्रकारा अहंशब्देन विवक्षि-

प्र-पा॥ १. भारते. उद्योग. ८७-१३ ॥

२ गारुडे. पूर्वखं. २१९ ३४ ॥ नारसिंहे च. ६२-१९ ॥

३. गी. ९-३२ ॥

४ ॥

५. भारते. आदि. १-२०१. 'तपो नकल्क. ...कल्कः ॥ तप. - कृच्छ्रचान्द्रायणादि. नकल्कः - पापनाशकम् , स्वाभाविकः - स्वस्ववर्णाश्रमादिपुरस्कारेण विहितः, वेदविधिः - वेदोक्तो विधिः- सन्ध्योपासनादि , प्रसह्य प्रकर्षेण सोढ्वा, क्षुदादिदुःखमपि सोढ्वा; वित्ताहरणम्-वित्तस्य आहरणम् , शिलोञ्छादिनाऽर्जनम् ; तान्येव-तपआदीन्येव, भावोपहतानि-भावेन-फलानुसन्धानेन, उपहतानि प्रतिषिद्धानि ; कल्कः-पापहेतुः ॥

*वित्ताहरणं. पा ॥ ६. पञ्चरात्रे ॥

शां॥न केवलं मद्भक्तानाम् अनावृत्तिलक्षणम् अनन्तफलम्, सुखाराधनश्च अहम्। कथम्? —पत्रं पुष्पं फलं तोयम् उदकं यः मे मह्यं भक्त्या प्रयच्छति तत् अहं पत्रादि भक्त्या

रा ॥ अहं सर्वेश्वरो निखिलजगदुदयविभवलयलीलोऽवाप्तसमस्तकामस्सत्यसङ्कल्पोऽनवधिकातिशयासंख्येयकल्याणगुणगणस्स्वाभाविकानवधिकातिशयानन्दस्वानुभवे वर्तमानोऽपि, मनोरथपथदूरवर्ति प्रियं प्राप्येवाश्नामि ; यथोक्तं मोक्षधर्मे *'याः क्रियास्सम्प्रयुक्तास्स्युरेकान्तगतबुद्धिभिः । तास्सर्वाश्शिरसा देवः प्रतिगृह्णाति वै स्वयम्' इति ॥

यस्मात् ज्ञानिनां महात्मनां वाङ्मनसागोचरोऽयं विशेषः, तस्मात्त्वं च ज्ञानी भूत्वोक्तलक्षणभक्तिभारावनमितात्मात्मीयः कीर्तनयतनार्चनप्रणामादिकं सततं कुर्वाणो लौकिकं वैदिकं च नित्यनैमित्तिकं कर्म चेत्थं कुर्वित्याह—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७

ता॥ता इति दर्शयितुं सर्वेश्वर इत्यादिकम्।अपि शब्दः प्रत्येकमन्वेतव्यः।सर्वेश्वर इति - यथेन्द्रादयस्स्वशक्तिवृद्धये हविरादिकं गृह्णन्ति ; न हि तथाहं, सर्वगोचरसदातननियमनशक्तिशालित्वादिति भावः । निखिलजगदुदयविभवलयलील इति—न हि मल्लीलोपकरणाद्बहिर्भूतं पत्रादिकं मह्यं दीयत इति भावः । अवाप्तसमस्तकाम इति—न हि मे अनवाप्तमवाप्तव्यमस्तीत्यभिप्रायः । सत्यसङ्कल्प इति—न हि ममाशक्यं किञ्चिदन्येनोपहृतं स्वीक्रियत इति भावः । अनवधिकेत्यादि—गुणतस्स्वरूपतश्च निरतिशयानन्दतृप्तस्य मे कियदिदं पत्रादिकमिति तात्पर्यम् । स्वाभाविकशब्देन हेतुनैरपेक्ष्यं, वर्तमानशब्देन चानिवर्त्यत्वं विवक्षितम्। 'परिपूर्णोऽपि भगवान् भक्तैर्यत्किञ्चिदीरितम् सापेक्षवत्तदादत्ते तेन प्रीतो ददात्यलम्' इत्यस्यार्थमभिप्रयन्नाह—मनोरथेति । 'अश्नामि' इत्युपभोगमात्रलक्षणा; तेन निवेद्याभावे पत्रादिकमपि निवेद्यं स्यादिति व्यज्यते । फलान्तरार्थिजनसमर्पितान् 'तत्सर्वं देवदेवस्य चरणावुपतिष्ठते' इति भगवत्पादोपसर्पणमुक्त्वा परमैकान्तिजनदत्तानां भगवताऽत्यादरेण शिरसा प्रतिग्रहो मोक्षधर्मेऽभिहित इत्याह—यथोक्तमिति ॥ २६ ॥

उक्तार्थफलितपरतया उत्तरश्लोकस्य सगतिमाह—यस्मादिति । महात्मनां विशेष उक्तः; अतत्परिगृहीतं भक्तियोगं वक्तुं तदङ्गभूतं बुद्धिविशेषमनुशास्तीत्यभिप्रायेण—इत्थं कुर्वित्युक्तम् । 'यत्करोषि' इतिश्लोकेन स्वभावार्थशास्त्रप्राप्तसर्वकर्मसमर्पणविषयमन्त्रविशेषोऽपि स्मारितः । इममेव श्लोकं 'यत्करोमि'इत्युपक्रम्य 'भगवन्' इति सम्बुद्ध्या 'त्वदर्पणम्'इत्युक्तं मन्त्रमेव केचिदनुसन्दधते

प्र-पा॥ *१. भार शा. मो. ३५३-६४ ॥
२. भार. शा. मो ३५३-६३ ॥
३. 'यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् यत्तपस्यामि भगवन् तत्करोमि त्वदर्पणम्' इति॥

शं॥उपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतम् अश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः॥२

आ॥दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याह—पत्रमिति। न त्वविहितपत्रादितस्यापराधत्वोक्तेर्वाराहादौ। भक्त्यैवाहं तृप्य इति भावः। 'भक्तप्रियं सकललोकनमस्कृच' इति भारते । 'एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः । एकान्तभक्तिर्गोविन्दे यत्सर्वत्रात्मदर्शनम्'॥ २६ ॥

जा॥पत्रमित्यस्य सङ्गत्यप्रतीतेराह—दुर्बलैरिति । अतस्तद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पाः देवानां भजनमल्पफलमपि सुशकत्वात्करोमीति प्रासङ्गिकशङ्काशेषः । साधनानादरस्योक्तत्वाद्यत्किंचित्पत्रादिकमिति न मन्तव्यमित्याह—नत्विति । तत्किमपि भगवते समर्पणीयमेवेति नियमोऽत्राभिप्रे इत्यत आह—भक्त्यैवेति । कुत इत्यत आह —भक्तेति । स्वार्थः—स्वार्थसाधनोपायः ॥ २६ ॥

रा॥यत् - देहयात्राशेषभूतं लौकिकं कर्म करोषि,यच्च देहधारणायाश्नासि,यच्च वैदिकं होमदानतपःप्रभृति नित्यनैमित्तिकं कर्म करोषि, तत्सर्वं मदर्पणं कुरुष्व—अर्प्यत इत्यर्पणम्, सर्वस्य लौकिकस्य वैदिकस्य च कर्मणः कर्तृत्वं, भोक्तृत्वम्, आराध्यत्वं च यथा मयि समर्पितं भवति तथा कुरु । एतदुक्तं भवति—यागदानादिषु आराध्यतया प्रतीयमानानां देवादीनां कर्मकर्तुर्भोक्तुः तव च मदीयतया मत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तितया च मय्येव परमशेषिणि परमकर्तरि त्वां च कर्तारं भोक्तारम् आराधकम्, आराध्यं च देवताजातम्, आराधनं च क्रियाजातं, सर्वं समर्पय ; तव मन्नियाम्यतापूर्वकमच्छेषतैकरसतामाराध्यादेश्चैतत्स्वभावगर्भतामत्यर्थप्रीतियुक्तोऽनुसंधत्स्व—इति॥२७॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥** २८

एवं सन्न्यासाख्ययोगयुक्तमनाः आत्मानं मच्छेषतामन्नियाम्यतैकरसं कर्म च सर्वं मदाराधनमनुसंदधानो लौकिकं वैदिकं च कर्म कुर्वन् शुभाशुभफलैरनन्तैः

ता॥तत्र'यत्करोषि'इत्येतद्गोबलीवर्दन्यायात्सङ्कुचित स्वभावप्राप्तविषयमित्याह-**यद्देहे**ति।'अश्नासि'इत्येतदर्थप्राप्तवर्गोपलक्षणमित्यभिप्रायेणाह—**यच्च देहधारणायाश्नासी**ति। 'यज्जुहोषि'इत्यादेश्शास्त्रप्राप्तसमस्तोपलक्षणत्वमुपलक्षणीयसङ्ग्राहकाकारं च दर्शयति—**यच्च वैदिक**मिति । अत्र यच्छब्दास्सर्वे क्रियाविशेषाः । अर्पणशब्दस्य भाववाचित्वे व्यधिकरणबहुव्रीहिक्लेशात्तत्पुरुषत्वौपयिककर्मप्रत्ययान्ततां व्युत्पादयति—**अर्प्यत इत्यर्पण**मिति । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । मय्यर्पितं कुरुष्वेति शब्दार्थः । अन्यत्र स्थितस्य स्थायिनः ततोऽन्यस्मिन्निवेशनं हि समर्पणम्; तच्चात्र क्षणिके कर्मणि कथमित्यत्राह—**सर्वस्ये**ति । ननु जीवस्यैव कर्तृत्वं भोक्तृत्वं च 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणे स्थापितम्; इन्द्रादीनां चाराध्यत्वं श्रुतम्; तथाच देवताभेदो मीमासितः; अतन्निष्ठस्य तन्निष्ठत्वानुसन्धाने भ्रान्तिरेव स्यात्; तत्कथमीश्वरे तत्समर्पणमित्यत्राह—**एतदुक्त**मिति।**परमकर्तरी**ति—'परात्तु तच्छ्रुतेः' इत्यधिकरणार्थः स्मारितः । **कर्तारं भोक्तारमाराधक**मिति क्रियायास्तत्फलस्य तत्प्रदातॄणां चेति शेषः । परमकर्तृत्वात्कर्तृत्वसमर्पणम्; परमशेषित्वादाराध्यत्वादिसमर्पणम् । कर्तृत्वादौ त्वयि समर्पिते साक्षात्कर्तर्याराध्यविशेषणभूतेन्द्रादौ च किमनुसन्धेयमिति शङ्कायां समर्पणं शिक्षयति—**तवे**ति । भक्तिप्रकरणात्प्रीतियुक्तत्वोक्तिः ॥ २७ ॥

'सन्न्यासयोगयुक्तात्मा' इत्ययं फलविधानार्थः पूर्वश्लोकार्थानुवादः ; न तु ज्ञानकर्मयोगादिपर इत्यभिप्रायेणान्वयमाह—**एवं सन्न्यासाख्ये**ति।योगशब्दोऽत्रानुसन्धानपरः।तदेव प्रकृतसमर्पणानुवादिना सन्न्यासशब्देन विशेष्यते।**आत्मान**मित्यादि तद्विवरणम्।**लौकिक**मित्यादि स्वभावार्थप्राप्तयोस्सामान्यरूपम् । **शुभाशुभफलैः**-अनुकूलप्रातिकूलफलैरित्यर्थः। **अनन्तै**रिति बहुवचनाभिप्रेतकथनम् ।

**प्र-पा** ॥ १ अष्टाध्याय्या. ३-३-.१३ ॥
२. शारी. २-३-३३ ॥
३. शारी. २-३-४० ॥

शं॥यत एवम्, अतः—यत् करोषि स्वतः प्राप्तम्, यत् अश्नासि, यत् जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यत् ददासि प्रयच्छसि ब्राह्मणादिभ्यः हिरण्यादि,यत् तपस्यसि तपः चरसि कौन्तेय, तत् कुरुष्व मदर्पणम् ॥ २७॥

एवं कुर्वतः तव यत् भवति तत् शृणु—शुभाशुभफलैः शुभाशुभे इष्टानिष्टे फले येषां

रा॥ **प्राचीनकर्माख्यैर्बन्धनैर्मत्प्राप्तिविरोधिभिस्सर्वैर्मोक्ष्यसे ; तैर्विमुक्तो मामेवोपैष्यसि ॥**

**ममेमं परममतिलोकं स्वभावं शृणु—**

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥** २९

**देवतिर्यङ्मनुष्यस्थावरात्मनावस्थितेषु जातितश्चाकारतस्स्वभावतो ज्ञानतश्चात्यन्तो-**

---

**ता॥**समर्पणबुद्ध्या क्रियमाणस्य बन्धकत्वाभावात्तद्व्यवच्छेदाय-**प्राचीन**शब्दः।अभिमतगतिनिवृत्तिहेतुर्हि बन्धनमित्यभिप्रायेण —**मत्प्राप्तिविरोधिभि**रित्युक्तम् । तेनोपायविरोधिव्यवच्छेदश्च। एतेनैव शुभफलस्यापि कर्मणोऽतिशयितफलप्रतिबन्धकत्वात् हेयत्वं निर्व्यूढम् । 'मामुपैष्यसि'इत्येतत्सामर्थ्यात्— **सर्वै**रित्युक्तम्। 'मोक्ष्यसे' इत्युक्त एवार्थो 'विमुक्तः'इत्यनूद्यत इत्यपौनरुक्त्याभिप्रायेणाह— **तैर्विमुक्त**इति। अत्र विमुक्तिशब्दस्य जीवन्मुक्तिपरत्व वदन्तस्तदसम्भवादेव निरसनीयाः । कर्तृत्वफलप्रदत्वादिवत्फलत्वमपि स्वस्यैवेत्यभिप्रायेण- -**मामेवैष्यसी**त्युक्तम् । यद्वा क्रमेण प्राप्त्या विलम्बव्यवच्छेदार्थ एवकारः । 'मामेवैष्यसि' इति च वक्ष्यते ॥ २८ ॥

दुर्लभसुलभोत्कृष्टापकृष्टादिद्रव्यतारतम्यादर्शनेन स्वीकारः 'पत्रम्' इति श्लोकेन प्रोक्तः । तेन सौलभ्यमुक्त भवति । 'यत्करोषि' इत्यादिना क्रियमाणस्य सर्वस्य बुद्धिविशेषमात्रेण तदाराधनत्वसम्पत्त्या तदेव दृढीकृतम् । अथ भक्तियोगाधिकारिप्रशंसनपरे 'समोऽहम्' इति श्लोके तु जात्याकारादितारतम्यानादरेण भक्तैस्स्वस्यैकरस्यमुच्यते । तेन सौशील्यमुक्तं भवति । कंसादिनिग्रहादक्रूराद्यनुग्रहात्'तत्कुरुष्व मदर्पणम्' 'मामुपैष्यसि'इत्याद्युक्तेश्च जाता रागद्वेषशङ्का प्रतिक्षेप्येत्यभिप्रायेणाह— **ममे**ति । अहंशब्दोऽत्र स्वेतरव्यवच्छेदपर इत्यभिप्रायेण—**अतिलोक**मित्युक्तम् । 'समोऽहम्' इत्यस्य प्रतिशिरोभूतं वैषम्यं सर्वशब्देन विवक्षितमित्यभिप्रायेणाह—**देवे**ति । **जातितः**-देवत्वमनुष्यत्वब्राह्मणत्वक्षत्रियत्वादेः; **आकारतः**- अभिरूपस्त्रीत्वपुंस्त्वसमविषमाङ्गत्वादेः।वक्ष्यति हि [2]'येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्राः' इति । 'स्वभावतः' इत्यनेन सात्त्विकराजसत्वादिकं विवक्षितम् ।

---

**प्र-पा** ॥ १. गी. ९-३४ ॥ | २. गी. ९-३२ ॥

---

शं ॥ **तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैः कर्माण्येव बन्धनानि कर्मबन्धनानि तैः कर्मबन्धनैः एवं मदर्पणं कुर्वन् मोक्ष्यसे । सोऽयं सन्न्यासयोगो नाम । संन्यासश्च असौ मत्समर्पणतया कर्मत्वात् योगश्च असौ इति; तेन संन्यासयोगेन युक्तः आत्मा अन्तःकरणं यस्य तव सः त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः बन्धनैः जीवन्नेव, पतिते शरीरे माम् उपैष्यसि आगमिष्यसि ॥ २८ ॥**

**रागद्वेषवान् तर्हि भवान्, यतो भक्तान् अनुगृह्णाति, न इतरान् इति । तत् न— समः तुल्यः अहं सर्वभूतेषु । न मे द्वेष्यः अस्ति न प्रियः । अग्निवत् अहं, दूरस्थानां यथा**

---

आ॥अतो यत्करोषि ॥ २७ ॥ २८ ॥

**तर्हि स्नेहादिमत्त्वादल्पभक्तस्यापि कस्यचिद्बहु फलं ददासि ; विपरीतस्यापि कस्य-**

---

**ज॥**आत्मनो गोविन्दस्यासाधनानादरस्य पूर्वमेवोक्तत्वाद्व्यर्थमुत्तरमित्यत आह---**अत**इति । सामान्यमुक्त्वा विशेषे निगमनमेतादिति भावः ॥ २७ ॥ २८ ॥

भक्तप्रियत्वमुक्त्वा तद्विरुद्ध सर्वत्र साम्यं कथमुच्यत इत्यत आह—**तर्ही**ति । यदि त्वं भक्तप्रियः,

रा॥त्कृष्टापकृष्टरूपेण वर्तमानेषु सर्वेषु भूतेषु समाश्रयणीयत्वे समोऽहम्; अयं जात्याकार· स्वभावज्ञानादिभिर्निकृष्ट इति समाश्रयणे न मे द्वेष्योऽस्ति—उद्वेजनीयतया न त्याज्योऽस्ति; तथा समाश्रितत्वातिरेकेण जात्यादिभिरत्यन्तोत्कृष्टोऽयमिति तद्युक्ततया समाश्रयणे न कश्चित्प्रियोऽस्ति-न संग्राह्योऽस्ति; अपित्वत्यर्थमत्प्रियत्वेन मद्भजनेन विनात्मधारणालाभान्मद्भजनैकप्रयोजना ये मां भजन्ते; ते जात्यादिभिरुत्कृष्टा अपकृष्टा वा मत्समानगुणवद्यथासुखं मय्येव वर्तन्ते, अहमपि तेषु मदुत्कृष्टेष्विव वर्ते ॥ २९ ॥

ता॥देवादीनां भगवत्समाश्रयण 'तदुपर्यपि बादरायणस्सम्भवात्' इत्यधिकरणे समर्थितम्; तिरश्चामपि गजेन्द्रवानरेन्द्रादिषु पुण्याधिक्यनिबन्धनज्ञानविशेषवत्त्वं प्रथितम्। तस्मात्तिर्यगधिकरणाविरोधः। स्थावरेष्वपि शापादिजातेषु क्वचिज्ज्ञानं महर्षयः कथयन्ति। ततश्च मनोवृत्तिरूपं समाश्रयणं तत्रापि सम्भवेदेव। 'न मे द्वेष्योऽस्ति न प्रियः' इत्यस्य प्रतिषेधस्य प्रसङ्गसाकाङ्क्षत्वाज्जात्यादिभिर्निकर्षोत्कर्षौ प्रतिषेध्यप्रसञ्जकतयोक्तावित्याह—अयमिति। तद्द्वेष्यत्वप्रियत्वे हि त्याज्यत्वसंग्राह्यत्वार्थे इति तन्निषेधात्तन्निषेधः फलित इत्यभिप्रायेणोक्तम्-उद्वेजनीयतया न त्याज्योऽस्तीति, न संग्राह्योऽस्तीति च। समाश्रयणाधीनप्रियत्वप्रतिषेधभयात्—समाश्रितत्वातिरेकेणेत्युक्तम्। यदि, न प्रियत्वहेतुतया प्रसिद्धाज्जात्यादिभिरुत्कर्षात्प्रियत्वम्; कुतस्तर्हि?; यदि न कुतश्चित्?, 'स च मम प्रियः' इत्यादिविरोध इति शङ्कानिराकरणार्थस्तुशब्द इत्यभिप्रायेणाह—अपित्विति। 'भक्त्या भजन्ति' इत्यनयोः पानैरुक्त्यपरिहारायान्वयमाह-अत्यर्थेति। 'ये' इत्येतदुत्कर्षापकर्षानियमाभिप्रायमित्याह—ते जात्यादिभिरिति। तुल्यानामिवान्योन्यमैकरस्यमिह 'मयि' इत्यादिना विवक्षितमित्यभिप्रायेणोक्तं—मत्समानगुणवद्यथासुखमिति। ननु स्वामित्वेन त्वामनुसंधाय भजतां कथं त्वयि समानगुणवद्वृत्तिरित्यस्योत्तरं 'तेषु चाप्यहम्' इत्यनेनोच्यत इत्यभिप्रायेणाह—अहमपीति। सौशील्यातिरेकतो मत्तोऽप्युत्कृष्टानिवाहं

प्र·पा॥ १. शारी. १-३-२५ 'तदुपर्यपि बादरायणस्सम्भवात्' ॥ अस्यार्थः-तत्—ब्रह्मोपासनम्, उपरि—देवादिष्वप्यस्ति, अर्थित्वसामर्थ्यसम्भवात्—इति भगवान्बादरायणः मेने। सम्भवश्च- पूर्वोपार्जित ज्ञानाविस्मरणात्, मन्त्रार्थवादेषु विग्रहादिमत्तया स्तुतिदर्शनात्, तदुपपत्तये तत्सम्भवे तेषामेव प्रामाण्येन विग्रहादिमत्त्वाच्चेति ॥

शं॥अग्निः शीतं न अपनयति, समीपम् उपसर्पताम् अपनयति; तथा अहं भक्तान् अनुगृह्णा-

आ॥चिद्विपरीतमित्यत आह—समोऽहमिति। तर्हि न भक्तिःप्रयोजनमित्यत आह-ये भजन्तीति। मयि ते तेषु चाप्यहमिति—मम ते वशाः, तेषामहं वश इति। उक्तं च पैङ्गि·

ज॥ तदा द्वेष्यप्रियश्च स्याः; ततश्च भक्तेषु द्वेषिषु यथासंख्यं स्नेहद्वेषवत्त्वादल्पभक्तस्यापि कस्यचिद्बहुफलं सुखरूपं ददासि; विपरीतस्याल्पद्वेषिणोऽपि कस्यचिद्बहुफलं दुःखरूपं ददासि-इत्याद्यापद्यते, राजादिषु तथा दर्शनात्; तथा च वैषम्यनैर्घृण्ये तवेति शङ्कार्थः। पूर्वार्धेनैव शङ्कायाः परिहृतत्वात्किमुत्तरार्धेनेत्यत आह—तर्हीति। अहं हि सर्वभूतेषु समो न वैषम्यादिमान्, यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति। तदीयां भक्तिमपेक्ष्याधिकं प्रियश्च नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते—यदि ते प्रियो नास्ति, तर्हि न भक्तिः प्रयोजनं फलस्य; तथाचोक्तविरोध इति भावः। 'मयि ते तेषु चाप्यहम्' इत्येतन्न फलं स्वभावसिद्धत्वादित्यत आह—मयीति। इत्यस्येत्यर्थ इति योजना। कुत एतदित्यत आह—उक्तं चेति। मम ते वशा इत्येतदपि तादृगेव भजनाभावे-

रा॥**तत्रापि**—

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥** ३०

**तत्रतत्र जातिविशेषे जातानां यस्समाचार उपादेयः परिहरणीयश्च ; तस्मादतिवृत्तोऽप्युक्तप्रकारेण मामनन्यभाक् भजनैकप्रयोजनो भजते चेत्-- साधुरेव सः - वैष्णवा-**

---

**ता**॥'शिरसा देवः प्रतिगृह्णाति'इत्युक्तप्रक्रियया सम्भावयामि; ततश्च ते मत्परमेश्वरत्वाद्यनुसंधाननिबन्धनसाध्वसविधुरास्सुखं मां सेवन्त इति भावः । अहं च ते चान्योन्य पित्रादिष्विव न्यस्तभरा इति पिण्डितार्थः । स्वजातिप्रतिनियतधर्मैर्भजनान्नापकृष्टजातिनिर्देशविरोधः ॥ २९ ॥

एव समाश्रयणस्वीकारे जात्याद्यपकर्षोऽकिञ्चित्कर इत्युक्तम् ; तत्रचोपरि वृत्तापकर्षोऽप्यकिञ्चित्कर इत्युच्यते 'अपि चेत्' इति श्लोकेनेत्यभिप्रायेणाह— **तत्रापी**ति। ब्राह्मणाद्याचारः शूद्रादेरधर्मः ; शूद्राद्याचारश्च ब्राह्मणादेः, एवं ब्राह्मणस्य निषिद्धं मधुमांसादिकं शूद्रस्य न निषिध्यते ; शूद्रस्य निषिद्धं कपिलाक्षीरादिकं ब्राह्मणस्य प्रशस्तम् ; अतस्स्वजातिनियमाद्यपेक्षया दुराचारत्वं दोष इत्यभिप्रायेणाह—**तत्रतत्रे**ति । विहिताकरणं निषिद्धकरणं चेत्युभयमपि दुराचार इति ज्ञापनाय—**उपादेयः परिहरणीयश्चे**त्युक्तम्।अत्र'चेत्'इत्यस्य नैरर्थक्यादिपरिहाराय दुराचारोऽपि भजेत चेदित्यन्वयः प्रदर्शितः।**उक्तप्रकारेणे**ति—सततकीर्तनादिनेत्यर्थः।प्रकरणविशेषितोऽनन्यभागित्यस्यार्थो-**भजनैकप्रयोजन** इति । तेनैव देवतान्तरभजनप्रसङ्गो दूरनिरस्तः । यथोच्यते—'[1]ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृताः।प्रतिबुद्धा न सेवन्ते यस्मात्परिमित फलम्'इति।ननु'[3]आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' '[4]आचारहीनं न पुनन्ति वेदाः''[5]सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु'इत्यादिषु सत्सु दुराचारस्य केनाकारेण साधुत्वमित्यत्राह—**वैष्णवाग्रेसर** इति।अनन्यभजनं वैष्णवाग्रेसरत्वे प्रयोजकम्।ननु'[6]साधवः क्षीणदोषास्स्युः'इति भगवत्पराशरवचनात् क्षीणपापानां च कृष्णभक्तिस्मरणात्साधुशब्दोऽत्र कथं वैष्णवाग्रेसरपर उक्तः,आचारशून्यस्य शिष्टापरिग्रहादसाधुत्वमेवेत्यत्रोत्तरं'मन्तव्यः'इत्युच्यत इति दर्शयति

---

**प्र-पा**॥१ भा शा. मो ३५३-६४॥
२. भा शा. मो. ३५०-३६ ॥
३ भारते.आनुशा.सहस्रनामाध्या.१४९-१२४. 'सर्वागमानमाचार. प्रथमम्परिकल्प्यते । आचार अच्युतः ॥
४ वासिष्ठस्मृतौ. ६-३. 'आचारहीनं न पुनन्ति वेदा यद्यप्यधीतास्सह षड्भिरङ्गैः । छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः' ॥
५. दक्षस्मृतौ २-२२॥ ६. वि. पु॥

---

**शं॥ मि,न इतरान्।ये भजन्ति तु माम् ईश्वरं भक्त्या मयि ते स्वभावत एव,न मम रागनिमित्तं—वर्तन्ते । तेषु च अपि अहं स्वभावत एव वर्ते, न एतावता तेषु द्वेषो मम ॥२९॥**

**शृणु मद्भक्तेः माहात्म्यम्—अपि चेत् यद्यपि सुदुराचारः अतीव कुत्सिताचारोऽपि**

---

**आ॥खिलेषु—'ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते मद्वशाश्च'इति।तद्वशा एव ते सर्वदा, तथापि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवच्छिशुपालादिवच्च । तच्चोक्तं तत्रैव—'अबुद्धिपूर्वाद्योवशस्तस्य ध्यानात्पुनर्वशो भवते बुद्धिपूर्वम्' इति ॥ २९ ॥**

---

ज॥ऽपि तद्वशत्वस्वाभाव्यादित्यत आह—तदिति । यद्यपीति शेषः। अत्र दृष्टान्तंप्रमाणं चाह—उद्धवादीति । अबुद्धिपूर्वं यो वशः सः ॥ २९ ॥

रा॥ग्रेसर एव सः, मन्तव्यः—बहुमन्तव्यः, पूर्वोक्तैस्सम इत्यर्थः। कुत एतत्? सम्यग्व्यवसितो हि सः-यतोऽस्य व्यवसायस्सुसमीचीनः, भगवान् निखिलजगदेककारणभूतः परं ब्रह्म नारायणश्चराचरपतिरस्मत्स्वामी मम गुरुर्मम सुहृत् मम परमं भोग्यमिति सर्वैर्दुष्प्रापोऽयं व्यवसायस्तेन कृतः, तत्कार्यं चानन्यप्रयोजनं निरन्तरं भजनं तस्यास्ति,

ता॥—बहुमन्तव्य इति। अर्थसिद्धबोद्धव्यतामात्रकथन निरर्थकम्; संपूर्वस्य मनिधातोश्च बहुमतिरर्थः, उपसर्गार्थाश्च धातुलीना इति भावः। अपरिग्रहे सति खल्वसाधुत्वशङ्का, न तु सोऽस्तीत्याह—पूर्वोक्तैस्सम इति।'[1]'विष्णुरेव भूत्वा'इत्यादौ साम्येऽप्येवकारः प्रयुज्यत इति भावः।पूर्वोक्तैर्महात्मभिरित्यर्थः। ननु स्वाचारदुराचारयोः पुष्कलविकलोपाययोर्न तावदुपायतस्साम्यम;तत एव न फलतोऽपीति शङ्काया 'सम्यक्'इत्यादिकमवतारयति—कुतएतदिति। यत इति—हिर्हेताविति भावः।व्यवसायस्य समीचीनता प्राधान्यतोऽध्यवसेयविषयविशेषेण विशदयति-भगवानिति।भगवान्-उभयलिङ्गकः। निखिलजगदेककारणभूत इत्यनेन ब्रह्मत्वसाधक श्रौतं लक्षणमुक्तम्; तेन '[2]ज्ञात्वा भूतादिमव्ययम्' इति पूर्वोक्तं च स्मारितम्।सामान्यशब्दस्य विशेषे पर्यवसान'[3]नारायण पर ब्रह्म'इत्यादितत्त्वनिर्णायकवाक्यं चाभिप्रेत्य— परं ब्रह्म नारायण इत्युक्तम्। '[4]चराचरपतिः' '[5]पतिं विश्वस्यात्मेश्वरम्' '[5]पतिं पतीनाम्' इत्यादि द्रष्टव्यम्। एवं परत्वव्यवसायः, अथ सौलभ्याध्यवसायः-अस्मत्स्वामीति। नह्यहं तद्विभूतेर्बहिर्भूतः; स्वशेषभूत मामसौ स्वयमेव लब्धुमुपक्रान्त इति भावः। एवं पदद्वयेन सांसिद्धिकस्सबन्धो दर्शितः,अत्यन्तमूर्खस्य मम सम्यग्ज्ञानप्रदायी महोपकारकोऽयमित्यभिप्रायेण—मम गुरुरित्युक्तम्।अनन्तमहापराधशालिनि मय्यपि शोभनहृदयोऽयमित्यभिप्रायेण-मम सुहृदित्युक्तम्।अतिक्षुद्रदुःखमिश्रनश्वरसुखकणसङ्गिनो मे निरतिशयनिर्दोषनित्यसुखसागर स्वात्मान प्रकाशितवानित्यभिप्रायेण—मम परं भोग्यमित्युक्तम्।गुरुत्वसुहृत्त्वे प्रापकत्वार्थे;भोग्यत्वं तु प्राप्यत्वार्थम्।सर्वैर्दुष्प्रापइति-आचारबहुलेष्वपि तादृशो व्यवसायो न दृश्यते, आकरेऽपि शिलाशकलमनुपादेयम्;अवकरेऽपि रत्नमादरणीयमितिभावः।'[6]बहूना जन्मनामन्ते'इति ह्येवंविधो व्यवसाय उक्तः।स्मरन्ति च श्रीपौष्करे च'[7]ये जन्मकोटिभिस्सिद्धाः''[8]अनेकससारचिते चिते पापसमुच्चये''[9]नास्ते क्षीणे जायमानेऽत्र सस्थितिः'इति,श्रीशुकं प्रति जनकश्चाह '[10]ज्ञानं च व्यवसायश्च द्वौ परप्रतिपादकौ। व्यवसायादृते ब्रह्म नासादायति तत्परम्' इति।व्यवसायमात्रेण कथं भजमानैस्समानत्वमित्यत्राह—तत्कार्यंचेति। 'भज माम्' इत्यत्र व्यवसायो

प्र-पा॥१ यजुषि.२ का. १-प्रश्न. ३-अनु. १६-प॥ 'देवासुरा एषु लोकेषु अस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तं स्वायै देवताया आलभत ततो वै स इमान् लोकान् अभ्यजयत् वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति'। इयं श्रुतिरुपरिष्टाद्व्याख्यायते (१० अ १२)॥

२ गी ९-१३॥ ३. तै नारा. ६-११॥ ४॥ ५. श्वे. ६-७॥ ६ गी. ७-१९॥ ७॥ ८॥ ९॥ १०. भारत. शान्ति. मोक्ष. ३३४-४७. 'ज्ञानञ्च व्यवसायश्च' इत्यर्धम्मुद्रितकोशेषु नदृश्यते॥

शां॥भजते माम् अनन्यभाक् नान्यभक्तिः सन्,साधुरेव सम्यग्वृत्त एव स मन्तव्यः ज्ञातव्यः;

आ॥न भवत्येव प्रायत्वद्भक्तः सुदुराचारः, तथापि बहुपुण्येन यदि कथंचिद्भवति, तर्हि साधुरेव स मन्तव्यः॥ ३०॥

ज॥'अपिचेत्' इत्यादिना भक्तेः प्रशंसा क्रियते; तत्र विष्णुभक्तेः सुदुराचारेणैकत्र समावेशप्रतीतौ यथावद्व्याचष्टे—न भवत्येवेति॥ ३०॥

रा॥अतस्साधुरेव;बहुमन्तव्यश्च; अस्मिन् व्यवसाये तत्कार्ये चोक्तप्रकारभजने संपन्ने सति तस्याचारव्यतिक्रमस्स्वल्पवैकल्यमिति न तावताऽनादरणीयः, अपि तु बहुमन्तव्य एवेत्यर्थः ॥ ३० ॥

आ॥ननु*'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' इत्यादिश्रुतेः आचारव्यतिक्रम उत्तरोत्तरभजनोत्पत्तिप्रवाहं निरुणद्धीत्यत्राह—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१

ता॥ऽन्तर्गतः, व्यवसित इत्यत्राप्यर्थाद्भजनम्,अनन्यभजनमूलबहुमन्तव्यत्वहेतुतया हि व्यवसायोऽयमुक्त इति भावः । अविकलानुष्ठायिवद्विकलानुष्ठायी कथं बहुमन्तव्य इत्यत्राह—अस्मिंश्चेति । तादृशे पुरुषे स्वल्पवैकल्यनिमित्तोऽनादर एव महापराधस्स्यादिति भावः । 'स्मृतस्सम्भाषितो वापि पूजितो वा द्विजोत्तम' 'स च पूज्यो यथा ह्यहम्' इत्यादिप्रमाणसूचनाभिप्रायेण निगमयति—अपि तु बहुमन्तव्य एवेति ॥ ३० ॥

अस्त्वन्येषां बहुमन्तव्यः, स्वस्य तु कार्यासिद्धिरिति शङ्कापूर्वकमनन्तरश्लोकमवतारयति—ननु नाविरत इति । न केवलं प्राप्तिमात्रनिषेधश्श्रुतौ ; अपि तु प्रज्ञानस्यापि निषेधोऽभिप्रेत इत्यभिप्रायेणोक्तम्—उत्तरोत्तरभजनोत्पत्तिप्रवाहं निरुणद्धीति । तथाचोच्यते—'पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः । नष्टप्रज्ञः पापमेव पुनरारभते द्विज' इति । प्रतिबन्धकरजस्तमोमूलभूतपापनिरा-

प्र·पा॥ *कठोप. १-२ २४. 'नाविरतो...आप्नुयात्' । परमात्मप्राप्तिहेतुभूतोपासनाङ्गतया कांश्चिद्धर्मानुपदिशति-नाविरत इति । परदारपरद्रव्यापहारात् अनिवृत्त, अनुपशान्तकामक्रोधवेग', नानाविधव्यापारविक्षिप्ततयाऽनवहितचित्तः, अनिगृहीतमनाश्च, एनं - परमात्मानं , प्रज्ञानेन नाप्नुयादित्यर्थः ॥
१ ॥

२. गारुडे. पूर्वे. २१९-अ. 'मद्भक्तजनवात्सल्यम्पूजायाञ्चानुमोदनम् । स्वयमभ्यर्चनञ्चैव मदर्थे डम्भवर्जनम् । मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया। ममानुस्मरणं नित्यं यच्च मां नोपजीवति। भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते। स विप्रेन्द्रो मुनिः श्रीमान् स यतिस्सच पण्डितः। तस्मै देयन्ततो ग्राह्यं स च पूज्यो यथा ह्यहम्'। भारते च ॥
३. भारते उद्यो-३५-७३ ॥

शं॥सम्यक् यथावत् व्यवसितो हि सः, यस्मात् साधुनिश्चयः सः ॥ ३० ॥
उत्सृज्य च बाह्यां दुराचारताम् अन्तः सम्यग्व्यवसायसामर्थ्यात्-क्षिप्रं शीघ्रं भव-

आ॥कुतः ? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव च तद्भवति । उक्तं च शा-

ज॥बहुपुण्येन स्वयोग्यादधिकेनार्जितेन'सम्यग्व्यवसितो हि सः' इति हेतोरुक्तत्वात्'क्षिप्रम्'इत्यादि व्यर्थमित्यत आह—कुत इति । सम्यग्व्यवसायत्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्य इति शङ्कार्थः । सम्यग्व्यवसायवत्त्वात्क्षिप्रं भवति धर्मचित्तः । यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थानमङ्गीकृतं, तदपि न मनुष्यविषयमित्याह—देवेति। देवाश्चन्द्रादयः,तदंशाः सुग्रीवादयः। आदिपदेन विश्वामित्रादीनामृषीणां ग्रहणम् । एतच्च देवदेवांशादिष्वेव विषयेषु भवतीति योजना। कुत इत्यत आह—उक्तंचेति । दुश्चरितादविरतो यःकश्चित्सोऽमलाशयो भूत्वा वासुदेवे सम्यग्भक्तो न भवेत्। तथाऽभ-

रा॥मत्प्रियत्वकारितानन्यप्रयोजनमद्भजनेन विधूतपापतयैव समूलोन्मूलितरजस्तमोगुणः क्षिप्रं धर्मात्मा भवति-क्षिप्रमेव विरोधिरहितसपरिकरमद्भजनैकमना भवति ; एवंरूपभजनमेव हि *'धर्मस्यास्य परन्तप' इत्युपक्रमे धर्मशब्दोदितम् ; शश्वच्छान्तिं निगच्छति—शाश्वतीमपुनरावर्तिनीं मत्प्राप्तिविरोध्याचारनिवृत्तिं गच्छति ; कौन्तेय त्वमेवास्मिन्नर्थे प्रतिज्ञां कुरु—मद्भक्तावुपक्रान्तो विरोध्याचारमिश्रोऽपि न नश्यति;अपि

ता॥साय ह्याचारः,तस्मिंश्च पापे मद्भजनेन विनिवृत्ते सति नोपासनप्रतिबन्ध इत्यभिप्रायेणाह—मत्प्रियत्वेति । विकलस्य विलम्बशङ्काप्रतिक्षेपार्थः क्षिप्रशब्दः । धर्मशब्दोऽत्र प्रकरणादनन्यभजनपरः । आत्मशब्दश्च तत्करणभूतमनोविषयः।'अनन्यमनसः' 'मन्मना भव'इति हि पूर्वापरम् ; भजनमेव कथं भजनोत्पत्तिप्रतिबन्धकनिवर्तकमिति चेत्तन्न, परिपूर्णभजनस्य साध्यत्वात्, भक्त्युपक्रमस्य च हेतुत्वात् ; तदेतदाह—क्षिप्रमेवेत्यादिना । नन्वत्र धर्मशब्दो वर्णाश्रमधर्ममात्रपरः किं न स्यादित्यत्राह—एवंरूपेति । सामान्यशब्दस्य प्राकरणिकविशेषविषयत्वमेव न्याय्यम् ; प्रयुक्तश्चायमेव शब्दः प्रक्रमे भजनरूपविशेषविषयतयेति भावः । अस्तु भजनप्रभावात्पापनिवृत्तिः ; तथापि परितापरहितबुद्धिपूर्वानुवृत्तदुराचारसन्तानः कथं न प्रतिबन्धक इत्यत्रोत्तरं—शश्वच्छान्तिं निगच्छतीति । मत्प्राप्तिविरोध्याचारनिवृत्तिमिति—प्रकरणविशेषतश्शान्तिशब्दार्थः।'प्रतिजानीहि'इत्यत्र ज्ञानमात्रविधावुपसर्गस्य नैरर्थक्यात्, 'वास्तोष्पते प्रतिजानीह्यस्मान्' इत्यादिष्वगत्या नैरर्थक्यस्वीकारादत्र च ज्ञानविधेः प्रयोजनाभावात्, प्रतीयमानप्रतिज्ञार्थस्यात्यन्तनिर्णीतत्वस्थापकतयापेक्षितत्वाच्चाह—कौन्तेय त्वमेवास्मिन्नर्थे प्रतिज्ञां कुर्विति। 'प्रतिजानामि'इति स्वप्रतिज्ञानादपि 'प्रतिजानीहि' इति श्रोतुरेव प्रतिज्ञाविधानमत्यन्तस्थैर्याभिप्रायमिति व्यञ्जनायोक्तं—त्वमेवेति। 'न मे भक्तः प्रणश्यति'इत्ययं प्रतिज्ञाविषय इति ज्ञापनाय—अस्मिन्नर्थे इत्युक्तम् । परिपूर्णोपासकस्य नाशप्रसङ्गाभावात् ' अपिचेत्सुदुराचारः' इत्युक्तविषयत्वाच्चाह—मद्भक्तावुपक्रान्तो विरोध्याचारमिश्रोऽपीति। उपक्रान्तभक्तिरपि हि भक्त इत्युच्यते । भक्तस्य नाशनिषेधः शश्वदित्याद्युक्ततत्प्रतिकूलनाशमुखेन परिपूर्तिपर्यवसित इत्यभिप्रायेणाह—अपित्विति। अत्रोपरिचरादिवृत्तान्तो ग्राह्यः।[२]यथोपरिचरो भगवद्धर्ममास्थितः कदाचिद्दे-

प्र-पा ॥ *गी. ९-३ ॥

१. यजुषि ॥

२. भारते-शान्तिपर्वणि-मोक्षधर्मे- ३४५-अध्याये उपरिचरवसुवृत्तान्तो द्रष्टव्यः ॥

शां॥ति धर्मात्मा धर्मचित्तः एव । शश्वत् नित्यं शान्तिं च उपशमं निगच्छति प्राप्नोति । शृणु परमार्थं ; कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, न मे मम भक्तः मयि समर्पितान्तरात्मा मद्भक्तः न प्रणश्यति इति ॥ ३१ ॥

आ॥ण्डिल्यशाखायां—'नाविरतो दुश्चरिताच्चाभक्तो नासमाहितः।सम्यग्भक्तो भवेत्कश्चिद्वासुदेवेऽमलाशयः । देवर्षयस्तदंशाश्च भवन्ति क्व ज्ञानतः' इति । अतोऽन्यः कश्चिद्भवति चेत् डाम्भिकत्वेन सोऽनुमेयः । साधारणपापानां सत्सङ्गान्महत्यपि कथ-

जा॥कः श्रवणकीर्तनादिभक्तिलिङ्गरहितः।एवमसमाहितो विषयविक्षिप्तमनाश्च।देवादयश्च क्वचिदेवंभूता अपि सम्यग्भक्ता भवन्ति। कुतः? ज्ञानतः-सम्यग्व्यवसायत्वात्।ननु देवादिभ्योऽन्योऽपि सुदुराचारस्तद्भक्तो दृश्यते, शङ्खचक्राङ्कितबाहुमूलत्वादिलिङ्गवत्त्वात् ,कथमेतदित्यत आह—अतोऽन्य इति।भवति चेत्सुदुराचारोऽपि भक्तिलिङ्गवानिति शेषः । मा भूत्सुदुराचारो भक्तः ; मध्यमदुराचारस्तु तथाविधः कथमित्यत आह—साधारणेति । महतीति—वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थम् । सुदुरा-

रा॥तु मद्भक्तिमाहात्म्येन सर्वं विरोधिजातं नाशयित्वा शाश्वतीं विरोधिनिवृत्तिमधिगम्य क्षिप्रं परिपूर्णभक्तिर्भवति— इति ॥ ३१ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३

स्त्रियो वैश्याश्शूद्राश्च पापयोनयोऽपि मां व्यपाश्रित्य परां गतिं यान्ति ; किं पुनः पुण्ययोनयो ब्राह्मणा राजर्षयश्च मद्भक्तिमाश्रिताः । अतस्त्वं राजर्षिरस्थिरं तापत्रयाभिहततया असुखं चेमं लोकं प्राप्य वर्तमानो मां भजस्व ॥ ३२ ॥ ३३ ॥

अ॥भक्तिस्वरूपमाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अक्षरपरब्रह्मयोगो नाम नवमोऽध्यायः ॥ ९ ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

ता॥वानामृषीणां विवादे पिष्टपश्वादि महर्षिविरुद्धमनृतमभिधाय निपतितः क्षिप्रं भगवतोदस्तः;[१]यथा च 'उपमानमशेषाणां साधूनां यस्सदाऽभवत्'[२] इति प्रसिद्धः प्रह्लादः कदाचिद्भगवन्तं प्रतियोद्धुं प्रवृत्तश्शीघ्रं प्रत्यबुध्यत ; [३]यथा च पापिष्ठः क्षत्रबन्धुर्भगवन्नामप्रभावादनन्तरजन्मनि जातिं स्मरन् तीव्रनिर्वेदो भगवन्तं शरणमुपगम्य ह्यमुच्यत । इतिशब्दस्य'अस्मिन्नर्थे' इत्यनेनान्वयः ॥ ३१ ॥

'अपिचेत्सुदुराचारः'इत्यागन्तुकपापोक्तिः ; अथ जन्मत एव पापिष्ठानां जात्याद्यपकर्षेऽपि स्वसमाश्रयणमात्रेण फलसिद्धिं प्राक्प्रस्तुतां प्रपञ्चय तत एव जात्याद्युत्कर्षे भक्तिपौष्कल्ये च कैमुतिकन्यायमुक्त्वा जात्यादिभिरुत्कृष्टस्त्वं फले निस्सन्देह उपायमातिष्ठेत्युच्यते —' मां हि ' इत्यादिश्लोकद्वयेन । स्त्रीवैश्यशूद्राणां परगतिविरोधितया शङ्किताकारानुवादार्थः पापयोनिशब्दः । तत्र ये पापयोनयोऽपि स्युरित्यन्वयः।त्रैवर्णिकस्य विद्यादिमतोऽपि वैश्यस्य शूद्रादिभिस्सह पापयोनित्वेन परिगणनं सत्रानधिकारित्वात्। ऋत्विज एव हि सर्वे सत्रेषु यजमानाः, आर्त्विज्यं च ब्राह्मणस्य, स च सत्राधिकाररूप उत्कर्षः '[४]तस्माद्वाजपेययाज्यार्त्विजीनः' इति क्षत्रियस्यापि श्रुतः । पापयोनिशब्दप्रतिशिरस्त्वात्पुण्यशब्दोऽत्र पुण्ययोनित्वपरः प्रदर्शितः।'किंपुनः'इत्यादि कैमुतिकन्यायादनायसत्ववचनम्। राजर्षिप्रदर्शनमर्जुनस्य फलसिद्धिप्रतिपादनार्थमित्यभिप्रायेणाह—**अतस्त्वमिति**। राजर्षिशब्देन सामर्थ्यं व्यञ्जितम्; **अस्थिरमि**त्यादिना त्वर्थित्वम्।अनित्यशब्दस्य'[५]सततविक्रिया' इत्युक्तप्रकारेण क्षरणस्वभावविषयत्वज्ञापनायास्थिरशब्दः । असुखशब्दस्यात्र पर्युदासवृत्त्या दुःखपरतां सांसारिकसुखस्यापि दुःखकोटिनिवेशात्सुखराहित्यपरत्वं चाभिप्रेत्याह—**तापत्रयेति** । 'इमम्' इत्यनेन अतिक्षुद्रत्वं निर्दिष्टम् । 'प्राप्य' इत्यस्यानुवादरूपताज्ञापनाय—**प्राप्य वर्तमान** इत्युक्तम् । एवमनित्यत्वासुखत्वक्षुद्रत्वानुदर्शनाद्भजनवैमुख्यानिवृत्तिर्भवतीत्यभिप्रायः ॥ ३२ ॥ ३३ ॥

---

प्र-पा॥१. अयं वृत्तान्तो वामनपुराणे ७,८ अध्याययो: द्रष्टव्य: ॥

२. वि. पु. १-१५-१५६. 'धर्मात्मा सत्यशौचादिगुणानामाकर: पर: ।उपमानम ..भवत् ॥

३. क्षत्रबन्धुवृत्तान्तश्च श्रीविष्णुधर्मे ९७-अध्यायमारभ्य विस्तरेण द्रष्टव्य: ॥ ४ ॥ ५ ॥

रा॥**मन्मना भव—मयि सर्वेश्वरेश्वरे निखिलहेयप्रत्यनीककल्याणैकताने सर्वज्ञे सत्यसङ्कल्पे निखिलजगदेककारणे परस्मिन् ब्रह्मणि पुरुषोत्तमे पुण्डरीकदलामलायताक्षे**

ता॥'भजस्व'इत्युक्तभक्तिस्वरूपनिष्कर्षोऽनन्तरं क्रियत इति संगतिं दर्शयति — **भक्तिस्वरूपमाहेति**। सामान्येन सर्वासु परविद्यासूपास्यतया तदुपयुक्ततया च प्रमाणशतैः प्रतिपादिताः स्वरूपरूपगुणादयोऽत्रास्मच्छब्देन विवक्षिता इत्यभिप्रायेणाह—**मयीति**। 'तमीश्वराणां परमं महेश्वरं' 'न तस्येशे कश्चन' इत्यादेरर्थमाह—**सर्वेश्वरेश्वर**इति। न ह्यसमर्थसेवया किंचिल्लभ्यते ; नच ब्रह्माण्डान्तरादेरनीश्वरा ब्रह्मेशानादयोऽपि मोक्षदानशक्ता इति भावः।' 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति ह्युच्यते। हेयास्पदस्य गुणरहितस्य च भजनीयत्वाभावादितरव्यावृत्त्यर्थं सगुणनिर्गुणश्रुतीनां विषयव्यवस्थयोभयलिङ्गत्वमाह—**निखिलेति**। समस्तानिष्टनिवर्तकत्वादनन्तभोग्यमयत्वाच्चायमेवोपास्य इति भावः। अनन्तमङ्गलगुणोपलक्षकतया ध्येयलक्षणजगत्कारणत्वमोक्षप्रदत्वौपयिकं गुणद्वयं—**सर्वज्ञे सत्यसङ्कल्प** इत्युक्तम्। 'यस्सर्वज्ञस्सर्ववित्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति, 'सत्यकामस्सत्यसङ्कल्पः' इति च।अनिष्टनिवृत्त्यादौ चान्याशातं सहकारिसापेक्षत्वं च नास्तीति भावः।'यतो वा इमानि भूतानि जायन्ते' इत्युपक्रम्य 'तद्विजिज्ञासस्व' 'कारणं तु ध्येयः' इत्याद्यभिप्रायेण—**निखिलजगदेककारण** इत्युक्तम्। निखिलशब्देनाव्यक्तादेर्ब्रह्मरुद्रादेश्च संग्रहः। व्योमातीतनिर्गुणवादादिनिराकरणं, सामान्यविशेषशब्दयोरैकरस्यं चाभिप्रेत्य—**परस्मिन् ब्रह्मणि पुरुषोत्तम** इत्युक्तम्।अनेन सर्वात्मकत्वं सर्वविलक्षणत्वं चाविरुद्धमुपदर्शितं भवति। नारायणानुवाकं पुरुषसूक्तादिकं च स्मारितम्।एतावता विशिष्टं स्वरूपमुक्तम्;अथ सर्वशाखादिपठितपुरुषसूक्तादिसिद्धं शुभाश्रयप्रकरणप्रपञ्चितं च विग्रहतद्गुणादिकमच्युते। 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्याद्युक्तपरत्वचिह्नमाह—**पुण्डरीकदलामलायताक्ष** इति। स्वच्छेत्यादिना 'नीलतोयदमध्यस्था' इत्यादिकम-

प्र-पा॥ १. श्वे. ६-७॥ २. तै. ना. १-९॥ ३. याज्ञवल्क्यस्मृ. ३-१-३४॥ ४. मु.१-१-९॥ ५. छा. ८-१-५॥ ६. तै. भृगु. १॥ ७. अथर्वशिखोप॥ ८. छा. १-६-७॥

९ तैत्ति. नारा. ११-अनु-१२.'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः। नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा॥' अथ पूर्वोक्तोपास्यस्य नारायणस्य स्वरूपगुणादिकं दर्शयति—तस्य मध्ये वह्निशिखेति। तस्य - अग्नेः, मध्ये, वह्निशिखा - उक्तान्तरत्वजातमात्मतया स्थित्वा वहति - धारयतीति वह्निः-परमात्मा, तस्य शिखा-वह्निशिखा, शिखावच्छिखा, दिव्यमप्राकृतम्पञ्चशक्तिमयं शरीरं प्रकाशमानत्वविधेयत्वादिना शिखाशब्देनोक्तम्, अणीया-अणीयसी, ऊर्ध्वा-ऊर्ध्वप्रकाशा, व्यवस्थितः, लिङ्गव्यत्ययच्छान्दसः; पुनरपि सैव विशेष्यते-नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरेति। तस्य मध्ये-जीवात्मनो मध्ये' इति कैश्चित् व्याख्यातं मन्दम्, अप्राकृतविदेशस्य दिव्यमङ्गलविग्रहस्य जीवस्वरूपान्तर्व्याप्त्यसम्भवात्, 'सेयन्दहरपुण्डरीकमध्यस्था' इत्यादिवेदार्थसङ्ग्रहे श्रीभाष्यकारैरनुगृहीतत्वात्, 'तस्य मध्ये' इत्यत्र 'तस्य' इति पदं सुषिरपरामर्शीत्यर्थः:' इति वेदार्थसङ्ग्रहतात्पर्यदीपिकायां व्याख्यातत्वाच्च; मध्यस्थितनीलतोयदा विद्युल्लेखा यथा प्रकाशते, आत्मनो वर्णेन तोयदवर्णेन च; एवं भास्वरा मयूरग्रीवासदृशी, सैव विशेष्यते-नीवारशूकवत्-नीवारपुच्छवत्, तन्वी-तनुतरा, पीताभा-पीतवर्णा, प्रतप्तकार्तस्वराभा, भास्वरत्वातिशयेन पिङ्गलत्वमेव श्यामलत्वं ग्रसत इति भावः; तनूपमा-एवंरूपा शिखा तस्य तनोः उपमा-उपमानम्;'स्यात्' इति सम्भावनायां लिङ्। तत्तनोर्वाङ्मनसागोचरप्रकाशत्वेन एवंप्रकाशा स्यादित्यनुमिन्वीतयति; अस्यार्थो वेदार्थसङ्ग्रहे भाष्यकारैः 'सेयन्दहरपुण्डरीकमध्यस्थाकाशवर्तिनी

रा॥स्वच्छनीलजीमूतसङ्काशे युगपदुदितदिनकरसहस्रसदृशतेजसि लावण्यामृतमहोदधौ उदारपीवरचतुर्बाहौ अत्युज्ज्वलपीताम्बरे अमलकिरीटमकरकुण्डलहारकेयूरकटकभूषिते अपारकारुण्यसौशील्यसौन्दर्यमाधुर्यगाम्भीर्यौदार्यवात्सल्यजलधावनालोचितवि-

त॥नुसंहितम्। स्वच्छत्वं मणिमुकुरसलिलकाचादिवद्व्यवहितप्रकाशप्रतिबिम्बादियोग्यः प्रसादविशेषः। ''दिवि सूर्यसहस्रस्य' इत्यादि वक्ष्यमाणं 'तमेव भान्तम्' इत्यादिश्रुतिं चाभिप्रेत्योक्तं—युगपदित्यादि। श्रुत्यादिप्रसिद्धं बाहूनामुदारत्वमौर्जित्यमभिमतफलप्रदत्वं च। यत्र रूपान्तरं न विशिष्टं, तत्र वक्तुर्वसुदेवनन्दनस्य रूपं विवक्षितम्; तच्च सर्वावतारोपलक्षणम्। चतुर्भुजत्वं भगवतः कृष्णस्य पररूपस्य सांसिद्धिकम्; द्विभुजत्वं सहस्रभुजत्वादिकं चाहार्यमित्याशयेनोक्तं—चतुर्बाहाविति। 'अथवापि चतुर्भुजं' 'भुजैश्चतुर्भिस्समुपेतमेतद्रूपं विशिष्टं दिवि संस्थितं च। भूमौ गतं पूजयताप्रमेयं सदाहि तस्मिन्निवसामि देवाः' इत्यादिकमिह भाव्यम्। दिव्याम्बरयोगमाह—अत्युज्ज्वलितेति। मूर्धादिपादान्तदिव्यावयवगतसमस्ताभरणवर्गोपलक्षणतया किरीटाद्युक्तिः। 'ध्येयस्सदा' इत्युपक्रम्य 'केयूरवान् मकरकुण्डलवान् किरीटी' इत्यादिकमिह द्रष्टव्यम्। मकरशब्दो मकराकारकुण्डलपरः। तेजःप्राचुर्यं प्रतिकूलैर्दुष्प्रेक्षत्वं चाभिप्रेत्य—युगपदित्यादिकमुक्तम्। लावण्येत्यादिना तु तस्यैवानुकूलभोग्यत्वाकर्षकत्वादिकमभिप्रेतम्। चक्षुरानन्दजनकस्तेजोविशेषो हि लावण्यम्। तत्र इदमुच्यते—'लोचनैरनुजग्मुस्ते तमादृष्टिपथात्पुनः। मनोभिरनुजग्मुश्च कृष्णं प्रीतिसमन्विताः। अतृप्तमनसामेवं तेषां केशवदर्शने। क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः। अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्' 'नहि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात्। नरश्शक्नोत्यपाकृष्टुमतिक्रामति राघवे' इति। अपारेत्यादिना सौलभ्योपयोगिनोऽमितास्सुन्दरत्वादिमिश्रास्समाश्रयणीयत्वेऽत्यन्तापेक्षितास्स्वरूपरूपयोर्गुणा उक्ताः। 'सर्वलोकशरण्याय' 'सुदुष्टो वाऽप्यदुष्टो वा' '"विभीषणो वा सुग्रीव यदि वा रावणस्स्वयम्' इत्यादिकमनुसन्धाय कारुण्यादिफलितमाह—अनालोचितेति।

प्र-पा॥ शिखा स्वान्तर्निहितनीलतोयदा विद्युदिव भातीत्यर्थः'इत्यनुगृहीतः।'नीलतोयदो मध्यस्थो यस्यास्सा नीलतोयदमध्यस्था नीलतोयदस्य मध्ये तिष्ठतीति नीलतोयदमध्यस्था' इति व्युत्पत्तिद्वयानुसारेणापि अस्यार्थं वर्णयन्ति द्रविडवेदान्तविदग्रेसरा॥

१. गी ११-१२॥ २. मु. २-२-१०॥ ३॥ ४॥

५. नारसिंहपुराणे. ६२-१७. गारुडे च. पूर्वं. २२२-३४. 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः। केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः'॥

६॥ ७. श्रीरामायणे. अयो॥

८. श्रीरामायणे. युद्धकाण्डे. १७-स. १५ श्लो॥

९. श्रीरामायणे. युद्ध. १८. स. ५॥

१०. श्रीरामायणे. युद्धकाण्डे. १८-सर्गे. ३५-श्लो॥ 'आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया' इति वाक्यशेषः॥

शं॥किञ्च—मां हि यस्मात् पार्थ व्यपाश्रित्य माम् आश्रयत्वेन गृहीत्वा येऽपि स्युः भवे-

आ॥च्छिद्भक्तिर्भवति। साधारणभक्तिर्वेतरेषाम्। 'स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तिः' इति श्रीविष्णुपुराणे। 'सा श्रद्धधानस्य विवर्धमाना विरक्ति-

ज॥चाराणामपि भगवत्प्रेम्णोऽनुभवसिद्धत्वात्कथं डाम्भिकत्वानुमानमित्यत आह—साधारणेति। अल्पेत्यर्थः। प्रेमानुभवाभावेऽनुमानमुक्तम्; महाभक्त्यभावविषयं वेति भावः।सुदुराचारोऽपि भक्तिलिङ्गवान्महाभक्त एवास्तु; किं डाम्भिकत्वादिकल्पनयेत्यत आह—स इति। शठमतिः—दम्भबुद्धिः। म-

रा॥षाशेषलोकशरण्ये सर्वस्वामिनि तैलधारावदविच्छेदेन निविष्टमना भव। तदेव विशिनष्टि—मद्भक्तः - अत्यर्थमतिप्रियत्वेन युक्तो मन्मना भवेत्यर्थः।पुनरपि विशिनष्टि—मद्याजी—अनवधिकातिशयप्रियमदनुभवकारितमद्यजनपरो भव। यजनं नाम परिपूर्णशेषवृत्तिः। औपचारिकसांस्पर्शिकाभ्यवहारिकादिसकलभोगप्रदानरूपो हि यागः।यथा मदनुभवजनितनिरवधिकातिशयप्रीतिकारितमद्यजनपरो भवसि; तथा मन्मना भवेत्युक्तं भवति।पुनरपि तदेव विशिनष्टि—मां नमस्कुरु-अनवधिकातिशयप्रियमदनुभवकारितात्यर्थ-

ता॥आश्रितसंरक्षणं स्वलाभं मत्वा प्रवर्तत इत्यभिप्रायेणोक्तं—सर्वस्वामिनीति।[1]'कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इत्युक्तम्। [2]'निदिध्यासितव्यः' 'ध्यायीत' [3]'ध्रुवा स्मृतिः' [4]'आवृत्तिरसकृदुपदेशात्' इत्याद्यनुसन्धानेन मनश्शब्दस्यात्र ध्यानाख्यमनोवृत्तिविशेषविषयतामाह—तैलधारेति। 'मय्येव मन आधत्स्वेत्युच्यते' इति। अत्र 'मामेवैष्यसि' इति साध्यगतावधारणात्साधनेऽप्यवधारणं विवक्षितमिति गम्यते। तेन चानन्यमनस्त्वादिक सिद्धम्। ततश्च तैलधारादिवदविच्छेदोऽपि फलित इति भावः। [5]'यमेवैष वृणुते तेन लभ्यः' इति श्रुत्युपबृंहणतामभिप्रेत्याह—तदेवेति। भक्तेरपि ज्ञानविशेषरूपत्वाद्विशेषकत्वमुपपद्यत इत्यभिप्रायेणाह—अत्यर्थेति। स्वतन्त्रार्थान्तरविधानशङ्कानिरासायाह—पुनरपीति। भक्तिस्वरूपविशेषनिष्कर्षपरत्वात्तदसाधारणशास्त्रविशेषप्रतिपादितपूजाविशेषपरोऽयं यजनशब्द इत्यभिप्रायेणाह—यजनं नामेति। शेषवृत्तिः कैङ्कर्यम्। इदं च [6]'पत्रं पुष्पम्' इत्यादिना प्रदर्शितस्य भगवच्छास्त्रप्रपञ्चितस्य सङ्ग्रहशासनम्। अतोऽत्र यजिर्दर्शपूर्णमासादिविषय इति न भ्रमितव्यम्। [8]'यज देवपूजायाम्' इत्येव च पठ्यते। 'देवतामुद्दिश्य द्रव्यत्यागो यागः'इति चाहुः। अग्निहोत्रादिव्यतिरिक्तेष्वपि पञ्चमहायज्ञादिषु यजिर्निरूढः। अन्यत्रापि [9]'कृष्णो वाक्यैरिज्यते सम्मृज्ञानैः' इत्यादयः प्रयोगाः।अतोऽत्र भगवच्छास्त्रादिप्रपञ्चितविषयोऽय यजिरित्यभिप्रायेणाह—औपचारिकेति। औपचारिकाः-नीराजनादयः, सांस्पर्शिकाः-स्रक्चन्दनादयः; आदिशब्देन सान्दृष्टिक दीपादिग्रहणम्। 'मद्याजी' इत्यनेन बाह्यक्रियापरेण मन्मनस्त्वं कथं विशेष्यत इत्यत्राह—यथेति। पुनरपीत्याद्यपि पूर्ववत्। पूर्वोक्तादधिकरूपत्वं दर्शयितुम्—अपर्यवस्यन्नित्यन्तमुक्तम्। अत्यर्थश-

प्र-पा॥१.भार.सभा.४१-२३॥ २ बृ.६-५-६॥ ३. मु. २-२-६ ॥ ४. छा. ७-२६-२ ॥ ५. शारी. ४-१-१. आवृत्तिरसकृदुपदेशात् ॥ आवृत्तिरसकृत्-ब्रह्मप्राप्तिसाधनं वेदनमसकृदावृत्तमेव शास्त्रार्थः- वेदनध्यानशब्दवाच्यमित्यर्थः। कुत:?उपदेशात्-'ओमित्येवात्मानं ध्यायथ' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'आत्मानमेव लोकमुपासीत' 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिनोपासनापर्यायैरुपदेशात्। उपासनञ्च-अविच्छिन्नस्मृतिसन्तानरूपम्-इति सूत्रार्थः॥ ६. कठ. १-२-२३ ॥ ७ गी. ९-२६॥ ८. धातुपाठे. भौवादिक., उभयपदी ॥ ९. भार. आनु १८-६. 'कृष्णो यज्ञै रिज्यते यायजूकैः कृष्णो वीर्यैरिज्यते विक्रमद्भिः। कृष्णो वाक्यैरिज्यते सम्मृज्ञानैः कृष्णो मुक्तैरिज्यते वीतमोहैः ॥

शं॥शुः पापयोनयः पापं योनिः येषां ते पापयोनयः पापजन्मानः—के ते इति? आह—स्त्रियो वैश्याः तथा शूद्राः, तेऽपि यान्ति गच्छन्ति परां प्रकृष्टां गतिम् ॥ ३२ ॥

आ॥मन्यत्र करोति पुंसः'इति च'वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम्।

ज॥हाभक्तेर्दुराचारोपशमहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह—सेति—हरिभक्तिः।इतश्चैवमित्याह—वेदा इति। मम-मया,परस्य गुह्यं न च भिन्नपूर्वम् - पिशुनत्वं नाचरितम्। उपस्थमुदरं पाणि-

**रा॥परं ब्रह्म परं धाम परमं पवित्रम् इति यं श्रुतयो वदन्ति,स हि भवान्।*'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति'†'ब्रह्मविदाप्नोति परं'‡'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति'इति।तथा परं धाम; धामशब्दो ज्योतिर्वचनः,परं ज्योतिः-§'अथ यदतः परो दिवो ज्योतिर्दीप्यते'‖'परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते' + 'तं देवा ज्योतिषां ज्योतिः'इति।तथा च परमं पवि-**

---

**ता॥**तस्य सत्यत्वाध्यवसायेनानसूयुतां च दर्शयति—**परंब्रह्मे**त्यादिभिः।अत्र तावत्'भवान्' इति प्रथमान्तत्वात् 'आहुः' इत्युत्तरत्र न सम्बन्धः, 'पर ब्रह्म' इत्यादीना प्राथम्यादिनोद्देश्यत्वं, 'भवान्' इत्यस्य च विधेयत्वं प्रतीतम्; उद्देश्यस्य च पूर्वमेव सिद्धिरपेक्षिता, तदाह—**यं श्रुतयो वदन्ति, स हि भवानि**ति। त्रिष्वपि क्रमाच्छ्रुतीरुदाहरति।तत्र*'यतो वा'इत्युपास्यब्रह्मलक्षणवाक्यम् ; तत्पुरोवादेनोपास्यं ब्रह्मैव प्राप्यमिति प्रदर्शनाय परशब्दविशेषणसिद्धये च†'ब्रह्मवित्' इति वाक्यमुपात्तम् ।उभयत्रातिस्फुटं वाक्यं‡'सयोह' इति।' ब्रह्मैव भवति ' इत्येतच्छारीरकभाष्ये व्याख्यातम् ।'प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा 'सेयङ्गौः'इति।ब्रह्मात्यन्तसाम्याद्ब्रह्मव्यपदेशो मुख्यप्राय इत्यर्थः।'सेय गौः'इति दृष्टान्तोऽपि साधर्म्यमूलव्यपदेशविषयः।यद्वा 'ब्रह्मैव भवति'इत्यत्राप्येवकार इवशब्दार्थोऽपि स्यादिति केचित्; 'ईववद्वैवमेव' इति निघण्टुसद्भावात्, 'वैष्णवं वामनभालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति ' इत्यादिप्रयोगसद्भावाच्च।नह्यत्र पशुयागमात्रेण विष्णुरेवासौ जातः ; नापि स्पर्धमानस्य मोक्षाधिकारः ; नच विष्णुरेव भवतीति तावदेव फल निर्दिष्टं, किंतु ' इमान् लोकानभिजयति ' इति सांसारिकफलमुक्तम्;अतः पराक्रमादिगुणयोगेन विष्णुरिव भूत्वेमान् लोकानभिजयतीति वाक्यार्थ इति। अतो 'ब्रह्मैव भवति' इति साधर्म्यहेतुकं सामानाधिकरण्यम् । 'परम साम्यमुपैति' इति हि श्रुतिः । वक्ष्यति च ' मम साधर्म्यमागताः ' इति । श्रुतिप्रदर्शनार्थं विषयमुपादाय शोधयति—**तथे**त्यादिना । सामानाधिकरण्यप्रयोगाद्वस्त्वन्तरसामानाधिकरण्यसहपाठाभावाद्भगवतस्तत्तच्छ्रुतिप्रतिपादितपरत्वप्रकार-व्यञ्जने तात्पर्याच्च अत्र धामशब्दस्य स्थानादिपरत्वमयुक्तमित्यभिप्रायेणाह—**धामशब्दो ज्योतिर्वचन** इति । 'विष्णुसंज्ञं सर्वाधारं धाम' इत्यादि धामशब्दप्रयोगेऽपि 'पर धाम' इति विशेषणादर्शनात्पर्यायान्वयमुखेन तत्प्रदर्शयति—**परंज्योतिरि**ति।§'अथ यदतः' इत्यादिवाक्येनाप्राकृतलोकादिविशिष्टत्वं 'पादोऽस्य सर्वा भूतानि'इत्यादिव्यपदेशवशसिद्धपुरुषसूक्तप्रकरणैकार्थ्याच्च समीहितमखिल सिद्धम्;‖'परंज्योतिरुपसंपद्य'इति वाक्येन मुक्तप्राप्यत्वादिकम्,'परंज्योतिः' इति विशिष्टप्रयोगश्च सिद्धः। + 'तं देवा ज्योतिषां ज्योतिः' इत्यादिना देवोपास्यत्वमुखेन ज्योतिषां ज्योतिष्ट्वेन च परत्वमर्थलब्धम् । भगवदसा-

---

**प्र-पा ॥** *तै. भृगु. १ ॥
† तै. आन. १ ॥
‡ मुण्डको. ३-२-९ ॥ 'सयोह्वै...भवति । य एतत्परमं ब्रह्म वेद, 'वेदनन्ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ । साच दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति' इत्युक्तरीत्या प्रीतिरूपापन्नदर्शनसमानाकारोपासनयुक्तो भवति-आविर्भूतब्राह्मरूपो भवतीत्यर्थः' इति रङ्गरामानुजीये ॥

§ छा. ३-१३-७ ॥ ‖ छा. ८-१२-२ ॥
+ बृ. ६-४-१६ ॥ १. श्री-भा. १-१-१ ॥
२. ॥
३. यजुषि २-काण्ड. १-१७ ॥
४. मु. ३-१-३ ॥
५. गी. १४-२ ॥
६ ॥
७. छा. ३-१२-६ ॥

---

**शां॥वं सर्वदेवानाम् आदौ भवम् आदिदेवम् अजं विभुं विभवनशीलम् ॥ १२ ॥**

रा॥त्रं,परमं पावनं;स्मर्तुरशेषकल्मषाश्लेषकरं, विनाशकरं च। *'यथा पुष्करपलाश आपो नश्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' †'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य-सर्वे पाप्मानः प्रदूयन्ते'‡'नारयण परं ब्रह्म तत्त्वं नारयणः परः।नारयण परो ज्योतिरात्मा नारायणः परः'इति हि श्रुतयो वदन्ति। ऋषयश्च सर्वे परावरतत्त्वयाथात्म्यविदस्त्वामेव

ता॥धारणं परमशब्दविशेषितं पावनत्व दर्शयितुं पवित्रशब्दस्यात्र संज्ञात्वव्युदासायाह—**परमं पावन-मिति**।**नाशकर**मित्यत्र कल्मषशब्दो बुद्ध्या निष्कृष्यानुसन्धेयः।प्रदूयन्ते-नश्यन्तीत्यर्थः।सूत्रं च'तदधिग-म उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति। तत्त्वनिर्णयैकतत्परनारायणानुवाकवाक्येनापि परब्रह्म-त्वादिकं 'भवान्'इति निर्दिष्टदेवताविशेषस्यैव संवादयति—**नारायणे**ति। अनयोर्वाक्ययोः प्रथमौ ना-रायणशब्दौ लुप्तविभक्तिकौ, 'तत्त्वं नारायणः परः' इत्यादिसहपाठवशाद्व्यस्तत्वं प्रथमान्तत्वं च प्राप्तम्। तथैव सविभक्तितया श्रुत्यन्तरेऽधीयते 'नारायणः परं ब्रह्म' इत्यादि। एतेन पञ्चमीसमासतां वदन् भग-वद्द्वेषी प्रत्युक्तः, सर्वश्रुतिस्मृतिसूत्रन्यायविरोधाच्च । **इति हि श्रुतयो वदन्ती**त्यत्र'यतो वा इमानि' इत्यादिकमखिलमन्वेतव्यम् , मध्ये तत्तदर्थवैशद्यायावान्तरवाक्यम् । एवं श्रुतिसिद्धोऽर्थः स्मृतीति-हासपुराणायमानमहर्षिवचनाच्छ्रुतिवदन्यानपेक्षसर्वज्ञवचनाच्च सिद्ध इत्याह—'पुरुषम्' इति सार्धेन । सर्वशब्देनाविगीतत्वं विवक्षितम् । **परावरतत्त्वयाथात्म्यविद्** इति ऋषिशब्दाभिप्रेतोक्तिः । तेना-प्ततमत्वमुक्तं भवति । 'त्वाम्' इत्येतद्ब्रह्मरुद्रादिविशेषान्तरव्युदासार्थमित्यभिप्रायेण—**त्वामेवे**त्युक्तम् ।

**प्र-पा** ॥ *छा.उप. ४-१४-३॥'लोकान्वाव किल सोम्य तेऽवोचन् अहन्तु ते तत् वक्ष्यामि यथा पुष्कर-...न श्लिष्यते इति । हे सोम्य, ते-अग्नयः, पृथि-व्यादीन् लोकान् एव तवोक्तवन्तः, नतु ज्ञातव्यम्ब्र-ह्म कात्स्न्येंन । अहन्तु ते पद्मपत्रजलाश्लेषतुल्यसर्वपा-पाश्लेषापादकविद्याविषयभूतं ब्रह्म वक्ष्यामि,यदि शुश्रूष-स इत्यर्थः । पापाश्लेषो नाम-पापहेतुभूतकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्त्वम् । इदं च प्रामादिक-पापविषयमिति-४-१-१३-भाष्यकारैरेवोक्तम् । पाप-शब्दश्च-सुकृतदुष्कृतसाधारणः ॥

† छा. उप ५-२४-३ ॥ 'तद्यथेषीकतूलं... प्रदूयन्ते ' । यथा इषीकायाः - मुञ्जान्तर्वर्तितृणविशे-षस्य तूलम्, अग्नौ प्रक्षिप्तं सद्यो दह्यते ; एवं सर्वा-णि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्तीत्यर्थः । ब्रह्मोपासनफलस्य सर्वपाप-प्रदाहस्य प्राणाग्निहोत्रे कीर्तनमङ्गिफलेनाङ्गस्य स्तु-त्यर्थम् ॥

‡ तै. नारा. ११-३ ॥

१. ब्रह्मसूत्रम् . ४-१-१३ ॥ 'तदधिगम .व्य-पदेशात्' । अस्यार्थः-उपासने प्रारब्धे तत्सामर्थ्यादेव, पूर्वकृताघनाशः, उत्तराघाश्लेषश्च भवति । 'एवं हा-स्य सर्वे पाप्मानः प्रदूयन्ते' 'एवमेवंविदि पापं क-र्म न श्लिष्यते' इति श्रुतेः । अघस्याश्लेषकरणन्नाम वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रति - बन्धकरणम् । अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं, प्रत्यवायञ्च कुर्वन्ति । अघस्य विनाशकरणम्-उत्पन्ना-यास्तच्छक्तेर्विनाशकरणम् । पापञ्च भगवन्निग्रहरूपं हि । 'यस्त्वाप्रियन्तदिह पुण्यमपुण्यमन्यत्' इति कूरे-शमिश्रैरनुगृहीतम् । तदेवं विद्यावेदितुर्वेद्यार्थप्रिय-त्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरु-षाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्री-तिं विनाशयति ; सैव विद्या स्वोत्पत्त्युत्तरकालभा-व्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिञ्च प्रतिबध्नाति । इदञ्च प्रामादिकविषयम्मन्तव्यम् । 'नाविरतो दुश्च-रितात्' इत्यादिभिः आप्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरति-निष्पाद्यत्वावगमात्—इति ॥

२. महोपनिषदि. ११॥ ३. तै. भृगु. १ ॥

शं ॥ **ईदृशम् आहुः कथयन्ति त्वाम् ऋषयः वसिष्ठादयः सर्वे देवर्षिः नारदः तथा ।**

**रा॥शाश्वतं दिव्यं पुरुषमादिदेवमजं विभुमाहुः; तथैव देवर्षिर्नारदः असितो देवलो व्यासश्च । *'ये च वेदविदो विप्रा ये चाध्यात्मविदो जना। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् । पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् । त्रैलोक्यं पुण्डरीकाक्षो देवदेवस्सनातनः । आस्ते हरिरचिन्त्यात्मा**

**ता॥**यद्वा अवतीर्णं त्वामेवेत्यर्थः।**शाश्वतं** नित्यम्, **दिव्यं**-परमव्योमनिलयम् ,**पुरुषं**—'[१]परात्परं पुरिशयं पुरुषमीक्षते' इत्यादिप्रतिपादितम् । 'शाश्वत दिव्य पुरुषम्' इति व्युत्क्रमोपादानं दिवि वर्तमानस्य पुरुषस्य पुरुषसूक्तोदितामृतत्रिपाद्विभूतिविशिष्टवेषेण शाश्वतत्वमिह विवक्षितामिति व्यञ्जनार्थम्। आदिश्चासौ देवश्चेत्यादिदेवः-जगत्कारणभूतः क्रीडारूपजगद्व्यापारश्रेत्यर्थः । स्मरन्तिच '[२]क्रीडतो वालकस्येव' '[३]क्रीडा हरेरिदं सर्वं' '[४]बालः क्रीडनकैरिव' इति । सूत्रितं च '[५]लोकवत्तु लीला कैवल्यम्' इति। एतेन ब्रह्मादीनामपि देवजात्यनुप्रविष्टानां परमपुरुषलीलोपकरणत्वं कार्यत्वं चोक्तं भवति। '[६]नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' '[७]एको हवै नारायण असीन्न ब्रह्मा नेशानः' '[८]तस्माच्च

**प्र-पा ॥** *भार-आरण्य. ७६-२६, २७, २८॥

१. प्रश्नोप. ५-५ ॥

२. वि. पु. १-२-१८ ॥ 'व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च । क्रीडतो बालकस्येव चेष्टान्तस्य निशामय' ॥

३ ॥

४. भारते. सभाप. ९०-३१ ॥ 'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥ अस्यार्थः-'अप्रमेयत्वं- परिपूर्णत्वम् । अनियोज्यत्वम्-अनितरचेतनप्रेर्यत्वम् । 'यत्र कामगमः' इत्यनेन वायूदकादिप्रेरणाधीनाबुद्धिपूर्वकस्पन्दादिचेष्टाव्यावृत्तिः । स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा । स्वाधीनलीलोपकरणत्वं-वशि शब्दार्थः । विश्वं वशं यस्य-स वशी । इन्द्रियपराधीनचेष्टाव्यावृत्त्यर्थो वा-वशिशब्दः । बालकदृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम् । अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः । कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं 'क्रीडनकैः' इत्यनेन फलितम्' इति श्रीभाष्यमङ्गलश्लोकस्य 'लीला' पदव्याख्यानावसरे श्रुतप्रकाशिकायामुक्तः ॥

५. ब्रह्मसूत्रम् . २-१-३३ ॥ 'लोकवत्तु लीलाकैवल्यम्' । 'तु' शब्दः-शङ्कानिवृत्यर्थः । अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसङ्कल्पनिकार्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवला प्रयोजनम् । लोकवत्-यथा लोके सप्तद्वीपामेव मेदिनीमधितिष्ठतः सम्पूर्णशौर्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते ; तथैव परस्यापि ब्रह्मणः स्वसङ्कल्पमात्रावकृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति सूत्रार्थः ॥

६. नारायणोप. १ ॥ ७. महोप. १-१ ॥

८. मुण्डकोप. २-१-७ ॥ तस्माच्च देवाः...वयासि।प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ बहुधा-कर्मजाजानजादिभेदात् बहुधेत्यर्थः, वयांसि-पक्षिणः, यवः-दीर्घशूकधान्यविशेषः, व्रीहियवशब्दो धान्यमात्रोपलक्षकः, तपः-कृच्छ्रादिलक्षणम् , श्रद्धा-आस्तिक्यबुद्धिः , सत्यं-सत्यवचनम् , ब्रह्मचर्यं-स्त्रीसङ्गादिराहित्यम्, विधीयत इति विधिः, नित्यनैमित्तिकादिः ॥

**आ॥ब्रह्म परिपूर्णम् । 'अथ कस्मादुच्यते परं ब्रह्म…बृहति बृंहयति' इति च श्रुतिः। 'बृह बृहि वृद्धौ' इति पठन्ति, 'परमं यो महद्ब्रह्म' इति च । विविधमासीदिति विभुः ।**

**जा॥**ब्रह्मविभुशब्दावैकार्थ्यपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे—**ब्रह्मेति** । परं वस्तु ब्रह्मेति कस्मात् , उच्यते —बृहति-पूर्णं भवति । बृंहयति पूरयति चान्यान् । बृहतेर्मन्प्रत्ययोऽमागमश्च । ईश्वरो ब्रह्मणोऽन्यः, स कथं परं ब्रह्मेत्युच्यत इत्यत उक्तं—**परममिति** । विविधमनेकरूपत्वेनाभवत् मे ह-

रा॥तत्रैव मधुसूदनः*एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः।नागपर्यङ्कमुत्सृज्य ह्याग-

ता॥देवा बहुधा संप्रसूतास्साध्या मनुष्याः पशवो वयांसि' 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ' 'आवां तवाङ्गे सभूतौ'इत्याद्याः।कारणवाक्यार्थ उक्तः, शोधकवाक्यार्थमुपलक्षयति—अजमिति। कर्मकृतजन्मादिरहितमित्यर्थः। स्वरूपापेक्षया वा निर्विकारत्वमुच्यते। विभुम्-'आकाशवत्सर्वगतश्च नित्यः' इति प्रक्रियया व्याप्तं; नियन्तारमिति वा, एतेन कारणत्वाद्यनुगुणव्याप्तिनियमनादिकमन्तर्यामिब्राह्मणादिसिद्धं स्मारितम्।एतैः पदैः'एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः'इति श्रुतिस्सूचिता। सर्व इति सामान्यतस्संग्रहेऽप्यासततमत्वविवक्षया नारदादेः पृथगभिधानम्। देवर्षिशब्देन जात्यापि सत्त्वोत्तरत्वं प्रकाश्यते। तत्राप्यसौ 'देवर्षीणां च नारदः' इति प्रकृष्टः। असितः, देवलश्च तस्य पिता। व्यासश्चात्र भगवान् पाराशर्यः। 'आहुस्त्वामृषयस्सर्वे' इत्यादिकं संवादयति—येचेति। वेदविदः-कर्मभागवेदिनः, अध्यात्मविदः वेदान्तार्थवेदिनः। कृष्णं महात्मानं सनातनं धर्मं वदन्तीत्यन्वयः। महात्मशब्देन सर्वातिशायिपरमैश्वर्यादिकं विवक्षितम्, महानात्मेति परमात्मत्वं वा, 'स वा एष महानज आत्मा' इत्यादेः। यागदानादयो हि देशकालादिपरिमितफलदायिनः, स्वयं चानित्याः; अयं तु नित्यनिरतिशयफलदायी, नित्यश्चेति सनातनशब्देन धर्मस्य विशेषणम्। पवित्रशब्दोऽत्र पापनिबर्हणपरः। पुण्यशब्दोऽभिमतफलविशेषसाधनपरः। मङ्गलशब्दश्च स्वसन्निधिमात्रेणातिसमृद्धिहेतुभूतकल्याणवस्तुपरः। 'त्रैलोक्यं पुण्डरीकाक्षः' इति कार्यकारणभावेन शरीरात्मभावेन वा सामानाधिकरण्यम्। त्रयो लोकास्त्रैलोक्यम्—बद्धमुक्तनित्या इत्यर्थः। यद्वोपलक्षणतया भूम्यन्तरिक्षादिकमुच्यते। पुण्डरीकाक्षशब्देन अन्तरादित्यविद्याप्रतिपादितविलक्षणविग्रहत्वं दर्शितम्। 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यस्य च वाक्यस्य द्रमिडभाष्योदितेषु षट्स्वर्थेषु सिद्धान्तत्वेन भाष्यकारपरिगृहीतास्त्रयोऽर्थाः। तथाहि वेदार्थसग्रहे दर्शितं 'गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकर-

प्र-पा॥ * भार-आरण्य. ८६-२४, २५॥

१. भा-शा-मो. ३५०-१९॥

२ हरिवंशे, विष्णुप. १३२-४८॥क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवान्तवाङ्गे सम्भूतौ तस्मात्केशवनामवान्' इदं श्रीकृष्णस्य कैलासयात्रायां श्रीकृष्णस्तोत्रे रुद्रेणोक्तम्॥

३॥ ४. सुबाल, ७-ख॥

५. गी. १०-२६॥

६. बृ. उप. ६४॥ 'स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु य एवं वेद॥ २४॥ स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्माऽभयं वै ब्रह्माऽभयं हि वै ब्रह्म भवति य एवं वेद'२५ सः-पूर्वोक्तं परब्रह्मैव, अन्नाद.-अन्नदः, वसुदानः-वसुप्रदः, य एवं वेद-अनेनाकारेण ब्रह्मोपासीनाः, विन्दते वसु-अन्नञ्च वसु च लभत इत्यर्थः॥ २४॥ स एष महानज आत्मा-परमात्मा, जरामरणशून्यः, अतः-असंसारी, अत एव भयशून्यः, एवम्भूतोऽयमात्मा, ब्रह्म-निरतिशयबृहदित्यर्थः, तत्र हेतुमाह-अभयं वै ब्रह्मेति। 'अमृतमभयमेतद्ब्रह्म' इति निरुपाधिकाभयत्वाश्रयस्य परब्रह्मत्वप्रसिद्धेरिति भावः। तज्ज्ञानस्य फलमाह-अभयं हि वै ब्रह्म भवतीति। ब्रह्म भवति-आविर्भूतब्रह्मरूपो भवतीत्यर्थः॥

७. भा-आरण्य. ८६-२८॥

८. छा. १-६-७॥ ९. वेदार्थसङ्ग्रहे॥

आ॥तथा हि वारुणशाखायां—'विभुः प्रभुः प्रथमं मेहनावतः' इति, 'स ह्येव प्राभव-

ज॥नावतः सेचकस्य भगवतः प्रथमं रूपं विभु प्रभु चेत्येतदनूद्य व्याख्यायते। प्राभवत्समर्थोऽभवदिति प्रभुः; विविधोऽभवदिति विभुः। 'सोऽकामयत' इति विविधभवने श्रुत्यन्तरम्। 'विप्रसम्भ्यो ह-

रा॥तो मधुरां पुरीम्।पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः।साक्षाद्देवः पुराणोऽसौ स हि धर्मस्सनातनः'; तथा *'यत्र नारायणो देवः परमात्मा सनातनः। तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च। तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम्। तत्र देवर्षयस्सिद्धास्सर्वे चैव तपोधनाः। आदिदेवो महायोगी यत्रास्ते मधुसूदनः। पुण्यानामपि तत्पुण्यं माभूत्ते संशयोऽत्र वै। कृष्ण एव हि लोकानामुत्पत्तिरपिचाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इति। तथा स्वयमेव ब्रवीषिच 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' इत्यादिना 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' इत्यन्तेन॥ १२ ॥ १३ ॥

---

ता॥विकसितपुण्डरीकदलामलायतेक्षणः'इति। इदं च वरदगुरुभिस्तत्त्वसारे प्रपञ्चितम्। नारायणशब्देन परतत्त्वनिर्णयैकपरनारायणानुवाकसूचनम्। 'श्रीमान् क्षीरार्णवनिकेतनः' इत्याभ्यां 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'अम्भस्यपारे' 'यैमन्तस्समुद्रे' इत्यादिकं स्मारितम्। 'उत्सृज्यागतः' इत्यवतारमात्रत्वं विवक्षितम्, कृष्णावतारदशायामपि क्षीरार्णवगतनागपर्यङ्कशायिविग्रहस्य तत्रैव स्थितत्वात्। **साक्षा-** **दिति**—न त्वौपचारिकः आत्मान्तरव्यवहितो वेत्यर्थः। **तथे**ति—प्रकरणान्तरत्वव्यक्त्यर्थम्। 'देवर्षिर्नारदस्तथा' इति व्याख्येयविभागावगमात्तदुक्तवाक्योपादानमपि तथाविभागेन कुर्मह इति च दर्शितम्। 'तत्र कृत्स्नम्' इत्यादि नारायणस्यैव सर्वाश्रयत्वात्सर्वप्रकारातिशययोगित्वाद्वा। 'तत्पुण्यम्' इत्यादिकं ब्रह्मशब्दानुरोधेन नारायणविषयं वा, प्रकरणविशेषेण तदाश्रितस्थानप्रशंसनं वा। **स्वयमे-** **वे**ति—स्वतस्सर्वज्ञो ब्रह्मादीनामपि गुरुस्त्वमेवेत्यर्थः। 'भूमिरापः' इत्यादिषु सर्वशेषित्वं सर्वकारणत्वं सर्वशरीरित्वमित्यादिकमुक्तम्॥ १२ ॥ १३ ॥

---

**प्र-पा** ॥ * भार-सभा. ४९-२३ ॥

१. तत्त्वसारे श्रुतप्रकाशिकाचार्याणां गुरुवर्यैर्वरदाचार्यैः-'कपिस्त्वादित्य कम्पित किरणैरित्यपिकपिबभस्तीत्याम्नातस्स कपिरमुनास्तं यदिह तत्। प्रतीमः कप्यासं दिवसकरतेजोविकसितस्स पद्मः श्रीमत्त्वादगणि भगवच्चक्षुरुपमा ॥ १९ ॥ नालंकपिर्भवति कम्पिबतीति तस्मिन् यस्यासमासनमुशन्ति मनीषिणस्तत्। कप्यासमुज्ज्वलमुदारमिदं सरोजश्चक्षुर्निदर्शनमुदीरितमीश्वरस्य ॥ २० ॥ कमुदकमिह प्यासो यस्याऽऽसनं यदिवोद्भवः कविभिरुदितं कप्यासं तद्गम्भीरजलोदयात्। शिशिरमधुरं श्रीमद्दामोदराक्षिनिदर्शनं भवति नलिनं लुप्ताकारस्त्वपिः पिहितादिवत्॥ २१ ॥ कप्यासं भानुबिम्बं हरिभजनपदं हृत्सरोजञ्च यद्वत् तद्वच्चोपासकाक्षिद्वयमिति तु नसत् तत्र यत्पुण्डरीकम्। गौणन्तस्याक्षिणी इत्युभयपदनिराकाङ्क्षतानादरेणाप्यध्याहारस्समानाधिकृतपदगतिव्यक्तिरूध्वैन्तदुक्तिः॥ २२ ॥ कश्चिज्जल्पति मर्कटस्य जघनं कप्यासमक्ष्णोरयं दृष्टान्तः कथमिष्यते भगवतस्सत्येव गत्यन्तरे। सामानाधिकरण्यमत्र पदयोः प्रासङ्गतस्त्यज्यते पद्मश्चेद्विशिनष्टि तत्सदृशि तच्छब्दस्तु गौणस्तव॥ २३ ॥दराविकसितं पद्मं कप्यासमाह गतिस्त्वियम्भवति भगवच्चक्षुर्दृष्टान्तपङ्कजसङ्गता। तदपि च न सत् तस्मिन्नर्थे यतो नतु कुत्रचित् तदवयवशस्संहत्यावा पदं व्युदपद्यत ॥ २४ ॥ षट्स्वर्थेषु समीरितेषु चतुराः कप्यासवाचस्त्रयः गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजाङ्गीकृताः। तत्स्वीकारबहिष्कृतास्तदितरे हेयास्त्रयस्तद्विदा श्लोकैः षड्भिरमीभिरित्थमुदितस्सोऽयं विभागो मया ॥ २६ ॥ इति प्रपञ्चितमित्यर्थः। अयमर्थश्च-श्रुतप्रकाशिकायाम् अन्तरधिकरणे वेदार्थसङ्ग्रहव्याख्याने च श्रीव्यासार्यैर्विस्तरेण प्रपञ्चितस्तत्रैव द्रष्टव्यः ॥

२. यजुपि. आरण्य. ३-१३॥ ३. तैना. १, ३ ॥ ४. गी. ७-४ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥** १४

रा॥अतस्सर्वमेतद्यथावस्थितवस्तुकथनं मन्ये, न प्रशंसाद्यभिप्रायम्; यन्मां प्रत्यनन्यसाधारणमनवधिकातिशयं स्वाभाविकं तवैश्वर्यं कल्याणगुणानन्त्यं च वदसि । अतो भगवन्—निरतिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधे, ते व्यक्तिं-व्यञ्जनप्रकारं, नहि परिमितज्ञाना देवा दानवाश्च विदुः ॥ १४ ॥

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥** १५

हे पुरुषोत्तम आत्मना आत्मानं-त्वां स्वयमेव-स्वेनैव ज्ञानेन वेत्थ; भूतभावन-

ता॥सङ्गत्यर्थमाह—**अत**इति । आप्ततमैराम्नायैर्महर्षिभिर्भवतापि चोक्तत्वादिति भावः । 'ऋतं मन्ये'इत्यस्याभिप्रेतमाह—**न प्रशंसाद्यभिप्राय**मिति।अन्येषु हि तद्गुणारोपणेन प्रशंसेत्यभिप्रायः।'माम्'इत्यनेन 'शिष्यस्तेऽहं शाधि मा त्वा प्रपन्नम्' इत्यादिकमभिप्रेतम् । वदिरिह शिष्टमनुवदन् शास्त्यर्थे वर्तमानो द्विकर्मकः । एव शिष्टस्यानुभाषणं शासनविशेषप्रार्थनार्थम् । **अनन्यसाधारणमनवधिकातिशय**मिति विशेषणाभ्यां समाधिकराहित्यम् , **स्वाभाविक**मित्यनन्याधीनत्वं विवक्षितम् । अतो न विदुरित्यन्वयः । 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' इति भगवत्पराशरवचनानुसारेण देवादिभिरवेद्यत्वाय भगवच्छब्दार्थं दर्शयति—**निरतिशयज्ञाने**त्यादिना । व्यक्तिशब्दोऽत्र 'किमात्मिकैवैषा भगवतो व्यक्तिः' इत्यादिष्विव न विग्रहादिपरः, अप्रसक्तत्वादनन्तरं चापृच्छ्यमानत्वात्; अतो 'वक्तुमर्हस्यशेषेण' इत्यनन्तरं विवक्षोः 'अन्ये त्वत्प्रतिपादनप्रकारमपि न जानन्ति, किं पुनः प्रत्यक्षादिवत्प्रकाशनम्' इत्ययमर्थोऽपेक्षितत्वात्स्वीकार्य इत्यभिप्रायेणाह—**व्यञ्जनप्रकार**मिति । 'अक्षरक्षरयोर्व्यक्तिमिच्छाम्यरिनिषूदन । उपलब्धुम्' इतिवत् । **परिमितज्ञाना** इति शब्दतात्पर्योक्तिः ॥ १४ ॥

देवादीनां भगवद्वैभवे वक्तृत्वयोग्यता प्रतिक्षिप्ता , अथ भगवत एव स्ववैभववचनयोग्यतामाह —'**स्वयमेव**' इतिश्लोकेन । अत्र 'पुरुषोत्तम' इति संज्ञा ; शेषं तु तत्संज्ञान्वयौपयिकगुणपरमिति विभजनाय पूर्वमेव-**हे पुरुषोत्तमे**त्युक्तम्। अत्र'त्वमेव त्वां वेत्थ योऽसि सोऽसि'इति श्रुतिस्मरणाद्यभिप्रायेण'आत्मानम्'इत्यस्य **त्वा**मिति प्रतिपादनम्।'स्वयमेव' इत्यनेन फलितोक्तिः—**स्वेनैव ज्ञानेने**ति। **आत्मना**—अन्यैरननुगृहीत इत्यर्थः । यथान्येषा 'मत्तस्स्मृतिर्ज्ञानम्' इति; न तथास्येति भावः । यद्वा 'आत्मना' इत्यस्य व्याख्या—**ज्ञानेने**ति,'आत्मा जीवे'इत्यारभ्य 'यत्नेऽर्केऽग्नौ मतौ वायौ' इति पा-

प्र-पा ॥ १. गी. २ ७ ॥
२ वि. पु. ६-५-७९ ॥
३ ॥
४. यजुषि. काठके १-३-१ ॥
५. गी. १५-१५ ॥
६ ॥

शं॥असितः देवलोऽपि एवमेवाह, व्यासश्च । स्वयं चैव त्वं च ब्रवीषि मे ॥ १३ ॥

सर्वमेतत् यथोक्तम् ऋषिभिः त्वया च, एतत् ऋतं सत्यमेव मन्ये,यत् मां प्रति वदसि भाषसे हे केशव । न हि ते तव भगवन् व्यक्तिं प्रभवं विदुः देवाः, न दानवाः ॥

यतः त्वं देवादीनाम् आदिः, अतः—स्वयमेव आत्मना आत्मानं वेत्थ त्वं निरतिश-

रा॥सर्वेषां भूतानामुत्पादयितः, भूतेश- सर्वेषां भूतानां नियन्तः, देवदेव-दैवतानामपि परमदैवत - यथा मनुष्यमृगपक्षिसरीसृपादीन् सौन्दर्यसौशील्यादिकल्याणगुणगणैर्दैवतान्यतीत्य वर्तन्ते , तथा तानि सर्वाणि दैवतान्यपि तैस्तैर्गुणैरतीत्य वर्तमान, जगत्पते-जगत्स्वामिन् ॥ १५ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६

दिव्याः-त्वदसाधारण्यो विभूतयो याः, तास्त्वमेवाशेषेण वक्तुमर्हसि - त्वमेव व्यञ्जयेत्यर्थः । याभिरनन्ताभिर्विभूतिभिः - यैर्नियमनविशेषैर्युक्त इमान् लोकांस्त्वं

ता॥ठात्।भावनशब्दस्य चिन्ताद्यर्थपरत्वव्युदासायाह-उत्पादयितरिति। भूतेशजगत्पतिशब्दयोः पौनरुक्त्यशङ्काव्युदासाय नियन्तृत्वस्वामित्वकथनम् । रक्षणे व्युत्पन्नस्यापि पतिशब्दस्य शेषित्वे रूढिः । 'स कारणं करणाधिपाधिपः' 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्' । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्'इति श्रुतिसिद्धाश्चत्वारोऽर्थाः'भूतभावन' इत्यादिभिश्चतुर्भिः प्रतिपाद्यन्त इति ज्ञापनाय—दैवतानामपि परमदैवतेति श्रुतिगतैः पदैर्व्याख्यातम् । देवशब्दस्य जातिविशेषवाचकत्वेन प्रतिसम्बन्धिशब्दत्वाभावात् द्वितीयो देवशब्द उत्कर्षविशेषविषयतया औपचारिक इति मुख्यगौणानुगतमुपचारनिमित्तं दर्शयति —यथेति। अन्योन्यवैलक्षण्यस्याकिंचित्करत्वायात्यन्तवैलक्षण्यज्ञापनाय च मृगपक्षिसरीसृपग्रहणम् । यथा देवादीनां कीटः, तथा परमात्मनो देवा अपि। 'कीटास्समस्तास्सुराः इष्टे यत्र' इति ह्याहुः। सौन्दर्यसौशील्येति-विग्रहगुणानामात्मगुणानां चोपलक्षणम् ॥ १५ ॥

आत्मशब्दोऽन्यविभूतित्वव्युदासार्थ इत्याह—त्वदसाधारण्यइति। 'विभूतयः'इति प्रथमान्तत्वेन 'वक्तुमर्हसि'इत्यनेन अन्वयायोगात्—विभूतयो याइति यच्छब्दाध्याहारः।यतो दिव्याः,अतोऽवश्यवक्तव्याः; अतस्त्वं वक्तुमर्हसीति वाक्यावृत्तिज्ञापनार्थः।'अर्हसि' इति योग्यत्वनिर्देशेन तत्प्रार्थनं विवक्षितम्।ईश्वरेणाप्यशेषेण वक्तुम्,अर्जुनेन च श्रोतुमशक्यत्वाद्वचनतः प्रसादतश्च प्रकाशनमात्रमिह प्रार्थ्यते; 'न हि ते भगवन् व्यक्तिम्' इति हि पूर्वमुक्तमित्यभिप्रायेणाह—त्वमेव व्यञ्जयेत्यर्थ इति । बहुवचनासङ्कोचात्'अशेषेण'इतिनिर्देशाच्च आनन्त्यमिह विवक्षितम्।'नास्त्यन्तो विस्तरस्य' इत्याद्युत्तरवशाच्चेत्यभिप्रायेण—अनन्ताभिरित्युक्तम्। विपूर्वो भवतिः भावप्रत्ययान्तो नियमनवाचीत्युक्तम्।नचान्यार्थान्तरं घटते, नियन्तव्यसामानाधिकरण्याद्यभावादित्यभिप्रायेण—यैर्नियमनविशेषैरित्युक्तम्।प्रभूतनियमनविषये कौतुकातिरेकद्योतनाय विशेषशब्दः । तृतीयाया इह करणाद्यर्थत्वायोगादित्थंभूतलक्षणार्थत्वं विवक्षितमित्यभिप्रायेण—युक्त इत्युक्तम्।अत्र विभूतिशब्दस्य नियन्तव्यपरत्वेऽश्वत्थादीनां न लोकव्याप्तिकारणत्वं,नच तद्विशिष्टस्य, तैस्सह वा तदितरव्याप्तिः; नच व्याप्तौ नियन्तव्यानाम् इत्थंभूत-

प्र-पा ॥ १. श्वे. ६-८ ॥ २. श्वे. ६-७ ॥ ३. गी. १०-१४ ॥

शं॥यज्ञानैश्वर्यबलादिशक्तिमन्तम् ईश्वरं पुरुषोत्तम।भूतानि भावयसीति भूतभावन।भूतेश भूतानाम् ईश । हे देवदेव जगत्पते ॥ १५ ॥

आ॥द्विविधोऽभवत् ' इति।'सोऽकामयत बहु स्यां प्रजायेय' इत्यादेश्च॥१२॥१३॥१४॥१५॥

ज॥संज्ञायाम्' इति च स्मृतिः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

रा॥नियन्तृत्वेन व्याप्य तिष्ठसि ॥ १६ ॥

कथं विद्यामहं योगी त्वां सदा परिचिन्तयन् ।
केषुकेषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७

अहं योगी—भक्तियोगनिष्ठस्सन् भक्त्या त्वां सदा परिचिन्तयन्- चिन्तयितुं प्रवृत्तः चिन्तनीयं त्वां परिपूर्णैश्वर्यादिकल्याणगुणगणं कथं विद्याम्?; पूर्वोक्तबुद्धिज्ञानादिभावव्यतिरिक्तेष्वनुक्तेषु केषुकेषु च भावेषु मया नियन्तृत्वेन चिन्त्योऽसि ॥ १७ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८

*'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' इति संक्षेपेणोक्तं तव स्रष्टृत्वादियोगं वि-

ता॥लक्षणत्वं, नैरर्थक्यात्; नियमनविशेषाणां तु श्रुत्यनुसारादाकाशादिव्याप्तिव्यवच्छेदार्थत्वाच्च तदुपपत्तिरित्यभिप्रायेणाह—नियन्तृत्वेन व्याप्येति। 'अन्तः प्रविष्टश्शास्ता जनानाम्'[1] 'अन्तरो यमयति'[2] 'अन्तर्याम्यमृतः' इत्यादिभिश्श्रूयते। 'व्याप्य तिष्ठसि' इत्यनेन 'व्याप्य नारायणः स्थितः'[3] इति श्रुतिः स्मारिता ॥ १६ ॥

योगिशब्दः प्रकरणविशेषात् ' त्वां सदा परिचिन्तयन्' इत्यादेस्सामर्थ्याच्च योगिविशेषविषय इत्याह—भक्तियोगनिष्ठस्सन्निति । सन्नित्यनेन निष्पन्नयोगिपरत्वमपि व्यावर्तितम् । अत्र 'योगिन्' इति परेषां पाठोऽनार्षः। 'सदा' इतिविशेषणसामर्थ्यात्—भक्त्येति सिद्धम्। वेदनात्पूर्वं चिन्तनाऽशक्तेः, 'कथं विद्याम्' इत्यस्य चिन्तनहेतुत्वात् 'लक्षणहेत्वोः क्रियायाः'[5] इति शतुरनुशासनाच्च— चिन्तयितुं प्रवृत्त इत्युक्तम् । 'त्वाम्' इति धर्मिविशेषस्य प्रतिपन्नत्वात्प्रकारविशेषेषु बुभुत्सेति ज्ञापनायोक्तं— परिपूर्णेत्यादि । प्रश्नो ह्यज्ञातविशेषज्ञापनार्थ इत्यभिसन्धायोक्तं—पूर्वोक्तेत्यादि । 'भावेषु' इति सप्तम्यभिप्रेतोक्तिः, प्रकृतानुकर्षणं वा—नियन्तृत्वेनेति ॥ १७ ॥

प्रतिकूलजनानां नरकादिगमयितृत्वात् अनुकूलजनैः स्वाभिलषितं याच्यमानत्वाद्वा जनार्दनः । विस्तरबुभुत्साहेतुज्ञापनार्थं योगशब्दविवक्षितव्यक्त्यर्थं च भूयश्शब्दफलितमाह—अहं सर्वस्येति। अमृ-

प्र-पा॥*गी. १०-८॥ १. यजु. आरण्य ३ १०॥ २. बृ ५-७; शतपथ. १४-५-३० ॥ ३. सु. ७ ॥ ४. तै. नारा. ११ ॥ ५. अष्टाध्याय्यां. ३-२-१२६ ॥

शं॥वक्तुं कथयितुम् अर्हसि अशेषेण । दिव्याः हि आत्मविभूतयः। आत्मनो विभूतयो याः ताः वक्तुम् अर्हसि। याभिः विभूतिभिः आत्मनो माहात्म्यविस्तरैः इमान् त्वं व्याप्य तिष्ठसि ॥ १६ ॥

कथं विद्यां विजानीयाम् अहं हे योगिन् त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु वस्तुषु चिन्त्यः असि ध्येयः असि भगवन् मया ॥ १७॥

विस्तरेण आत्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां

आ॥विभूतयो विविधभूतयः ॥ १६ ॥ १७॥

ज॥विभूतय ऐश्वर्याणि पृष्टानि नानारूपाणि वक्ष्यन्ते । किं केन संगतमित्यत आह—विभूतयइति। विविधभूतयो नानाभूतानि रूपाणि ॥ १६ ॥ १७ ॥

रा॥भूतिं—नियमनं च भूयो विस्तरेण कथय; त्वयोच्यमानं त्वन्माहात्म्यामृतं शृण्वतो मे तृप्तिर्नास्ति हि; ममातृप्तिस्त्वयैव विदितेत्यभिप्रायः॥ १८॥

**श्रीभगवानुवाच—**

**हन्त ते कथयिष्यामि विभूतीरात्मनश्शुभाः।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे॥ १९**

हे कुरुश्रेष्ठ मदीयाः कल्याणीर्विभूतीः प्राधान्यतस्ते कथयिष्यामि; प्राधान्यशब्देनोत्कर्षो विवक्षितः,*'पुरोधसां च मुख्यं माम्' इति हि वक्ष्यते; जगत्युत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि, विस्तरेण वक्तुं श्रोतुं च न शक्यते, तासामानन्त्यात्, विभूतित्वं नाम नि-

ता॥तशब्दोऽत्रातृप्तिसमभिव्याहारान्माहात्म्ये भोग्यत्वपरः। भोग्यतमत्वायोक्तं—**त्वयोच्यमान**मिति। त्वन्मुखचद्रनिस्सृतमिति भावः। हिशब्दाभिप्रेत विवृणोति—**ममे**ति॥ १८॥

एवमतृप्त्या पृच्छन्तमर्जुनं प्रति अतिप्रसन्नो भगवांस्तस्याभिजनादिवर्णनमुखेन योग्यतां दर्शयन् विभूतेर्विस्तरेण प्रत्येकं वक्तुं श्रोतुं च अशक्यत्वात्केनचिदुपाधिविशेषेण संगृहीता विभूतीर्वक्ष्यामीत्याह—**हन्ते**ति। ते अनसूयुत्वप्रीयमाणत्वातृप्तत्वादिगुणपूर्णायेति भावः। गुणत्वादिप्रतियोगिकशेषित्वादिप्राधान्यविवक्षायां वक्ष्यमाणसमस्तोदाहरणव्याप्त्यभावाद्गुणानां च प्राधान्येन व्यपदेक्ष्यमाणात्वात्संग्राहकमर्थविशेषमाह—**प्राधान्यशब्देने**ति। तस्यैव विवक्षितत्वं वक्ष्यमाणेन संवादयति—**पुरोधसा**मिति। पिण्डितार्थमाह—**जगती**ति। विस्तरेण कथयेति पृच्छन्तं प्रति प्राधान्यतः कथयिष्यामीति कथमुच्यत इति शङ्कायां 'नास्त्यन्तो विस्तरस्य मे' इत्युच्यते। विभूतिनामिति शेषः। 'विभूतेर्विस्तरो मया' इति हि वक्ष्यते। नास्तिशब्दाभिप्रेतमशक्यत्वं दर्शयति—**विस्तरेण वक्तु**मिति। नेदं वक्तृश्रोत्रोरसामर्थ्यनिबन्धनमित्याह—**तासामानन्त्या**दिति। तदेतदुक्तं—**नास्त्यन्त**इति। वक्ष्यमाणेषु पदार्थेषु विभूतिशब्दप्रयोगानिमित्तमाह—**विभूतित्वं नामे**ति। नियन्तव्यवस्त्वन्तरविषयो विभूतिशब्दो विभवनकर्मपरः।

**प्र-पा**॥ *गी १०-२४॥ | १. गी १०-४०॥

शं॥हे जनार्दन—अर्दतेः गतिकर्मणः रूपम्; असुराणां देवप्रतिपक्षजनानां नरकादिगमयितृत्वात् जनार्दन, अभ्युदयनिश्श्रेयसपुरुषार्थप्रयोजनं सर्वैः जनैः याच्यते इति वा। भूयः पूर्वम् उक्तमपि कथय; तृप्तिः परितोषः हि यस्मात् नास्ति मे शृण्वतः त्वन्मुखनिस्सृतवाक्यामृतम्॥ १८॥

हन्त इदानीं ते तव दिव्याः दिवि भवाः आत्मविभूतयः आत्मनः मम विभूतयो याः ताः कथयिष्यामि इत्येतत्। प्राधान्यतः यत्रयत्र प्रधाना याया विभूतिः तांतां प्रधानां प्राधान्यतः कथयिष्यामि अहं कुरुश्रेष्ठ। अशेषतस्तु वर्षशतेनापि न शक्या व-

आ॥न जायतेऽर्दयति च संसारमिति जनार्दनः। तथा च बाभ्रव्यशाखायां 'स भूतः स जनार्दनः' इति। 'स ह्यासीत्स नासीत्सोऽर्दयत्' इति॥ १८॥

ज॥ 'अर्द गतौ याचनेच' इति वचनात्। आसुरजनानां नरकादिगमयितृत्वाजनैर्याच्यत्वाद्वा जनार्दन इति संकरः। तदप्रामाणिकं व्याख्यानम्। इदं तु श्रौतत्वादुपादेयमिति भावेनाह—**नजायत** इति नञः परनिपातः। अत एव नलोपाभावः, उत्तरपदे तस्य स्मरणात्। अर्दयति गमयति। **सह्यासी**दिति। भूतः अनादितः सत्तावानित्यर्थः। नासीत् न स जन्मवान्सोऽर्दयतीति जनार्दनः॥

रा॥याम्यत्वम्,सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा*'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः' इति प्रतिपादनात् ; तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्त्यत्वमिति ह्युक्तम् ; पुनश्च †'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः' इति ॥ १९ ॥

तत्र सर्वभूतानां प्रवर्तनरूपं नियमनमात्मतयाऽवस्थायेतीममर्थं योगशब्दनिर्दिष्टं सर्वस्य स्रष्टृत्वं पालयितृत्वं संहर्तृत्वं चेति सुस्पष्टमाह—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २०

सर्वेषां भूतानां मम शरीरभूतानाम् आशये हृदये अहमात्मतयाऽवस्थितः।आत्मा हि

ता॥अन्यत्र च '¹ब्रह्मा दक्षादयः कालः' 'विष्णुर्मन्वादयः कालः' 'रुद्रः कालान्तकाद्याश्च' इत्यादिषु 'जनार्दनविभूतयः' इति नियन्तव्येषु विभूतिशब्दो दृष्ट इति भावः । कुत इत्यत्राह—**सर्वेषामिति** । प्रस्तुतं तादधीन्यं ह्येतच्छब्देन परामृश्यत इति भावः । समनन्तरश्लोकेनापि तस्य श्लोकस्य तदर्थपरत्वं दर्शयति—**तथेति** । नन्वस्य श्लोकस्य व्याख्याने पूर्वं 'सौशील्यवात्सल्यसौन्दर्यादिकल्याणगुणयोगम्' इत्युक्तम्;इहतु योगशब्दनिर्दिष्टं स्रष्टृत्वादिकमुच्यते, तत्कथं घटते?;इत्थम्,उभयत्रोभयमप्यादिशब्देन संगृहीतमित्येकार्थत्वात्। अत एव हि'एतां विभूतिं योगं च'इत्यत्र 'हेयप्रत्यनीककल्याणगुणगणरूपं योगं च'इति प्रयोजकेन संगृहीतम् । 'एता विभूतिम्' इत्यादेः पूर्वत्रियमनपरत्वेन व्याख्यानेऽपि अत्र तदुपादानं समृद्ध्याद्यर्थान्तरव्युदासेन सोपसर्गधात्वर्थव्यञ्जनार्थम् । 'विस्तरेणात्मनो योगं विभूतिं च' इत्यत्र तु 'याभिर्विभूतिभिः'इति तत्पूर्वप्रश्नवाक्यस्थविभूतिशब्दैकार्थ्यस्वारस्यान्नियमनार्थतोक्ता । अतः प्रश्नोत्तरपरयोरीषद्वैरूप्यं सह्यम् ॥ १९ ॥

'विस्तरेणात्मनो योगं विभूतिं च' इति पृष्टमर्थद्वयं विस्तरेण वक्तुं तस्योत्तरद्वयम् 'अहमात्मा' इति श्लोकेन संगृह्योच्यत इत्यभिप्रायेणाह—**तत्रेति** । एतेन प्रागुक्तेषु वक्ष्यमाणेषु च सामानाधिकरण्यनिर्देशेषु यथासंभवं निमित्तद्वयमुक्तं भवति। **आत्मतयावस्थित** इति फलितान्वयप्रदर्शनम् । अनेकार्थोऽप्यात्मशब्दश्शरीरप्रतिसंबन्धिनि प्रसिद्धिप्राचुर्यात्प्रतिसंबन्धिरूपं शरीरमपेक्षते;ततश्च वृत्त्यन्तर्गतोऽपि भूतशब्दो बुद्ध्या निष्कृष्यान्वेतव्य इत्यभिप्रायेण-**सर्वेषां भूतानां मम शरीरभूतानामित्युक्तम्**।ईश्वरस्य जीवशरीराणि भूतानि जीवांश्च प्रति कथमात्मत्वमित्यत्नात्मलक्षणं दर्शयति—**आत्मा हीति** । त्रय-

प्र-पा ॥ *गी. १०-७ ॥
†गी. १०-८ ॥
१. वि. पु. १-२२. 'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतस्सृष्टिहेतवः ॥ ३१ ॥ विष्णुर्मन्वादयः कालस्सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ ३२ ॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ ३३ ॥ अत्र 'विष्णुर्मन्वादयः' इत्यत्र विष्णोरपि विभूतित्वेन परिगणनन्तु अवतारप्रयुक्तविग्रहाभिप्रायेणेति श्रीवरवरमुनिशेखरैः तत्त्वत्रयव्याख्यानेऽनुगृहीतम्। (ईश्वरप्र. ३६-सू) ॥

शं॥क्तुं, यतः नास्ति अन्तः विस्तरस्य मे मम विभूतीनाम् इत्यर्थः ॥ १९ ॥

तत्र प्रथममेव तावत् शृणु—अहम् आत्मा प्रत्यगात्मा गुडाकेश—गुडाका निद्रा, तस्याः ईशः गुडाकेशः, जितनिद्रः इत्यर्थः घनकेश इति वा । सर्वभूताशयस्थितः स-

रा॥नाम शरीरस्य सर्वात्मना आधारो,नियन्ता,शेषी च।तथा वक्ष्यते—*'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च'†'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति। श्रूयतेच ‡'यस्सर्वेषु भूतेषु तिष्ठन्त्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरो यमयति एष त आत्मान्तर्याम्यमृतः'इति,§'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' इति च। एवं सर्वभूतानामात्मतयावस्थितोऽहं तेषामादिर्मध्यं चान्तश्च, तेषामुत्पत्तिस्थितिप्रलयहेतुरित्यर्थः ॥ २० ॥

एवं भगवतस्स्वविभूतिभूतेषु सर्वेष्वात्मतयावस्थानं तत्तच्छब्दसामानाधिकरण्यनि-

---

ता॥मप्येकं लक्षणमित्येके।तत्र श्रुत्याद्यनुसारेण जन्मादित्रयस्य ब्रह्मलक्षणत्व इव शङ्कितमात्रव्यवच्छेदार्थतया त्रयाणां साफल्यं भाव्यम्। लक्षणत्रयमितिचान्ये। तत्र त्वेवं विवेकः- 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्'इत्यादि शरीरलक्षणवाक्यमपि भाव्यम्। शरीरलक्षणान्तराणि च तत्रतत्र विस्तरेण प्रतिक्षिप्तानि। चैतन्यविशिष्टं प्रत्यपृथक्सिद्धविशेषणभूतद्रव्यं शरीरमिति भाष्याभिप्रेतोऽस्माकं निष्कर्षः। अत्र सर्वभूतशब्देन शरीरमात्रनिर्देशशङ्काव्युदासाय आशयशब्दस्य च हृदयविषयत्वव्यञ्जनायाधारत्वनियन्तृत्वादेरात्मलक्षणत्वसिद्ध्यर्थं चाह—**तथेति**। 'सर्वस्य चाहम्' इत्यस्यानन्तरं 'द्वाविमौ पुरुषौ' इत्युपक्रम्य 'क्षरस्सर्वाणि भूतानि' इति वचनात्सर्वभूतशब्दोऽचिद्विशिष्टक्षेत्रज्ञपर इति निश्चीयते; तद्वदत्रापि। तथास्मिन्नेव प्रकरणे 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्युक्त्वा 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्युक्तम्। अत्र बिभर्तीश्वर इत्याभ्याम् आधारत्वनियन्तृत्वे स्पष्टे; ईश्वरशब्दरूढ्या च स्वामित्वसिद्धिः; न खलु गरुडादिषु भुजङ्गादीन्नियच्छत्सु तदीश्वरशब्दः। ईश्वरशब्दस्याहंशब्दस्य चात्रैकविषयत्वं श्लोकद्वयोपादानेन दर्शितम्। अत्र हि सर्वभूतशब्दो जीवपर एव 'यन्त्रारूढानि मायया'इत्यभिधानात्।'भ्रामयन्'इत्यनेन नियन्तृत्वादिसिद्धिः। हृद्देशस्थित्या च 'मयि सर्वमिदं प्रोतम्' इत्याद्युक्तधारकत्वादि सूचितम्। एवं चिदचिदात्मकसमस्तवस्तुशरीरत्वं सर्वभूतशब्दान्वयेनैव वदन्तीं श्रुतिं दर्शयति—**यस्सर्वेषु भूतेष्विति**। चिदंशं प्रति शरीरित्वं प्रपञ्चयद्वाक्यमुपादत्ते—**यआत्मनीति**। आत्मत्वेनावस्थानस्योपादानत्वनिमित्तत्वोपयोगात्पूर्वार्धेन सङ्गमयन्नुत्तरार्धं व्याख्याति—**एवमिति**।एवमात्मतयावस्थितोऽहमित्यनेन निर्विकारस्य स्वस्यैवोपादानत्वस्थापनम्। देशतः कालतो वा आदिमध्यान्तत्वमात्रमनुचितमिति तदुपचरितमाह—**तेषामुत्पत्तीति** ॥ २० ॥

'आदित्यानामहं विष्णुः' इत्युपक्रम्य 'यच्चापि सर्वभूतानां बीजं तदहमर्जुन' इत्यन्तं सामानाधिकरण्यप्रघट्टकम् 'अहमात्मा'इति श्लोकेन सङ्गमयन्नवतारयति—**एवं भगवत** इति। एतेन 'अहमा-

---

प्र-पा॥ *गी. १५-१५॥
†गी. १८-६१ ॥
‡ बृ. ५-७-१५ ॥ § शतपथ. १४-५-३०॥
१. गी. १५-१५. ॥
२. गी. १५-१६ ॥
३. गी. १५-१७ ॥
४. गी. १८-१९ ॥
५. गी. १०-२ ॥

---

शं॥र्वेषां भूतानाम् आशये अन्तर्हृदि स्थितः नित्यं ध्येयः।तदशक्तेन उत्तरेषु भावेषु चिन्त्यः अहं यस्मात् अहम् एव आदिः भूतनां कारणं, तथा मध्यं च स्थितिः, अन्तः प्रलयश्च ॥

रा॥देशहेतुं प्रतिपाद्य विभूतिविशेषान् सामानाधिकरण्येन व्यपदिशति।भगवत्यात्मतया-ऽवस्थिते हि सर्वे शब्दास्तस्मिन्नेव पर्यवस्यन्ति;यथा'देवो मनुष्यः पक्षी वृक्षः' इत्यादयश्शब्दाश्शरीराणि प्रतिपादयन्तस्तत्तदात्मनि पर्यवस्यन्ति भगवतस्तत्तदात्मतयावस्थानमेव तत्तच्छब्दसामानाधिकरण्यनिबन्धनमिति।विभूत्युपसंहारे वक्ष्यति'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इति सर्वेषां स्वेनाविनाभाववचनात्। अविनाभावश्च नियाम्यतयेति *'मत्तस्सर्वं प्रवर्तते' इत्युपक्रमोदितम्—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१

द्वादशसंख्यासंख्यातानामादित्यानां द्वादशो य उत्कृष्टो विष्णुर्नामादित्यः,सोऽहम्;ज्यो-

ता॥ त्मा'इत्यादिकास्समस्ताश्चतस्रो विभूतयः'इति मतान्तरं निरस्तम्।विभूतिविशेषानिति,प्राधान्यत इति ह्युपक्रान्तम्। ननु शरीरवाचिनश्शरीरादिशब्दा नात्मनि पर्यवस्यन्ति; तद्वदत्रापीति लक्षणास्वीकार एव न्याय्यः; न शक्तिकल्पना, लाघवाचेत्यत्राह—भगवतीति । हिशब्दो हेत्वर्थः । अपृथक्सिद्धविशेषणवाचिनश्शब्दास्तत्तद्द्वारा धर्मिण्यपि मुख्यवृत्ता इति प्रयोजकरूपेण गुणादिष्वपि सिद्धत्वान्न शक्तिकल्पनागौरवमिति भावः । तदेतदुक्तं—पर्यवस्यन्तीति । शरीरवाचिशब्दानां स्वरसतस्तत्तदात्मनि पर्यवसानमपृथक्सिद्ध्युपाधिकं दर्शयति—यथेति । शरीरादिशब्दास्तु गुण इत्यादिशब्दवन्निष्कर्षकशब्दत्वान्न धर्मिणि पर्यवस्यन्ति । एतदभिप्रायेणोक्तं—देवो मनुष्यः पक्षी वृक्ष इत्यादयश्शब्दा इति । अध्यासादिहेतुकसामानाधिकरण्यशङ्कामपनयति—भगवतस्तत्तदात्मतयेति। न- ह्युपक्रमोपसंहारविरुद्धोऽर्थो मध्ये स्वीकार्यः; न च ब्रह्मणस्सर्वहेयमयत्वं भ्रमाद्वा तत्त्वतो वाङ्गीकर्तुं युक्तमिति भावः । अविनाभाववचनादिति-आत्मना विना हि शरिरभूतं न भवतीति भावः। 'अग्निना विना धूमो नास्ति ; गुणिना विना गुणो नास्ति' इत्युक्ते अग्न्यादिरेव परमार्थः, धूमादिस्तु मिथ्याभूत इति वा, अग्न्याद्यात्मक इति वा प्रत्ययो हि न भवति ; तद्वदत्रापि—इति । ननु 'यज्ञदत्तं विनान्ये गृहे न सन्ति' 'रज्जुं विना सर्पादिकं नास्ति' इत्युक्ते यथैकस्यैक सत्त्वं तदतिरिक्तानां चासत्त्वं प्रतीयते, तद्वदत्रापि किं न स्यादित्यत्राह—अविनाभावश्चेति । असंजातविरोधिकालसमुदितोपक्रमविरुद्धतया उपसंहारस्य नोदय इत्युपक्रमाधिकरणसिद्धमिति भावः । नियाम्यतयेत्यनेन धूमाग्निव्याप्तिवैषम्यमपि दर्शितम्। एवमेतावता ग्रन्थेन 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'इति सर्वशरीरवर्तिनां जीवाना ब्रह्मस्वरूपैक्यमुच्यत इति कुदृष्टिमतमुन्मूलितम्।आदित्यानाम्-अदित्यपत्यानाम्। 'अजघन्यो जघन्यजः'इत्यादिवचनानुसारेण—द्वादशो य उत्कृष्ट इत्युक्तम् । अत्र चोत्तरेषु च निर्धारणार्थ-

प्र-पा ॥ * गी १०-३९ ॥ १. पूर्वमीमासासू. ३-३-१ द्रष्टव्यम् ॥

आ॥विष्णुः सर्वव्यापित्वप्रवेशित्वादेः। 'विषु व्याप्तौ', 'विश प्रवेशने' इति च पठ-

ज॥द्विविधं विभूतिरूपं प्रत्यक्षं तिरोहितं च ;अत्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान्व्याकुर्वन् 'आदित्यानामहं विष्णुः' इति विष्णुशब्दं तावत्सप्रमाणकं व्याकरोति—विष्णुरिति। सर्वेति, योग्यतया संबध्यते।आदिपदेन वक्ष्यमाणार्थसंग्रहः। चशब्दो धात्वन्तरसमुच्चयार्थः। गच्छन्त्यनेनेति गतिः। भूतानां पृथिव्यादीनां प्रजानां ब्रह्मादीनाम्। 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्यतो गत्यर्थात् क्स्नुप्रत्ययो धातोर्ह्रस्वश्च । मे—मया ; रोदसी—द्यावापृथिव्यौ ; व्याप्तौ व्याप्ते । 'विषु व्याप्तौ' इत्यतः क्नुः।

रा॥ तेषां जगति प्रकाशकानां योंऽशुमान् रविरादित्यगणः, सोऽहम्; मरुतामुत्कृष्टो मरीचिर्यः, सोऽहमस्मि; नक्षत्राणामहं शशी—नेयं निर्धारणे षष्ठी, 'भूतानामस्मि चेतना' इतिवत्। नक्षत्राणां पतिर्यश्चन्द्रः, सोऽहमस्मि ॥ २१ ॥

---

त॥विशेषप्रदर्शनार्थ उत्कृष्टशब्दः।स च'पुरोधसांच मुख्यम्'इतिवक्ष्यमाणमुख्यपर्यायतया अपेक्षितप्रदेशे सर्वत्र निहितः। अत्र चोद्क्रियमाणानां पदार्थानां केषांचित्प्राधान्यं प्रत्यक्षम्; केषांचिदागमिकम्। क्वचिदव्यवहितं, क्वचिज्जीवव्यवहितं च सामानाधिकरण्यम्। ज्योतिश्शब्देन तारकामात्रग्रहणे ततो बहिर्भूतस्य तत्संबन्धरहितस्य च रवेर्निर्धारणाद्ययोगात्—**प्रकाशकानामि**ति सामान्येनोक्तम्। जगत्कारणभूतपरज्योतिरपेक्षया रवेः खद्योतकल्पत्वात्तद्व्यवच्छेदाय—**जगती**ति विशेषितम्। 'अंशुमान्' इति निर्धारणौपयिकातिशयितप्रकाशयोगो मतुपा विवक्षितः, अन्यथा पौनरुक्त्यात्। रविशब्दस्य द्वादशादित्यसाधारणत्वादेकवचनं समुदायाभिप्रायमिति प्रदर्शनायोक्तम्—**आदित्यगण** इति। मरुतो वायवः एकोनपञ्चाशद्दितिपुत्राः, येषां सप्तकास्सप्त गणा भवन्ति। शशिनोऽपि यदि नक्षत्रत्वं स्यात्, तदाहि तस्माद्वर्गात्तस्य निर्धारणमित्यभिप्रायेणाह—**नेयमि**ति। कस्तर्ह्यत्रार्थ इत्यत्राह—**नक्षत्राणापतिरि**रिति। 'प्राधान्यतः' इतिह्युपक्रान्तमिति भावः। ननु पूर्वापरेषु सर्वेषु निर्धारणार्थेषु मध्ये कस्यचित्संबन्धमात्रपरत्वमयुक्तम्; नक्षत्रशब्देन निशि प्रकाशमानं छत्रिन्यायाद्ग्राह्यम्, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति श्रुतेश्चन्द्रमण्डलस्यापि वा स्वर्गिणां भोगस्थानत्वान्नक्षत्रत्वं 'यो वा इह यजते अमुं स लोकं न क्षते तन्नक्षत्राणां न नक्षत्रत्वं देवगृहा वै नक्षत्राणि' इति; तत्राह—**भूतानामस्मिचेतनेतिवदि**ति। मुख्ये संभवति लक्षणा न न्याय्या, नचात्र सर्वत्र निर्धारणार्थता 'भूतानामस्मि चेतना' 'सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन' 'वादः प्रवदतामहम्' 'अहमेवाक्षयः कालः' 'उद्भवश्च भविष्यताम्' 'द्यूतं छलयतामस्मि' 'तेजस्तेजस्विनामहम्' 'जयोऽस्मि व्यवसायोऽस्मि' इत्यादिषु निर्धारणाभावात्; अतोऽत्र चन्द्रस्य नक्षत्रजातीयत्वाभावात् षष्ठ्यभिहितस्य सबन्धसामान्यस्य प्रमाणसिद्धविशेषे पर्यवसानमिति भावः ॥ २१ ॥

---

प्र·पा॥ १. यजु. ५-काण्ड. ४-१-३ ॥ २. यजु. १-अष्ट. ५-२-१० ॥

---

शं॥एवं च ध्येयः अहम्—आदित्यानां द्वादशादित्यानां विष्णुः नाम आदित्यः अहं, ज्योतिषां रविः प्रकाशयितॄणाम् अंशुमान् रश्मिमान्।मरीचिः नाम मरुतां मरुद्देवताभेदानाम् अस्मि। नक्षत्राणाम् अहं शशी ॥ २१ ॥

---

आ॥न्ति 'गतिश्च सर्वभूतानां प्रजानां चापि भारत।व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम। आधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत। क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' इति मोक्षधर्मे ॥ २१ ॥

---

ज॥कान्तिः कमनीयता।'वश कान्तौ'इत्यतो नुः,धातोरकारस्येकारः,शकारस्य षकारः।'वी गति'इत्यतो वा कान्तिकर्मणः क्स्नुः। अधिभूतं प्राग्व्याख्यातम्। 'विश प्रवेशने' इति अतः क्नुः, षत्वं च। तदिच्छुरधिभूतस्य जन्मादीच्छुः। कान्तिरिच्छा। अतो वयतेर्वष्टेश्च पूर्ववद्रूपम्। क्रमणात् त्रिविक्रमरूपेण पादविक्षेपात्। पूर्ववद्वयतेर्गत्यार्थात्कर्तरि प्रत्ययः॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥** २२

रा॥वेदानाम्-ऋग्यजुस्सामाथर्वणां य उत्कृष्टस्सामवेदः,सोऽहम्; देवानामिन्द्रोऽहमस्मि; एकादशानामिन्द्रियाणां यदुत्कृष्टं मनइन्द्रियम्, तदहमस्मि; इयमपि न निर्धारणे —भूतानां चेतनावतां या चेतना, साहमस्मि ॥ २२ ॥

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुश्शिखरिणामहम् ॥** २३

ता॥गीतिर्हि सामशब्दार्थः, तस्य वेदेषु निर्धारणं कथमिति शङ्काव्युदासाय'सामवेदोऽस्मि'इति निर्देश इति प्रदर्शयति—**ऋग्यजुरिति** । सामवेदस्योत्कर्षो गीतिप्रधानत्वसहस्रशाखत्वादिभिः; अन्येषां तु तदभावात्तावन्मात्रेणापकर्षः, न तु प्रामाण्यतारतम्यात् । 'ऋग्वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सवा ऋक्सामो वावदन्मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत् साम ज्यायान्वा अतो मम महिमा' इति गीतिरूपस्य साम्नः प्राधान्याद्गीत्यात्मकस्य सामवेदस्य प्राधान्यम्; 'ऋग्भ्यो जातं वैश्यं वर्णमाहुः यजुर्वेदं क्षत्रियस्याहुर्योनिं सामवेदो ब्राह्मणानां प्रसूतिः' इतिच । देवा इति स्वर्गवासिनो विवक्षिताः; ब्रह्मादिसंग्रहायोगात् । वासवशब्दस्येन्द्रशब्देन व्याख्यानमतिशयद्योतनार्थम्, 'इदि परमैश्वर्ये' इति। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः''एतस्माजायते प्राणो मनस्सर्वेन्द्रियाणि च'इत्यादिषु मनस इन्द्रियेभ्यः पृथगभिधानात्कथम्'इन्द्रियाणां मनश्चास्मि'इति निर्धारणमित्यत्राह—**एकादशेन्द्रियाणां यदुत्कृष्टं मन इन्द्रिय**मिति।अयमभिप्रायः—'इन्द्रियाणि दशैकं च''एकादशं मनश्चात्र' इत्यादिषु मनसोऽपीन्द्रियत्वेन व्यपदेशात्क्वाचित्कः पृथग्व्यपदेशो गोबलीवर्दनयादिति निर्धारणोपपत्तिः—इति । नहि भूतेषु चेतनासंज्ञकं किञ्चिद्भूतमस्तीत्यभिप्रायेणाह—**इयमपीति** । षष्ठीति शेषः। 'तेजस्तेजस्विनां' 'सत्त्वं सत्त्ववताम्' इत्यादिवद्विशिष्टे सारभूतविशेषणांशो विवक्षित इत्यभिप्रायेण—**चेतनावतामित्युक्तम्**। ननु भूतानां षष्ठत्वेन चेतनासंज्ञं किमप्यन्यत्रोच्यते; यथा 'महाभूतानि खं वायुरग्निरापस्तथा मही । षष्ठस्तु चेतनाधातुरात्मा सप्तम उच्यते । अष्टमं तु मनो ज्ञेयम्' इति; तथा 'षष्ठन्तु चेतनाधातुर्मन इत्युपदिश्यते' इति च । अत्र मनसोऽधिष्ठानतया चेतनायास्तदपृथग्वचनमित्यविरोधः। अतो 'भूतानामस्मि चेतना' इति निर्धारणार्थत्वं युज्यत इति मैवं,नहि भूतषष्ठनिर्देशमात्रान्महाभूतत्वम्, अन्यथापि संख्यानिवेशसंभवात्, अत्र च सप्तमतया अष्टमतया च निर्दिष्टयोर्महाभूतत्वानभ्युपगमात्, चेतनाशब्दस्य च अप्रसिद्धार्थत्वात्, प्रसिद्धार्थस्वीकारस्योचितत्वात् । अतस्संबन्धमात्रविवक्षयैव अत्र षष्ठी युक्तेति ॥ २२ ॥

| | |
|---|---|
| प्र-पा ॥ १ ॥ | ५. गी. १३. ५ ॥ |
| २. यजु. काठक. ३-९-५० ॥ | ६. वि. पु. १-२-४७ ॥ |
| ३. कठ. १. ३. १० ॥ | ७ ॥ |
| ४. मु. २-१-३ ॥ | ८ ॥ |

शं॥वेदानां मध्ये सामवेदः अस्मि । देवानां रुद्रादित्यादीनां वासवः इन्द्रः अस्मि । इन्द्रियाणाम् एकादशानां मनश्च अस्मि,भूतानाम् अस्मि चेतना कार्यकारणसङ्घाते अभिव्यक्ता बुद्धेः वृत्तिः चेतना ॥ २२ ॥

रा॥रुद्राणामेकादशानां शङ्करोऽहमस्मि ; यक्षरक्षसां वैश्रवणोऽहम् ; वसूनामष्टानां पावकोऽहम् ; शिखरिणां —शिखरशोभिनां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दस्सरसामस्मि सागरः ॥** २४

पुरोधसामुत्कृष्टो बृहस्पतिर्यः, सोऽहमस्मि ; सेनानीनां सेनापतीनां स्कन्दोऽहमस्मि ; सरसां सागरोऽहमस्मि ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥** २५

महर्षीणा मरीच्यादीनां भृगूरहम् ; अर्थाभिधायिनश्शब्दा गिरः, तासामेकमक्षरं

---

ता॥रुद्रेति—रुद्रेष्वेकस्य शङ्करसंज्ञयैवोत्कर्षद्योतना।यक्षराक्षसजात्योरविदूरविप्रकर्षात्—**यक्षरक्षसा**मित्युक्तम्, न तु वित्तेशस्य राक्षसत्वगन्धः ; यद्वा 'नक्षत्राणामहं शशी' इतिवज्जातिद्वयपतित्वमात्रमिह विवक्षितम् । वित्तेशसंज्ञया च धनदस्यासाधारणैश्वर्योत्कर्षद्योतनम् । 'स्थावराणां हिमालयः' इति पर्वतमात्राणां परस्ताद्वक्ष्यमाणत्वात् 'मेरुश्शिखरिणाम्' इत्यत्र शिखरिशब्देन प तविशेषो विवक्षितः। शक्तश्चायं शब्दो विशेषं दर्शयितुमित्यभिप्रायेणोक्तं—**शिखरशोभिनां पर्वताना**मिति । प्रशंसापरः प्रत्यय इति भावः । प्रशस्तरत्नकाञ्चनादिमयशिखरविशेषयोगान्मेरोरतिशयः ॥ २३ ॥

बृहस्पतिसंज्ञया बृहतां पतिरित्यतिशयसिद्धिः; गीरा पतिर्ह्यसौ । सेनानीशब्देनात्र कर्मवश्यसेनापतिसंग्रहः । स्कन्दस्य देवसेनानीत्वलक्षणोऽतिशयः । सरश्शब्देन प्रवाहव्यतिरिक्तस्थास्नुसलिलाशयमात्रस्य विवक्षितत्वात्सागरसंग्रहः; स्रोतसां पृथग्वक्ष्यमाणत्वात् ॥ २४ ॥

'देवर्षीणां मुनीनाम्'इत्यादेर्वक्ष्यमाणत्वादत्र महच्छब्देन विशेषणाच्च-'महर्षीणाम्'इति ऋषिगणविशेषो विवक्षित इत्यभिप्रायेण-**मरीच्यादीना**मित्युक्तम्।'गिराम्'इति न शब्दमात्रं विवक्षितम्;समुद्रघोषादिषु तत्प्रयोगाभावात् । अत एव नाक्षरमात्रम्, 'अक्षराणामकारोऽस्मि' इति पृथग्वक्ष्यमाणत्वाच्च। ततएव'एकमक्षरम्' इत्यप्यकारव्यतिरिक्तविषयम्। 'ओमित्येकाक्षरं ब्रह्म'इत्यादिषु प्रणवेऽप्येकशब्दविशेषितोऽक्षरशब्दः प्रयुक्त इत्यभिप्रायेणाह—**अर्थाभिधायिन**इति। अर्थाभिधायिषु प्रणवस्योत्कर्षः सर्वोत्कृष्टार्थाभिधायित्वादिना शङ्कुना पर्णानामिव सर्वासां वाचां प्रणवेन संतृण्णत्वश्रुतेश्च । यज्ञेषु जपयज्ञस्य प्राशस्त्यमन्यत्र सिद्धं '[1]विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः' इति । किंच '[2]कुर्याद्घृतपशुं संख्ये कुर्यात्पिष्टपशुं तथा। न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कथंचन' इति '[3]पशुयज्ञैः कथं हिंस्रैः मादृशो

---

प्र-पा ॥ १. गी. १०. १३ ॥
२ ॥
३ ॥
४ ॥
५ ॥

---

शां॥रुद्राणाम् एकादशानां शङ्करश्च अस्मि।वित्तेशः कुबेरः यक्षरक्षसां यक्षाणां रक्षसां च। वसूनाम् अष्टानां पावकश्च अस्मि अग्निः। मेरुः शिखरिणां शिखरवताम् अहम्॥

पुरोधसां च राजपुरोहितानां च मुख्यं प्रधानं मां विद्धि पार्थ बृहस्पतिम्। स हि इन्द्रस्येति मुख्यः स्यात् पुरोधसाम्। सेनानीनां सेनापतीनाम् अहं स्कन्दः देवसेनापतिः। सरसां यानि देवखातानि सरांसि तेषां सरसां सागरः अस्मि भवामि ॥ २४ ॥

रा॥प्रणवोऽहमस्मि ; यज्ञानामुत्कृष्टो जपयज्ञोऽस्मि , पर्वतमात्राणां हिमवानहम् ॥ २५॥

**अश्वत्थस्सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथस्सिद्धानां कपिलो मुनिः ॥ २६**

वृक्षाणाम्पूज्योऽश्वत्थोऽहम् ; देवर्षीणां नारदोऽहम् ॥ २६ ॥

ता॥शो यष्टुमर्हति।हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः। प्रस्वापे च प्रबोधे च पूजितो येन केशवः' इत्यादिवचनबलादहिंसात्मकयज्ञानर्हाणा हिंसात्मकयज्ञानुज्ञानम् । तत्रापि विधितः प्रवृत्तेः अपकारानभिसन्धानादुपकारश्रुतेर्देवताप्रीणनत्वाच्च न प्रत्यवायः । फलार्थिनां तु तत्फलमल्पमस्थिरं, दुःखमिश्रं च । अहिंसात्मकास्तु यज्ञा विशिष्टाधिकारिसापेक्षा भगवतोऽतिप्रीणनत्वादपवर्गप्रत्यासन्नाः । अत एव ह्युपरिचरादयः पिष्टपशुभिरिष्टवन्तः । एवमितरेषु यज्ञेषु हिंसादिप्रसङ्गोऽधिकारिविशेषादिना विषयव्यवस्थापनमित्यादिर्महान् क्लेशः ; जपयज्ञे तु तत्प्रसङ्गाभावादव्याक्षेपेणार्थप्रतीत्या सबीजयोगद्वारा सहसा समाधौ निवेशनाच्च यज्ञान्तरेभ्यो जपयज्ञः प्रशस्ततमः; सर्वाश्रमसाधारण्यात् , 'जप्येनापि तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति विधुरादेरपि सिद्धिहेतुत्वाच्च । पर्वतविशेषाणां पूर्वमुक्तत्वाद्वृक्षाणां वक्ष्यमाणत्वाच्च तदुभयव्यवच्छेदार्थं हिमवतश्शैलराजत्वप्रसिद्ध्यनुरोधार्थं चोक्तं—**पर्वतमात्राणामि**ति ॥ २५ ॥

ननु'सर्ववृक्षाणाम्'इत्येतदनुपपन्नं,पारिजाताद्यपेक्षया अश्वत्थस्य निकृष्टत्वादित्यत्रोक्तं—**पूज्य**इति। पारिजातादीनामप्यश्वत्थवत्पूज्यत्वं नास्तीति भावः। देवा मन्त्रदर्शिनो देवर्षयः.देवर्षिषु नारदस्य बहुप्रकारोऽतिशयो बहुषु प्रदेशेषु महाभारत एव प्रपञ्चितः।चित्ररथः—गन्धर्वराजः।'सिद्धानाम्'इत्यादि पूर्वसंचितसुकृतविशेषवशाज्जन्मप्रभृतिसिद्धाणिमाद्यैश्वर्यं सिद्धिः । 'आदिविद्वान्सिद्धः' इति कपिलमाहुः । 'ॠषिं प्रसूतं कपिलं महान्तम्' इति च श्रुतिः । 'ददृशुः कपिलं तत्र वासुदेवं सनातनम्' इति चाहुः । अयमपि परशुरामादिवत् ॥ २६ ॥

प्र-पा ॥ १. साध्याः ॥
२. मनु-२-८६, ८७ ॥ 'ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्॥ जप्येनैवतु मैत्रो ब्राह्मण उच्यते ॥
३. श्वेता. ५-२ ॥ 'ऋषिम्प्रसूत कापिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्' ॥
४. श्रीरामायणे, बाल. ४० २४ ॥ 'तेपि सर्वे महात्मानो भीमवेगा महाबलाः। ददृशुः . सनातनम्॥

शं॥महर्षीणां भृगुः अहम्।गिरां वाचां पदलक्षणानाम् एकम् अक्षरम् ओङ्कारः अस्मि-यज्ञानां जपयज्ञः अस्मि , स्थावराणां हिमालयः ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणाम्,देवर्षीणां च नारदः देवाः एव सन्तः ऋषित्वं प्राप्ताः मन्त्र-

आ॥सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः। 'प्रीतिः सुखं कमानन्दः' इत्यभिधानात्। 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति च । 'ऋषिं प्रसूत कपिलं यस्तमग्रे ज्ञानै-

ज॥'सिद्धानां कपिलो मुनिः' इति कपिलशब्दं व्याचष्टे—**सुखे**ति। सुखरूप इति कः।पाल्यते जगदनेनेति पिः । 'पा रक्षणे' इत्यतः किः । लीयते जगदनेनेति लः। 'ली श्लेषणे' इत्यस्माड्डुः; 'ला आदाने' इत्यतो वा कः। ततः कर्मधारयः। कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति—**प्रीतिरि**ति । समग्रार्थं श्रुतिमाह—**ऋषिमि**ति । तं भगवन्तमृषिं कपिलं च पश्येत् । कथमृषिः, सर्वज्ञत्वादित्युच्यते । यः प्रसूतं पूर्वकल्पेषु जातं जायमानं वर्तमानं चैवमागामि च जगज्ज्ञानैर्बिभर्ति

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमस्संयमतामहम् ॥ २९

रा॥कामधुक्—दिव्या सुरभिः; जननहेतुः कन्दर्पश्चाहमस्मि ; सर्पाः—एकशिरसः ; नागाः-बहुशिरसः ; यादांसि—जलवासिनः, तेषां वरुणोऽहम् ; दण्डयतां वैवस्वतोऽहम् ॥ २८, २९ ॥

ता॥'अमृतोद्भवम्' इति जन्मतः प्रकर्षसूचनम्। अमृतमत्र जलं,मथ्यमानावस्था सुधैव वा।गजेन्द्रशब्देन दिग्गजा विवक्षिताः । तेषु प्रधानतया दिक्पालेश्वरस्य शचीपतेरौपवाह्य ऐरावतः । अमृतोद्भवत्वं च काकाक्षिन्यायादैरावतेऽप्यन्वेतव्यम्। रथन्तरसामोद्भवत्वं वा द्रष्टव्यम्।नराधिपशब्देनैव निर्वाहकत्वलक्षणोऽतिशयस्सिद्धः ॥ २७ ॥

'आयुधानाम्' इत्यर्वाचीनायुधपरं, सुदर्शनाद्यपेक्षया दधीचेरस्थिसंभवस्य वज्रस्यापि निकृष्टत्वात् । धेनूनां दोग्ध्रीणाम्। दिव्या सुरभिरिति —यौगिकः कामधुक्शब्दोऽत्र व्यक्तिविशेषनिष्ठ इति भावः। प्रजनशब्देन जननहेतुत्वं कन्दर्पस्यासाधारणोऽतिशय उक्तः । स मदायत्त इत्यर्थः । अप्रजार्थकन्दर्पव्यवच्छेदार्थो वा प्रजनशब्दः । पर्याययोस्सर्पनागशब्दयोः कथं पृथग्व्यपदेश इत्यत्राह—सर्पाएकशिरसः; नागा बहुशिरस इति । यादश्शब्देन वरुणस्यापि संग्रहार्थमाह—यादांसि जलवासिन इति । यद्वा जलजन्तुमात्रं विवक्षितम् ; तेषां पतित्वेन सम्बन्धो वरुणस्य तत्साजात्याभावाद्ग्राह्यः । अर्यमा - पितृराजः । संयमतां संयच्छतामित्यर्थः ; तदाह—दण्डयतामिति ॥ २८, २९॥

शं॥दर्शिनः देवर्षयः, तेषां नारदः अस्मि। गन्धर्वाणां चित्ररथः नाम गन्धर्वः अस्मि। सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसम् अश्वानाम् उच्चैःश्रवाः नाम अश्वराजः तं मां विद्धि विजानीहि अमृतोद्भवम् । ऐरावतम् इरावत्याः अपत्यं गजेन्द्राणां हस्तीश्वराणां, तं 'मां विद्धि' इति अनुवर्तते । नराणां च मनुष्याणां नराधिपं राजानं मां विद्धि ॥ २७ ॥

आयुधानाम् अहं वज्रं दधीच्यस्थिसम्भवम्।धेनूनां दोग्ध्रीणाम् अस्मि कामधुक्—वसिष्ठस्य सर्वकामानां दोग्ध्री, सामान्या वा कामधुक्।प्रजनः प्रजनयिता अस्मि कन्दर्पः कामः । सर्पाणां सर्पभेदानाम् अस्मि वासुकिः सर्पराजः ॥ २८ ॥

अनन्तः नाम नागः अस्मि नागानां नागभेदानां नागराजः।वरुणो यादसाम् अहम् अब्देवतानां राजा अहम् । पितृणाम् अर्यमा नाम पितृराजः च अस्मि । यमः संयमतां संयमनं कुर्वताम् अहम् ॥ २९ ॥

आ॥बिभर्ति जायमानं च पश्येत्।सुखादनन्तात्पालनाल्लीयनाच्च यं वै देवं कपिलमुदाहरन्ति' इति बाभ्रव्यशाखायाम् ॥ २६ ॥

ज॥जानातीति यावत्। कथं कपिल इत्यत उक्तं—सुखादिति। यच्छब्दद्वयस्य तमित्यनेनान्वयः॥२६॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥** ३०

रा॥अनर्थप्रप्सुतया गणयतां मध्ये कालः—**मृत्युरहम्** ॥ ३० ॥

**पवनः पवतामस्मि रामश्शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥** ३१

**पवतां-गमनस्वभावानां पवनोऽहम्; शस्त्रभृतां रामोऽहम्; अत्र शस्त्रभृत्त्वं विभूतिः, अर्थान्तराभावात् । आदित्यादयश्च क्षेत्रज्ञा आत्मत्वेनावस्थितस्य भगवतश्शरीरतया धर्मभूता इति शस्त्रभृत्त्वस्थानीयाः ॥ ३१ ॥**

---

**ता॥**'उपमानमशेषाणां साधूनां यस्सदाऽभवत्' इत्यादिना प्रह्लादोत्कर्षः।' अहमेवाक्षयः कालः' इति नित्यस्य कालतत्त्वस्य परस्ताद्वक्ष्यमाणत्वात् यमस्य च पूर्वमुक्तत्वात्तद्व्यतिरिक्तः पुरुषविशेष इह कालशब्देन विवक्षितः ; अचेतनस्य च कालस्य गणयितृत्वं न युज्यते; 'कलयताम्' इत्यस्य विज्ञातृमात्रपरत्वे तेषु कालस्य निर्धारणमयुक्तम् ; अतस्तदुचितमर्थविशेषं दर्शयति—**अनर्थेति** ।नहि मरणातिरिक्तोऽनर्थ इति भावः।मृगेन्द्रशब्देनैव सिंहस्यातिशयस्सिद्धः । पक्षिषु वैनतेयस्य वेगातिशयाद्वेदमयत्वादिना चोत्कर्षः ।। ३० ।।

'पवताम्' इत्यनेन पवनासाधारणक्रिया विवक्षिता चेन्निर्धारणं नोपपद्येतेति तदुपपत्तये—**गमनस्वभावानामित्युक्तम्** । अजस्रगमनशीलानामित्यर्थः।पवनप्रेरिता एवहि तारकादयोऽप्यजस्रं परिभ्रमन्ति । सोमपवनादिष्विवात्र शोधनान्वयिगमनमिहाविवक्षितम् । 'रामश्शस्त्रभृतामहम्' इति परशुरामस्यापि जेता रावणहन्ता रामो विवक्षित इति तदुचितममोघशस्त्रत्वलक्षणमतिशयमाह—**शस्त्रभृत्त्वमत्र विभूतिरिति**। पूर्वोत्तरेष्विव राम एव विभूतिः किं न स्यादित्यत्राह—**अर्थान्तराभावादिति** । अचिद्विशेषस्य चेतनान्तरस्य वा शस्त्रभृच्छब्दवाच्यस्यात्रासंभवादित्यर्थः । अर्थान्तराणां मध्ये स्वासाधारणधर्मविशेषनिर्देशे रीतिभङ्गः स्यादित्यत्राह—**आदित्यादयश्चेति** । शस्त्रभृत्त्वस्यान्येषां च भगवन्तं धर्मिणं प्रति धर्मत्वमविशिष्टमित्येकैव रीतिः; निर्धारणानिर्धारणभेदवन्मुखभेदमात्रन्न दोष इति भावः। तत्रादित्यशब्देन 'ज्योतिषां रविरंशुमान्' इत्युक्तो रविर्विवक्षितः । 'आदित्यानामहं विष्णुः' इत्युक्तस्त्वादित्यो रामतुल्यः । मकरो मत्स्यराजः। स्रोतस्सु जाह्नव्याः विष्णुपदोद्भवत्वसर्वेशशिरोधृतत्वत्रैलोक्यप्रवृत्तत्वादिभिरतिशयः ॥ २१ ॥

---

**प्र-पा॥**१. वि. पु. १-१५-१५६ ॥ | २. गी. १०-२३ ॥

---

**शं॥प्रह्लादो नाम च अस्मि दैत्यानां दितिवंश्यानाम् । कालः कलयतां कलनं गणनं कुर्वताम् अहम् । मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वा अहम् । वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥ ३० ॥**

**पवनः वायुः पवतां पावयितॄणाम् अस्मि। रामः शस्त्रभृतां शस्त्राणां धारयितॄणां-**

---

**आ॥आनन्दरूपत्वात्पूर्णत्वाल्लोकरमणत्वाच्च रामः ।**

---

**ज्ञा॥**'रामः शस्त्रभृतामहम्' इति रामशब्दं व्याख्याति—**आनन्देति** । आनन्दरूपत्वात्पूर्णत्वादित्येकोऽर्थः । रमत इति रः ; 'रमु क्रीडायाम्' इत्यतो 'अमन्ताड्डः' इति डः । न विद्यते मा

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२

रा॥सृज्यन्त इति सर्गाः तेषाम् आदिः-कारणम्;सर्वदा सृज्यमानानां सर्वेषां प्राणिनां तत्रतत्र स्रष्टारोऽहमेवेत्यर्थः । तथान्तः सर्वदा संह्रियमाणानां तत्रतत्र संहर्तारोऽप्यहमेव । तथाच मध्यं पालनम् ; सर्वदा पाल्यमानानां पालयितारश्चाहमेवेत्यर्थः । जल्पवितण्डादि कुर्वतां तत्त्वनिर्णयाय प्रवृत्तो वादो यः,सोऽहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३

---

ता॥ सर्गशब्देन सृष्टिमात्रविवक्षायाम् 'आदिरन्तश्च' इत्यादिनान्वयायोगात्कर्मार्थोऽत्र सर्गशब्द इत्याह—सृज्यन्त इति सर्गाइति।आदिमध्यान्तशब्दानामत्रावयवविशेषाद्यर्थता न युक्ता,अनतिशयितार्थत्वात् । नापि कालविशेषार्थता, कालस्य वक्ष्यमाणत्वेनात्र पृथग्व्यपदेशप्रयोजनाभावात् । नचोत्पत्त्यादिक्रियामात्रार्थता, 'उद्भवश्च भविष्यताम्' इति वक्ष्यमाणेन पौनरुक्त्यप्रसङ्गात् । नचेश्वरस्यैव कारणत्वादिकमिहोच्यते 'अहमादिश्च मध्यच' इत्युपक्रमेण कृतकरत्वात् । नचेदं सामान्यतस्तन्निगमनम्, उपर्युपरि वचनात् । तस्माल्लोकसिद्धोत्पत्त्यादिहेतुपरत्वमेवोचितं लक्षणया । तत्राप्युपादानकारणस्य 'बीज मां सर्वभूतानाम्' इति वक्ष्यमाणत्वान्निमित्तकारणमात्रमिह विवक्षितम् । 'सर्गाणाम्' इत्यविशेषवचनेन सर्वदेशकालवर्तिसृज्यप्रतियोगिकसर्वनिमित्तकारणवर्गस्य स्वाधीनत्वमभिप्रेतम् । तदेतदखिलमभिसंहितं—सर्वदेत्यादिवाक्यत्रयेण । अध्यात्मविद्या-जीवपरमात्मयाथात्म्यविद्या । सा विषयतः फलतश्च विद्यान्तरेभ्य उत्कृष्टा। 'प्रवदताम्'इति नान्योन्यविवादमात्रं विवक्षितम्, तत्र वादाख्यविशेषस्यास्मरणात् , 'अध्यात्मविद्या विद्यानाम्' इति विद्याप्रसङ्गात्तदर्थकथाविषयत्वोपपत्तेः । न च 'सत्त्वं सत्त्ववताम्' इतिवद्वादाख्यकथाविशेषवत्त्वमभिप्रेतम् ;अन्यापेक्षयातिशयसूचनसंभवे तत्परित्यागायोगात्।अतः'प्रवदताम्'इति कथात्रयसाधारणरूपमिह विवक्षितम् ; तदाह—जल्पवितण्डादि कुर्वतामिति । तत्त्वनिर्णयाय प्रवृत्त इत्यनेन स्वल्पफलविजिगीषुकथातोऽतिशयितापवर्गपर्यवसितफलत्वेन वादस्योत्कर्षप्रदर्शनम् ॥ ३२ ॥

---

शं ॥ दाशरथिः रामः अहम् । झषाणां मत्स्यादीनां मकरः नाम जातिविशेषः। स्रोतसां स्रवन्तीनाम् अस्मि जाह्नवी गङ्गा ॥ ३१ ॥

सर्गाणां सृष्टीनाम् आदिः अन्तश्च मध्यं चैव अहम् उत्पत्तिस्थितिलयाः अहम् अर्जुन।भूतानां जीवाधिष्ठितानामेव आदिः अन्तश्च इत्युक्तम् उपक्रमे,इह तु सर्वस्यैव सर्गमात्रस्य इति विशेषः। अध्यात्मविद्या विद्यानां मोक्षार्थत्वात् प्रधानम् अस्मि। वादः अर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानम्, अतः सः अहम् अस्मि।प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डादीनाम् इह ग्रहणं 'प्रवदताम्' इति ॥ ३२ ॥

---

आ॥'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन रामः' इति शाण्डिल्यशाखायाम्।रश्च अमश्चेति व्युत्पत्तिः॥ ३१ ॥

---

ज॥ प्रमा परिच्छेदोऽस्येत्यमः । लोकेत्यपरोऽर्थः । रमतेर्घञ् । अत्र श्रुतिमाह— आनन्देति । आद्येऽर्थे विग्रहं दर्शयति—रश्चेति । रश्चासावमश्चेत्यर्थः ॥ ३१ ॥

रा॥अक्षराणां मध्ये'अकारो वै सर्वा वाक्'इति श्रुतिसिद्धस्सर्ववर्णानां प्रकृतिरकारोऽहम्। सामासिकः - समाससमूहः; तस्य मध्ये द्वन्द्वसमासोऽहम्, स ह्युभयपदार्थप्रधानत्वेनोत्कृष्टः। कलामुहूर्तादिमयोऽक्षयः कालोऽहमेव।सर्वस्य स्रष्टा हिरण्यगर्भश्चतुर्मुखोऽहम्॥

ता॥बह्वृचोपनिषदि श्रूयते—'अ इति ब्रह्म' इति'। तथा 'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति श्रुत्यैव प्रपञ्चितं प्रकृतित्वमाह—**सर्ववर्णानां प्रकृति**रिति। निर्धारणौपयिकबहुत्वसिद्ध्यर्थं प्रत्ययार्थं दर्शयति—**सामासिकस्समाससमूह**इति। पूर्वोत्तरान्यपदार्थप्रधानेभ्योऽव्ययीभावतत्पुरुषबहुव्रीहिभ्यो द्वन्द्वस्योत्कर्षमाह—**सह्युभये**ति। अक्षयशब्देन 'कला मुहूर्ताः काष्ठाश्च' 'कलामुहूर्तादिमयश्च कालः' इति श्रुतिस्मृत्यादिसिद्धबहुविधविकाररूपलोकक्षयहेतुभूतानन्तावच्छेदे सत्यपि स्वरूपतोऽनाद्यन्तत्वं विवक्षितमित्यभिप्रायेणाह—**कले**ति। 'अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते' कालोऽस्मि लोकक्षयकृत्प्रवृत्तो नान्तो न चादिर्न च मेऽस्ति मध्यम्' इत्यादिभिरिदं कालाधिष्ठातृत्वं व्यक्तम्। धातृशब्दरूढ्या विश्वतोमुखत्वविशेषणेन च हिरण्यगर्भ एवात्रोच्यत इत्यभिप्रायेणाह—**सर्वस्ये**ति। धातृशब्देनैवाण्डान्तर्वर्तिसमस्तविधातृत्वलक्षण उत्कर्षस्सिद्ध इति प्रदर्शनाय—**सर्वस्य स्रष्टे**त्युक्तम्। एतेन कर्मफलविधातृत्वेन व्याख्यान्तरं निरस्तम्। 'विश्वतः' इति दिक्चतुष्टयमात्रमिह विवक्षितमिति ज्ञापनायोक्तं—**चतुर्मुख**इति। वेदचतुष्टयप्रवर्तनादिकं चानेन सूचितम्॥ ३३॥

प्र-पा॥१. 'नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्री पुमान् ब्रुवन्। पुमांसं न ब्रुवन् नैनं वदन्वदति कश्चन। अ इति ब्रह्म'॥ इयं श्रुतिः 'ऋग्गारणे द्वितीयप्रश्ने द्वितीयानुवाके' इति द्रविडोपनिषद्भाष्योदाहृतप्रमाणाकरसङ्ग्रहे (२-५-१०) प्रसादिता। अस्यायमर्थः- ब्रुवन् - परमात्मानं वदन् पुरुष, वाचा - वागिन्द्रियेण, एनं - परमात्मानम्, स्त्रियं - स्त्रीत्वेन, नवदति, ब्रुवन्, पुरुषः एनं, वाचा, अस्त्रीपुमान् - अस्त्रीपुमांसम्, द्वितीयाविभक्त्यभावश्छान्दसः, स्त्रीपुंव्यतिरिक्तनपुंसकत्वेनापि न वदति। ब्रुवन्-वाचा एनं पुमांसञ्च न वदति, 'यतो वाचो निवर्तन्ते' इति प्रकारेण यावत्स्वरूपं यावद्गुणं यावद्विभूति कोऽपि वक्तुं न शक्नोतीत्यर्थः; यद्वा, कश्चन वदन् - कश्चन वक्ता, एनं स्त्रियं ब्रुवन्न वदति, एनम्परमात्मानं वाचा-इयं स्त्री इति ब्रुवन्न वदति, तस्यास्त्रीत्वात्। एनमस्त्रीपुमान् ब्रुवन्न वदति, द्वितीयाया लुक्। एनम्पुमांसं ब्रुवन् न वदति; अ इति ब्रह्म-एवं भूत एव अकारवाच्यं ब्रह्मेति॥ २॥

३. तै. नारा. १-८॥ 'कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः। अर्धमासा मासा ऋतवत्संवत्सरश्च कल्पताम्'॥ कलेति—कल्पतां-कल्पिता इत्यर्थः। 'काष्ठाः पञ्चदशाख्याता निमेषा मुनिसत्तम। काष्ठा त्रिंशत्कला त्रिंशत्कला मौहूर्तिका विधि.॥८॥ तावत्सख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम्। अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः॥ ९॥ तैष्षड्भिरयनं वर्षं तेऽयने दक्षिणोत्तरे। अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्॥ १०॥ 'इत्यादिश्रीविष्णुपुराणवचनमनुसन्धेयम्॥ (वि. पु. १-३॥)

४. वि. पु. ४-१-८४॥ 'कला मुहूर्तादिमयश्च कालः न यद्विभूतेः परिणामहेतुः। अजन्मनाशस्य समस्तमूर्तेः अनामरूपस्य सनातनस्य'॥ अजन्मनाशस्य-कर्मनिमित्तशरीरग्रहणतद्वियोगरहितस्य, सदैकमूर्तेः-सदैकरूपरूपस्य, 'समस्तमूर्तेः' इति च पाठान्तरम्; अनामरूपस्य - कर्मकृतदेवादिनामरूपास्पृष्टस्य, 'कलामुहूर्त' इत्यनेन श्रुत्यादिप्रसिद्धस्य परमपदस्य अकालकाल्यत्वमुच्यते; 'नकालस्तत्र वै प्रभुः' इत्यादिस्मृतेश्च॥

५. वि. पु. १-२-२६॥ 'अनादिर्भगवान् कालः ते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः'॥ ततः-कालात्। कालस्यानाद्यन्तत्वात्, सर्गकालनिरोधः-संयमः जगन्नियमनान्तानुप्रवेशो वा; अव्युच्छिन्नाः- प्रवाहरूपेण।विरताः॥ ६॥

मृत्युस्सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४

रा॥सर्वप्राणहरो मृत्युश्चाहम्;उत्पत्स्यमानानामुद्भवाख्यं कर्म चाहम् ; श्रीरहम्; कीर्तिश्चाहम् ; वाक्चाहम् ; स्मृतिश्चाहम् ; मेधा चाहम् ;धृतिश्चाहम्; क्षमा चाहम् ॥ ३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५

साम्नां बृहत्सामाहम् ; छन्दसां गायत्र्यहम् ; कुसुमाकरो वसन्तः ॥ ३५ ॥

ता॥कर्मानुरूपदण्डकालावच्छेदाधिकृतयोर्यमकालाख्यपुरुषयोरुक्तत्वाद्यमादेशकारिप्राणहरणाधिकृतपुरुषविशेष इह 'मृत्युस्सर्वहरः'इत्युच्यत इति ज्ञापनाय—**सर्वप्राणहर** इत्युक्तम् । प्रलये सर्वसंहर्तेश्वर इह मृत्युरिति कैश्चिदुक्तं मन्दम् , 'भूतानामन्त एवच' इत्युक्तत्वात्।उद्भवसहपाठादत्र मृत्युशब्दो मरणपर इति केचित्।उद्भवशब्दस्स्वरसत उत्पत्तिक्रियापरः। उद्भवस्थानादि निमित्तोपादानादिकं चात्र पृथगेव निर्दिष्टमिति क्रियापरत्वमेवोचितमित्यभिप्रायेण-**उद्भवाख्यं कर्मे**त्युक्तम् । कीर्त्यादयो नेह गुणविशेषा विवक्षिताः, तेषां पुरुषेष्वपि च उद्भूतत्वेन 'नारीणाम्' इति विशेषणायोगात्।न च नारीशब्दोऽत्र स्त्रीलिङ्गपदार्थमात्रपरः, मुख्यबाधाभावात् । अतो नारीविशेषनिर्धारणमेव क्रियते । तत्र च श्रिय एव सर्वनारीभ्योऽतिशयितत्वात्सैव प्रथमं वक्तव्या; 'कीर्तिश्श्रीः' इति तु पाठक्रमोऽर्थक्रमेण बाध्यत इत्यभिप्रायेण—**श्रीरहं कीर्तिश्चाह**मित्युक्तम् । एताश्च भगवदसाधारणशक्तयः । अन्यत्र तु तत्तदभिमानविशेषात्तत्तच्छब्दः ॥ ३४ ॥

सामसु बृहत्साम्न उत्कृष्टत्वं श्रुत्यैव सिद्धं 'बृहच्च वा इदमग्रे रथन्तरं च आस्तां वाक्च वै तन्मनश्चास्तां वाग्वै रथन्तरं मनो बृहत्तद्बृहत्पूर्वं ससृजानं रथन्तरमत्यमन्यत तद्रथन्तरं गर्भमधत्त' इति। गायत्र्याश्छन्दसां मातृत्वेनोत्कर्षः श्रुतिषु च्छन्दोविचित्यां च प्रपञ्चितः । यथा बह्वृचोपनिषदि 'अग्र वै छन्दसा गायत्री'इति।मासेषु मार्गशीर्षस्यातिशयः वर्षगर्भाधानकालत्वान्मासाधिदेवेषु केशवादिषु प्रथमस्य केशवस्य मासत्वाद्व्रतवर्गारम्भकालत्वाच्च । कुसुमाकरशब्देनैव वसन्तस्य प्रत्यक्षसिद्धस्सर्वप्राणिसुखहेतुरतिशयो द्योतितः । 'वसन्ते वसन्ते ज्योतिषा यजेत' 'वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेवच' इत्यादिभिश्च ॥ ३५ ॥

प्र-पा ॥ १ ॥ २ ॥ ३. मासेषु कश ॥ ४ ॥ ५ ॥

शं॥अक्षराणाम् वर्णानाम् अकारो वर्णः अस्मि। द्वन्द्वः समासः अस्मि सामासिकस्य च समाससमूहस्य । किञ्च—अहमेव अक्षयः अक्षीणः कालः प्रसिद्धः,क्षणाख्यः परमेश्वरो वा कालस्यापि कालः अस्मि। धाता अहं कर्मफलस्य विधाता सर्वजगतः विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥

मृत्युः द्विविधः धनहरः प्राणहरश्च । तत्र यः प्राणहरः, सर्वहरः स उच्यते । सः अहम् । अथवा परः ईश्वरः प्रलये सर्वहरणात् सर्वहरः सः अहम् । उद्भवः उत्कर्षः अभ्युदयः तत्प्राप्तिहेतुश्च अहम् ; केषां ? भविष्यतां भाविकल्याणानाम् उत्कर्षप्राप्तियोग्यानाम् इत्यर्थः । कीर्तिः श्रीः वाक् च नारीणां स्मृतिः मेधा धृतिः क्षमा,इत्येताः उत्तमाः स्त्रीणाम् अहम् अस्मि, यासाम् आभासमात्रसम्बन्धेनापि लोकः कृतार्थम् आत्मानं मन्यते ॥ ३४ ॥

बृहत्साम तथा साम्नां प्रधानम् अस्मि।गायत्री छन्दसाम् अहं, गायत्र्यादिच्छन्दो-

द्यूतञ्छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६

रा॥छलं कुर्वतां छलास्पदेष्वक्षादिलक्षणं द्यूतमहम् ; जेतॄणां जयोऽस्मि ; व्यवसायिनां व्यवसायोऽस्मि ; सत्त्ववतां सत्त्वं महामनस्त्वम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७

वसुदेवसूनुत्वमत्र विभूतिः, अर्थान्तराभावादेव; पाण्डवानां धनंजयोऽर्जुनोऽहम् ;

---

ता॥'छलयताम्' इत्यत्र 'तत्करोति' इति णिजित्यभिप्रायेण—**छलं कुर्वता**मित्युक्तम्। अक्षसंचारादिमात्रेण जयपराजयारोपादिह च्छलत्ववाचोयुक्तिरित्यभिप्रायेण—**अक्षादिलक्षण**मित्युक्तम्। 'तेजस्तेजस्विनाम्' इत्यादिवत् 'दीव्यतां द्यूतमहम्' इत्यनभिधानात् 'छलयताम्' इतिच्छलकरणमात्रवचनाच्च छलस्थानान्तरेभ्यः क्रयविक्रयऋणदायसंवित्सगरादिभ्यो द्युतस्यातिशयितत्वं विवक्षितमित्यभिप्रायेण—**छलास्पदेष्वि**त्युक्तम् । वञ्चनास्पदेष्वित्यर्थः । अक्षादीत्यादिशब्देन सजीवनिर्जीवसमस्तद्यूतवर्गसंग्रहः । यद्वा निर्जीवमात्रग्रहणाय—**अक्षादिलक्षण**मित्युक्तम् । तस्य चातिशयितत्वमनायासेन धर्माविरोधेनाभ्युपगमादेव समस्तधनहरणादेश्शक्यत्वात् । तेजस्विसत्त्ववच्छब्दयोः पूर्वोत्तरयोस्तेजस्सत्त्वाभ्यामवरुद्धत्वात्तत्र जयव्यवसायशब्दयोरन्वयानौचित्यात्तदुचितौ जेतृव्यवसायिशब्दौ पूर्वापरच्छाययार्थाक्षिप्तावित्यभिप्रायेण—**जेतॄणां व्यवसायिना**मिति चोक्तम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यादिभिस्सत्त्वशब्दस्यानेकार्थसिद्धेर्व्यवसायस्य चोक्तत्वात्सत्त्ववच्छब्दप्रसिद्ध्यनुरोधेनार्थविशेषं दर्शयति—**सत्त्वं महामनस्त्व**मिति। एतेन पराभिभवसामर्थ्यलक्षणात्तेजसोऽपि सत्त्वस्यात्र भेद उक्तः ॥ ३६ ॥

'वृष्णीनां वासुदेवोऽस्मि' इत्यत्रापि रामवत्साक्षात्स्वावतारत्वादाह—**वसुदेवसूनुत्वमत्र विभूति**रिति । **अर्थान्तराभावादे**वेत्येवकारेण रामप्रसङ्गे हेतोः प्रागेवोक्तत्वं सूचितम्। ननु वसुदेवसूनुत्वमिति कथं विभूतिः; नहि सूनुत्वमात्रेणातिशयः, अतिप्रसङ्गात् ; नच वसुदेवाख्यपितृविशेषसूनुत्वेन, तस्याप्यनेकसाधारणत्वेन निर्धारणायोगात् ; नच वासुदेवशब्दप्रसिद्धिमात्रेण, तावन्मात्रस्य अतिशयं प्रत्यप्रयोजकत्वात् ; नचेह वसुदेवसूनुत्वमुपदेश्यम्, अर्जुनस्य संप्रतिपन्नत्वादेव; अतस्साक्षादवतारत्वं नोचितम् ; अत एव वृष्णीनामहमस्मीति नोक्तमित्यत्रोच्यते—वासुदेवशब्दोऽत्र लक्षणया वसुदेवगृहे चतुर्भुजतयावतारप्रभृति अतिमानुषगुणविग्रहपराक्रमादिरूपमागोपालं प्रसिद्धमतिशयं लक्षयति । तस्य चार्जुनं प्रत्यभिधानं दृष्टान्तार्थम् । सर्वनाम्नो युष्मच्छब्दादपि साक्षान्नाम्नोऽत्यन्तासन्नत्वादिभिरतिशयोऽत्र विवक्षितः । धर्मे युधिष्ठिरस्य सर्वातिशायित्वात्, बले च भीमसेनस्य, आभिरूप्यादिषु च माद्रीसुतयोः, अर्जुन इति प्रसिद्धनामधेयेन विशदीकरणम् । तेन स्वाभिमुखमर्जुनं प्रति त्वमिति निर्देशाभावात् किं धनंजयाख्योऽन्य इति शङ्काव्युदासः । नह्यत्र पारोक्ष्यप्रसङ्गः, अपरोक्षस्यैव सर्वस्यात्र सर्वदर्शिना वचनादिति । ऋषित्व ह्यदृष्टविशेषादतीन्द्रियार्थदर्शित्वम् ; तच्च प्रायशः प्रागेवोक्तम् ; अतो मुनीनामित्यनेन तदतिरिक्तो निर्वचनबलात् 'एतमेव विदित्वा मुनिर्भवति' इतिश्रुत्यनुसाराच्च

---

**प्र-पा** ॥ १. अष्टाध्याय्या. ३-१-२५. सू. वा ॥ | वान्तेषु ॥
२. नामलिङ्गानुशासने. ३-काण्डे. नानार्थवर्गे- | ३ ॥

---

शं॥विशिष्टानाम् ऋचां गायत्री ऋक् अहम् अस्मि इत्यर्थः। मासानां मार्गशीर्षः अहम्, ऋतूनां कुसुमाकरः वसन्तः ॥ ३५ ॥

रा॥मुनयो—मननेनार्थयाथात्म्यदर्शिनः, तेषां व्यासोऽहम्; कवयो विपश्चितः ॥ ३७ ॥

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥** ३८

नियमातिक्रमणे दण्डं कुर्वतां दण्डोऽहम् विजिगीषूणां जयोपायभूता नीतिरस्मि;

ता॥विवक्षित इत्यभिप्रायेणाह-**मुनयो मननेनात्मयाथात्म्यदर्शिन** इति।तथाविधश्च भगवतो व्यासस्यातिशयस्तद्वाक्यैरेव सिद्धः—'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा' इत्यादिभिः; 'तपोविशिष्टादपि वै वसिष्ठान्मुनिसत्तमात् । मन्ये श्रेष्ठतमं त्वाद्य रहस्यज्ञानवेदनात् ' इति च । अयमपि कश्चिद्विभवावतारो गण्यते ' वेदविद्भगवान् कल्की पातालशयनः प्रभुः' इति । कवीनामिति न निबन्धृत्वं विवक्षितम् , तथा सति वाल्मीकिप्रभृतेस्सर्वातिशायित्वात् ; अतः क्रान्तदर्शी कविरि ति विवक्षित इत्यभिप्रायेणाह—**कवयो विपश्चित**इति । उशनसो विपश्चित्सु वैलक्षण्य नीतिनिपुणत्वादिभिः । प्रसिद्धं ह्येतत् ' न कश्चिन्नोपनयते पुमानन्यत्र भार्गवात् । शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्ववतिष्ठते ' इत्यादिषु ॥ ३७ ॥

**नियमातिक्रमण** इति दण्डयोग्यत्वकथनम्,अदण्ड्यविषयदण्डस्यातिशयेन नरकहेतुत्वात्।नीतिरस्मि नीतिमतामिति वक्तव्यम्,जिगीषतामित्यनेन तु कीदृशोऽन्वय इत्यत्राह—**विजिगीषूणां जयोपायभूता नीतिरि**ति । बुद्धिव्यापारविशेषो विवक्षितः। लोकविदितस्य वाङ्नियमनरूपस्य मौनस्य गुह्यत्वाभावान्न निर्धारणमुचितम् ; मौनशब्दस्यात्मविद्यादिविषयत्वे तु प्रसिद्धित्यागस्स्यात् , नच गु-

**प्र-पा** ॥ १ गारुडपु पूर्वखं. २२२-१ ॥
२ ॥
३ ॥
४ ॥

शं॥द्यूतम् अक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणाम् अस्मि । तेजस्विनां तेजः अहम् अस्मि। जयः अस्मि जेतॄणां, व्यवसायः अस्मि व्यवसायिनाम् । सत्त्वं सत्त्ववतां सात्त्विकानाम् अहम् ॥ ३६ ॥

वृष्णीनां यादवानां वासुदेवः अस्मि अयमेव अहं त्वत्सखः । पाण्डवानां धनञ्जयः त्वमेव । मुनीनां मननशीलानां सर्वपदार्थज्ञानाम् अपि अहं व्यासः, कवीनां क्रान्तदर्शिनाम् उशना कविः अस्मि ॥ ३७ ॥

दण्डः दमयतां दमयितॄणाम् अस्मि अदान्तानां दमनकारणम् । नीतिः अस्मि जि-

आ॥आच्छादयति सर्वं वासयति वसति चेति सर्वत्र वासुदेवः। देवशब्दार्थ उक्तः पुरस्तात् । 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः। सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्'इति मोक्षधर्मे। विशिष्टः सर्वस्मात् आसमन्तात् स एवेति व्यासः। तथाचा-

ज॥'वृष्णीनां वासुदेवोऽस्मि'इति वासुदेवशब्दं व्याचिकीर्षुर्वासुशब्दार्थं तावदाह—**आच्छादय**तीति । 'वस आच्छादने' इत्यत उण् । वासयति सर्वमिति वर्तते। 'वस निवासे'इत्यतो ण्यन्तादुण् । वसति चेति केवलादुणेव वा । ततः किमायातं वासुदेवशब्दस्येत्यत आह—**देवे**ति । तथाहि देवशब्दार्थमित्यत्र ततः कर्मधारयः । विश्वं समस्तं भूत्वा प्राप्य 'भू प्राप्तावात्मनेपदी' इति वचनात् । सर्वभूताधिवासश्चेति तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः । 'मुनीनामप्यहं व्यासः' इति व्यासशब्दं व्याचष्टे—**विशिष्ट** इति । सर्वस्माद्विशिष्ट इति विशब्दार्थः । आ इत्यनुवादेन समन्ता-

रा॥गुह्यानां संबन्धिषु गोपनेषु मौनमस्मि ; ज्ञानवतां ज्ञानं चाहम् ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९**

सर्वभूतानां सर्वावस्थावस्थितानां तत्तदवस्थाबीजभूतं प्रतीयमानमप्रतीयमानं च यत्, तदहमेव ; भूतजातं मया आत्मतयावस्थितेन विना यत्स्यात् ,न तदस्ति;*'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'इति प्रक्रमात् 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इत्यत्राप्यात्मतयावस्थानमेव विवक्षितम्। सर्वं वस्तुजातं सर्वावस्थं मया आत्मभूतेन युक्तं

ता॥धर्मत्वं मौनस्य,येन'सत्त्वं सत्त्ववताम्' इतिवत्स्यादित्यत्राह—**गुह्यानां संबन्धिषु गोपनेषु मौनमस्मीति** । गुह्यानां गोपनीयत्वं मौनस्य चाषट्कर्णमन्त्रणादपि गोपनोपायत्व सप्रतिपन्नम् ; ततश्चात्र संबन्धमात्रे षष्ठी गोप्यगोपकभावरूपविशेषे विश्रान्ता । 'भूतानामस्मि चेतना[1]' इति चैतन्यमात्रस्य पूर्वमुक्तत्वात् अत्र 'ज्ञानं ज्ञानवताम्' इति पुरुषार्थौपयिकातिशयितज्ञानविशेषोऽभिमतः, 'तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्[3]' इतिवत् ॥ ३८ ॥

'सर्वभूतानां बीजम्'इति न प्रधानमात्रमुच्यते, तस्य साक्षात्सर्वभूतबीजत्वाभावात्; नापि व्रीह्यादिलक्षणं बीजं, तस्य सर्वभूतशब्दसंगृहीतेषु जङ्गमेष्वनन्वयात् ; ततश्चाविशेषेण तत्तत्कार्यावस्थद्रव्यापेक्षया तत्तत्कारणावस्थोपादानद्रव्यमात्रमिह विवक्षितमित्यभिप्रायेणाह—**सर्वावस्थे**ति । एतेन प्राक्तनैमित्तिकसृष्ट्यादेः *'अहमादिश्च' इत्यादिनोक्तत्वादिह नित्यसृष्टिहेतुभूततत्तद्द्रव्यशरीरकत्वेन तद्धेतुत्वमपि प्रदर्शितम्। 'यच्चापि'इत्यनेनाभिप्रेतमाह —**प्रतीयमानमप्रतीयमानं**चेति। अप्रतीयमानमनुमानादिवेद्यमित्यर्थः । ' न तदस्ति' इत्यादौ स्वव्यतिरिक्तासत्त्वादिविधिपरत्वभ्रमव्युदासायाविनाभावार्थतोक्तिः । उपक्रमविरोध्युपसंहारो नोदेतुमलमित्यभिप्रायेणाह—**भूतजात**मिति । आत्मतयावस्थितेन अविनाभावमुपपादयति—**अहमात्मे**ति । व्यतिरेकोक्तिफलितमन्वयविशेषं दर्शयति—**सर्व**मिति।

प्र-पा ॥ *गी. १०-२० ॥　१. गी. १०-३६ ॥　२. गी. १०-२० ॥　३ वि. पु. ६-५-८७॥

शं॥गीषतां जेतुमिच्छताम्।मौनं चैव अस्मि गुह्यानां गोप्यानाम्।ज्ञानं ज्ञानवताम् अहम्॥

यच्चापि सर्वभूतानां बीजं प्ररोहकारणं, तत् अहम् अर्जुन।प्रकरणोपसंहारार्थं विभूतिसंक्षेपम् आह—न तत् अस्ति भूतं चराचरं चरम् अचरं वा मया विना यत् स्यात्

आ॥त्रिवेश्यशाखायां'स व्यासो वीति तमप् वै विः सोऽधस्तात्स उत्तरतः स पश्चात्स पूर्वस्मात्स दक्षिणतः स उत्तरतइति' इति । 'यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति च ॥ ३७ ॥ ३८ ॥

मया विना यद्भूतं स्यात्तन्नास्ति।'विश्वरूप अनन्तगतिरनन्तभाग अनन्तग अनन्तः'

ज्ञा॥दिति व्याख्यानम्।स इत्यस्य एवेति।'सृ गतौ' 'सृपृ गतौ' इत्यतो वा डे रूपमेतत् । ननु तदः । व्यासमित्याद्यनुपपत्तेः । समन्ताद्गतः सर्वगत इत्यर्थः । स व्यासः । कुतः ? वीति हेतोः । कोऽर्थः । तमपोऽर्थो हि विशब्दः।उत्तरत उपरिष्टात्।'यच्च किञ्चित्'इति भगवतः सर्वगतत्वे प्रमाणम्॥३७॥३८॥

'न तदस्ति विना' इत्यत्र पदानां व्यवहितत्वादन्वयमाह—**मये**ति । भगवतोऽनन्तैरूपैः सर्वपदार्थव्यापित्वे प्रमाणमाह—**विश्वे**ति । विश्वं रूपं प्रतिमा यस्यासौ विश्वरूपः । अनन्तानां गतिराश्रयोऽनन्तगतिः । अनन्ता भागा अवतारा यस्यासावनन्तभागः । अनन्तान्पदार्थान् गतः अनन्तगः ।

रा॥स्यादित्यर्थः। अनेन सर्वस्यास्य सामानाधिकरण्यनिर्देशस्यात्मतयावस्थितिरेव हेतुरि-
ति प्रकटयति ॥ ३९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।

एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४०

मम दिव्यानां कल्याणीनां विभूतीनामन्तो नास्ति; एष तु विभूतेर्विस्तरो मया कैश्चिदुपाधिभिः संक्षेपतः प्रोक्तः ॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।

तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१

यद्यद्विभूतिमत्-ईशितव्यसंपन्नं भूतजातं श्रीमत्-कान्तिमत्, धनधान्यसमृद्धं वा,

---

ता॥उपक्रमोपसहारयोरविनाभावकथनस्य भगवदभिप्रेतं प्रयोजनमाह—अनेनेति। क्वचित्क्वचिद्द्रव्यव्यतिरिक्तैस्सामानाधिकरण्यमपि तदाश्रयद्रव्यस्य भगवच्छरीरत्वादिति प्रागेव प्रपञ्चितमस्माभिः॥३९॥

निश्शेषवचनाशक्यता प्रागुक्तामेव स्मारयति —'नान्तोऽस्ति'इति। दिव्यशब्देन देशविशेषवर्तित्वादिविवक्षायां पूर्वमनियतदेशवर्तिनामदिव्यानां प्रपञ्चनं विरुध्येतेत्यत उक्तं—कल्याणीनामिति। '[1]विभूतीरात्मनश्शुभाः' इति ह्युपक्रान्तम्। उद्देशतः-एकदेशतः प्रयोजकाकारैः विभूत्युद्धारेणेत्यर्थः। तदभिप्रायेणाह—कैश्चिदुपाधिभिस्संक्षेपत इति ॥ ४० ॥

'प्राधान्यतः'इत्युपक्रम्य प्रपञ्चितमर्थमनुक्तानामवश्यवक्तव्यप्रधानविभूतीनां सग्रहाभिप्रायेणोपसंहरति'यद्यत्' इतिश्लोकेन। विभूतिशब्दस्य प्राकरणिकमर्थमनुसंधायोक्तम्—ईशितव्यसंपन्नमिति। सत्त्वशब्दोऽत्र जन्तुपरः। वीप्साभिप्रायव्यञ्जनाय जातशब्दः। विभूतिमच्छ्रीमच्छब्दयोः पौनरुक्त्यं परिहरति—कान्तिमदिति।नियन्तव्यविशेषविवक्षया वा गोबलीवर्दन्यायात्पुनरुक्तिपरिहार इत्यभिप्रायेणाह—धनधान्यसमृद्धंवेति। ऊर्जितमित्युत्कृष्टत्वादिसामान्यविवक्षायामितरपाठवैयर्थ्यात् विशिष्टमर्थमाह—

प्र-पा ॥ १ गी. १०-१९ ॥

---

शं॥भवेत्। मया अप्रविष्टं निरात्मकं शून्यं हि तत् स्यात्। अतः मदात्मकं सर्वम् इत्यर्थः॥

न अन्तः अस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप। न हि ईश्वरस्य सर्वात्मनः दिव्यानां विभूतीनाम् इयत्ता शक्या वक्तुं ज्ञातुं वा केनचित्। एष तु उद्देशतः एकदेशतः प्रोक्तः विभूतेः विस्तरः मया ॥ ४० ॥

यद्यत् लोके विभूतिमत् विभूतियुक्तं सत्त्वं वस्तु श्रीमत् ऊर्जितमेव वा उत्साहो-

---

आ॥इत्यादि मोक्षधर्मे ॥ ३९ ॥

'यद्यद्विभूतिमत्' इति विस्तरः। विष्ण्वादीनि तत्स्वरूपाण्येव। अन्यानि तु तेजो-

---

ज॥अनन्तः कालाद्यपरिच्छिन्नः ॥ ३९ ॥

'एष तूद्देशतः' इत्येतच्छब्दोऽनुक्रान्तपरामर्शीतिप्रतीतिनिरासार्थमाह —यद्यदिति। वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते। शृङ्गग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः। विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या विष्ण्वादीनामपि भगवदंशयुक्तत्वं प्रतीयते। तेषामप्येतल्लक्षणोपेतत्वात्तन्निवृत्त्यर्थमाह —विष्ण्वादीनीति। तर्हि किंविषयमेतद्वाक्यमित्यत आह—अन्यानि त्विति।

रा॥ऊर्जितं कल्याणारम्भेषूद्युक्तम् ;तत्तन्मम तेजोंशसंभवमित्यवगच्छ;तेजः-पराभिभवन-सामर्थ्यम्, ममाचिन्त्यशक्तेर्नियमनशक्त्येकदेशसंभवमित्यर्थः॥ ४१ ॥

---

ता॥कल्याणेति। ऊर्जाशब्दो ह्यदीनत्वेन सन्नाहशीलत्वपरः।विभूतिमदित्यादि बलादिमतां प्रदर्शनम्। 'मम तेजोंशसंभवम्' इत्युक्ते विग्रहगततेजोद्रव्यैकदेशोपादानत्वं प्रतीयेतेति तन्निरासाय प्रकृतौपयिकं तेजश्शब्दार्थमाह-—तेजः पराभिभवनसामर्थ्यमिति।कोऽयमत्राभिभवो नाम, तत्र च कथमंशसद्भाव इत्यत्राह—ममेति। अचिन्त्यशक्तेरित्यनेन चिन्ताऽयोग्यांशनिष्कर्षाय ममेत्यस्याभिप्रायो विवृतः।'तेन सर्वगोचरत्वाभङ्गुरत्वाघटितघटनत्वादिसिद्धिः। यथा शैलान्दोलनदोहलिनश्चण्डमारुतस्य तृणप्रेरणादिकं वेगलेशमात्रभवम्, तद्वदिहेति भावः। तेजसोंशस्सभवो यस्य तत्तेजोंशसंभवम् ॥ ४१ ॥

---

शं॥पेतं वा, तत्तदेव अवगच्छ त्वं जानीहि मम ईश्वरस्य तेजोंशसंभवं तेजसः अंशः एकदेशः संभवः यस्य तत् तेजोंशसभवम् इति अवगच्छ त्वम् ॥ ४१ ॥

---

आ॥युक्तानि।तथाच पैङ्गिखिलेषु—'विशेषका रुद्रवैन्येन्द्रदेवा राजन्याद्या अंशयुतान्यजीवाः। कृष्णव्यासौ रामकृष्णौ च रामकपिलयज्ञप्रमुखाः स्वयं सः' इति। 'स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुतान्यजीवाः' इति गौतमखिलेषु। 'ऋषयो मनवो देव मनुपुत्रा महौजसः। कलाः सर्वे हरेरेध सप्रजापतयः स्मृताः। एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति भागवते। ऋष्यादीनंशयुतत्वेनोक्त्वा वराहादीन्स्वरूपत्वेनाह। तुशब्द एवार्थे। अन्यस्तु विशेषो न कुत्राप्यवगतः। अंशत्वं तत्राप्यवगतम्—'उद्बबर्हात्मनः केशौ' इति। मृडयन्तीति च बहुवचनं चायुक्तम्। नह्यन्तराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित् ॥ ४१ ॥

---

ज॥कुत एतदित्यत आह—तथाचेति।विशेषकाः गरुडानन्तविरिञ्चाः;वैन्यः पृथुः।राजन्यग्रहणेन गृहीतस्यापि पुनरुक्तिः साक्षादवतारत्वविशेषोक्तिबोधनार्थम्। कृष्णो धर्मसूनुरपि। रामो भार्गवोऽपि। अंशयुक्तत्वेनोक्त्वा कला इत्यनेन कला इव कलाः,न स्वरूपत्वेन। 'एते स्वांशकलाः' इत्यनेन स्वरूपांशरूपा एव कलाः, न तु पूर्ववदुपचारेणेति। नन्वत्रैते वराहाद्याः परमपुरुषस्यांशा एव, कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते,तत्कथमुक्तव्याख्यानम्, अन्यथा तुशब्दानुपपत्तेरित्यत आह—तुशब्दइति।ततश्चायमर्थः—एते वराहाद्याः पुंसः स्वांशकलाः ; कोऽर्थः? कृष्णः परमपुरुषो भगवान् स्वयमेवेत इति। कुत एतदिति चेत्—उदाहृतश्रुतिसंवादात्, अर्थान्तरस्य संवादाभावाच्चेत्याह—अन्यस्त्विति। वराहादयोऽप्यंशाः, कृष्णोंऽशीत्येवंरूपः। इतोऽन्यं विशेषो न युक्त इत्याह—अंशत्वमिति। तत्रापि कृष्णेऽपि। किंचास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे' इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह—मृडयन्तीति। ननु बहुवचनं पूर्वोक्तैर्वराहादिभिः संबध्यते, न कृष्णेनेति चेत्—न, 'कृष्णस्तु भगवान् स्वयम्' इति वाक्यार्थेन व्यवहितत्वात्, व्यवहितस्यापि पुनः संनिधानाय परामर्शाभावात्, सति गत्यन्तरेऽध्याहारायोगात्, असंनिहितेनान्वयबोधस्य क्काप्यदर्शनादिति भावेनाह—नहीति। क्रियेति प्रकृतापेक्षयोक्तम्। ननु संनिधेरपि योग्यता बलवतीति चेत्—सत्यम्; संनिधिमनतिक्रम्य योग्यान्वयस्तूक्तः॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥** ४२

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अक्षरपरब्रह्मयोगो नाम दशमोऽध्यायः ॥ १० ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

रा॥ **बहुनैतेनोच्यमानेन ज्ञानेन किं प्रयोजनम्, इदं चिदचिदात्मकं कृत्स्नं जगत्कार्यावस्थं कारणावस्थं स्थूलं सूक्ष्मं च स्वरूपसद्भावे, स्थितौ, प्रवृत्तिभेदे, च यथा मत्सङ्कल्पं नातिवर्तेत, तथा मम महिम्नोऽयुतायुतांशेन विष्टभ्याहमवस्थितः । यथोक्तं भगवता**

---

ता॥ 'प्राधान्यतः' इत्युपक्रान्तमुपसंहृतम्; अथ संक्षेपेण प्रधानाप्रधानसमस्तविभूतिसंग्रहमाह—**'अथवा'** इति श्लोकेन । **उच्यमानेनेति**-एतच्छब्द उक्त्यवसानराहित्यपर इति भावः । विभूतिपर्यवसानज्ञानरूपं प्रयोजनं न सिध्येदित्यभिप्रायेणाह—**किं प्रयोजनमिति**। इदमित्यनेन तत्तत्प्रमाणप्रतिपन्नवैचित्र्यं सूचितमित्यभिप्रायेण—**चिदचिदात्मकमित्युक्तम्** । **कार्येत्यादिना** कृत्स्नशब्दाभिप्रेतविवरणम् । **स्थूलं सूक्ष्मंचेति** कार्यकारणावस्थयोर्यथाक्रममन्वयः । **स्वरूपेत्यादिना** विष्टम्भनप्रयोजनकथनम् । अनित्येषु स्वरूपसद्भाव उत्पत्तिः, नित्येषु त्वसद्व्यतिरेकः । नित्यानां स्वरूपमपि हि भगवतो नित्येच्छासिद्धम् । इदं च प्रागेव प्रपञ्चितम् । अत्र स्वरूपैकदेशावतारादिरूपांशव्युदासाय नियमनप्रकरणबलाच्च—**मम-महिम्नइत्युक्तम्**। अत्र महिमशब्देन प्रकृतं नियमनसामर्थ्यमेव विवक्षितम् । अत एव 'तेजोंशसंभवम्'

**प्रा-पा॥** १. गी १०. १९ ॥

---

शं॥ **अथ वा बहुना एतेन एवमादिना किं ज्ञातेन तव अर्जुन स्यात् सावशेषेण । अशेषतः त्वम् उच्यमानम् अर्थं शृणु ; विष्टभ्य विशेषतः स्तम्भनं कृत्वा इदं कृत्स्नं जगत् एकांशेन एकावयवेन एकपादेन सर्वभूतस्वरूपेण इत्येतत्, तथाच मन्त्रवर्णः 'पादोऽस्य**

---

आ॥ **किमिति? वक्ष्यमाणप्राधान्यज्ञापनार्थं न तूक्तनिष्फलत्वज्ञानाय। तथा सति नोच्येत 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं वरं को विमुच्येत बन्धात्' इत्यृग्वेदखिलेषु । त्वं तु बहुलफलप्राप्तियोग्य इति तवेति विशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः ।**

---

ज॥ 'अथवा बहुनैतेन किं ज्ञातेन' इति पूर्वोक्तव्यस्तज्ञानाक्षेपात् तस्य निष्फलत्वमिति प्रतीतिनिरासार्थमाह—**किमिति** । किमित्ययमाक्षेपो वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्योक्तरविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव,न तूक्तविशेषज्ञानस्य निष्फलत्वज्ञापनार्थम् । निष्फलत्वे तदुक्तिवैयर्थ्यापत्तिरित्यर्थः । ननु व्याप्तज्ञानेनैव मुक्तिसम्भवाद्विशेषज्ञानं व्यर्थमेव किं न स्यादित्यत आह—**अज्ञात्वेति**। 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्यादिकं ध्यानापेक्षयोक्तं, ज्ञानापेक्षया तु श्रुतिरित्यविरोधः;अथवा विशिष्टाधिकारिविषयेयं श्रुतिः । ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव ; अन्यान्प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु तवेति विशेषणसामर्थ्यादित्यत आह—**त्वं त्विति** । अतो न तव विशेषज्ञानमात्रेणालमिति ज्ञापयितुमिति शेषः । विशेषणस्यान्यथासिद्धत्वान्नोक्तव्यवस्थाकल्पकत्वमिति भावः । ननु किं ज्ञातेन न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसङ्गात् बाधकान्निष्फलाल्पफलयोर्महाफलत्वाभावसादृश्याद्गौण्या वृत्त्योक्तस्याप्राधान्यप्रतीतावर्थाद्वक्ष्यमाणस्य प्राधान्यप्रतीतिरित्युक्तम् । तत्र गौणप्रयोगे प्रयोजनं वाच्यमिति चेत्—न, रूढोपचारत्वादिति भावेनाह—**अन्येति**। स्तु-

रा॥पराशरेण *'यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता' इति ॥ ४२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

श्रीमते रामानुजाय नमः.

---

ता॥इत्यनेनैकार्थ्यम् । एकशब्दोऽत्रातिक्षुद्रत्वपर इत्यभिप्रायेणोक्तम्—**अयुतायुतांशे**नेति।स्तम्भनमत्र स्वैराग्निवारणम् ; स्ववशीकरणरूपमधिष्ठानं वा। एकांशेनेत्यत्र स्वोक्तमर्थं सवादयति— **यथोक्त**मिति । विश्वशक्तिः विश्वमेव शक्तिः, तत्तत्कार्योपयुक्तविशेषणभूतं विश्वमित्यर्थः। 'तेजोंशसंभवम्' इत्यनन्तरम् अभिधानात्'एकांशेन' इत्यस्याप्यंशशब्दस्य तद्विषयत्वमेव न्याय्यमिति भावः ॥ ४२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य

कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां

दशमोऽध्यायः ॥ १० ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

प्र-पा॥ *वि पु. १-९-५३ ॥

५६४.तम पुटे २०-तम पङ्क्तौ यदुक्तम् 'अत्र वक्तव्यमध्यायान्ते' इत्यादि, तदेतत्—अनेन दक्षदौहितृप्रसूतत्वरूपैकोपाधिपरिगृहीतत्वात् ब्रह्मसावर्णादिपरतया चत्वारो मनव इति मूलं व्याख्यातमिति भाव । एतेन—नामसाम्यस्य ग्रहणोपाधित्वे मेरुसावर्णादेरपि ग्राह्यत्वापत्त्या चत्वार इत्येतदसङ्गतं स्यादिति शङ्का परास्ता, तेषामन्यप्रसूतत्वस्य श्रीविष्णुपुराणादिसिद्धत्वात् । 'इमाः प्रजा.' इतीदंशब्दस्य 'यतो वा इमानि भूतानि' 'जन्माद्यस्य' इति श्रुतिसूत्रयोरिव कालत्रयवर्तिसर्वप्रजोपलक्षकत्वान्न भविष्यन्मनूपादानासाङ्गत्यशङ्कावकाशः । वर्तमानपरत्वेऽपि इदंशब्दस्य प्रथमतरस्वायम्भुवमन्वन्तरेऽपि दक्षकृतप्रजानामेव लोके विततत्वस्य भागवते 'दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान्मनुः । प्रायच्छद्यत्कृतस्सर्गस्त्रिलोक्या विततो महान्' (४-१-११)-'तेभ्यस्तस्यामभूद्राजन् दक्षः प्राचेतसः किल। यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः । रेतसा मनसा चैव तन्ममावहित. शृणु' (६-४-१७, १८.) इत्यादौ स्पष्टमुपपादितत्वेन, अत्र च 'येषां लोक इमा: प्रजा' इत्यस्य दक्षदौहित्रब्रह्मसावर्णादिग्रहणेऽपि दक्षपुत्रपौत्रादिपरम्परायास्तद्दौहित्रसम्बन्धिसन्तानत्वस्याक्षतत्वेन उदाहृतभागवतश्लोकैकार्थ्येन सुतरां सङ्गतत्वाच्च । अत्र केचित्—प्रथमातिक्रमे कारणाभावात्, 'येषां लोक इमाः प्रजाः' इति निर्देशाच्च स्वायम्भुवस्वारोचिषरैवतोत्तमाख्याश्चत्वारो मनव उच्यन्ते, पूर्वतरमनुसन्तत्युत्पन्नत्वस्य वर्तमानप्रजासु सुवचत्वादिति वदन्ति । तच्चिन्त्यं, तथा त्वेऽपि षण्णामतीतानां वक्तव्यत्वे चतुर्णां पृथक्करणस्यासङ्गतत्वापातात् ; यदपि 'स्वायम्भुवं रोचिषं च रैवतं च तथोत्तमम् । वेद यः स प्रजावान्' इति गौतमखिलोक्ततया प्रतिपादितवचने तेषां प्राधान्यं प्रजारूपफलसाधनज्ञानविषयत्वरूपं प्रतीयत इति, तत्रापि भ्रमः—तस्य प्रमाणतया सम्प्रतिपन्नत्वेऽपि 'श्रुत्वा मन्वन्तराणीत्थं क्रमेण मुनिपुङ्गव । पुण्यमाप्नोति मनुजस्तथाऽक्षीणां च सन्ततिम्' (१००-अ-६-श्लो) इति मार्कण्डेयपुराणवचनेन चतुर्दशमन्वन्तरविज्ञानस्यापि प्रजावृद्धिकरत्वप्रतिपादनात् तन्मात्रनिर्धारणाप्रयोजकत्वम्, अत एवोक्तवचनस्य सर्वमनूपलक्षकत्वमिति चतुर्थस्य तामसस्य अवश्यवक्तव्यत्वेन तमतिक्रम्य पञ्चममनुग्रहणस्यानुचितत्वच । यदुक्तं तामसस्य विष्ण्ववतारत्वेन तद्ग्रहणे 'मद्भावा मानसा जाताः' इत्यस्यानन्वयात् तत्परित्यागः ; तस्य तत्त्वं च भागवते 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः।

हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात्' इति प्रतिपादितमिति ; तदपि विमर्शासहं, तत्र हि प्रतिमन्वन्तरं यज्ञादिरूपेण भगवदवतारं प्रतिपाद्य तामसमन्वन्तरे हरिरूपेण भगवानवतीर्ण इति हि प्रतिपाद्यते। तत्रत्योऽयं ग्रन्थः—'चतुर्थ उत्तमभ्राता मनुर्नाम्नाथ तामसः' (भागव ८. १. २८) इत्युक्त्वा 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः। हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात्।' (भागव ८. १-३१) इति। तत्रैव मन्वन्तरकथोपसंहारेच 'यज्ञादयो या' कथिताः पौरुष्यस्तनवो नृप। मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः' (भागव ८-१४. ३) इति निगमितम्। तथा श्रीविष्णुपुराणे च 'विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता। मन्वन्तरेष्वशेषेषु देवत्वेनाधितिष्ठति' (वि पु. ३ अं २८ अ) इति प्रक्रम्य स्वायंभुवादिमन्वन्तरेषु यज्ञादिरूपेण भगवदवतारं प्रतिपाद्य 'तामसस्यान्तरे चापि संप्राप्ते पुनरेव हि। हर्यायां हरिभिस्सार्धं हरिरेव बभूव ह' (वि-पु-३-अं. २. अ) इति प्रतिपादितमिति न तामसस्य विष्णववतारत्वगन्धोऽपीति; अस्तु वा तस्य तथात्वं, तथापि षष्ठस्य चाक्षुषस्याप्यतीतत्वाविशेषेण चत्वार इत्यस्य तत्परित्यागेनार्थवर्णनस्य निर्युक्तिकत्वप्रसङ्गश्च—इति ; तस्मादाचार्यानुगृहीतार्थस्समीचीन इति प्रतिभाति ॥

शं॥विश्वा भूतानि' इति, स्थितः इति ॥ ४२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

---

आ॥'रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम्। तावुभौ यदि न स्यातां तपसा किं प्रयोजनम्'इत्यादौ। प्राधान्यं च सिद्धमेकत्र दर्शनात्सर्वत्र भगवद्दर्शनस्य, 'यो मां पश्यति सर्वत्र' इत्यादौ ॥ ४२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

---

ज॥तिः प्रशस्तताज्ञापनम्। अर्थः प्रयोजनम्। स्यादिदं व्याख्यानं, यदि परिच्छिन्नज्ञानाद्व्याप्तज्ञानस्य प्राधान्यं प्रमितं स्यात्, तदेव कुत इत्यत आह—प्राधान्यं चेति। 'यो माम्' इति विशिष्टफलकथनात्। न्यायसिद्धोऽप्यर्थो वाक्यसम्मत्या दृढो भवतीत्येतदुक्तम् ॥ ४२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां दशमोऽध्यायः ॥ १० ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनतामतिः ।
भक्त्युत्पत्तिविवृद्ध्यर्था विस्तीर्णा दशमोदिता ॥ १४ ॥

श्रीमद्यामुनमुनये नमः.

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र नवमसंगतिपूर्वकं भाष्यं—'भक्तियोगस्सपरिकर उक्तः; इदानीं भक्त्युत्पत्तये तद्विवृद्धये च भगवतो निरङ्कुशैश्वर्यादिकल्याणगुणानन्त्यं वक्तु कृत्स्नस्य जगतस्तच्छरीरतया तदात्मकत्वेन तत्प्रवर्त्यत्वं च प्रपञ्च्यते' इति । एकादशारम्भे च भाषितम्—'एंव भक्तियोगनिष्पत्तये तद्वृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतस्सर्वात्मकत्वं, तत एव तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वं चोक्तम्, तमेत भगवदसाधारणं स्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तितां च भगवत्सकाशादुपश्रुत्य एवमेवेति निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्तुकामोऽर्जुन उवाच' इति ॥ १४ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.



---

प्र-पा ॥ १. गी-भा-१०-१ श्लो-अव ॥ २. गी-भा-११-१. श्लो-अव ॥



# एकादशोऽध्यायः.

रा॥एवं भक्तियोगनिष्पत्तये तद्विवृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतस्सर्वात्मत्वं तत एव तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वं चोक्तम्, तमेतं भगवदसाधारणं स्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तितां च भगवत्सकाशादुपश्रुत्यैवमेवेति निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्तुकामोऽर्जुन उवाच।तथैव भगवत्प्रसादादनन्तरं द्रक्ष्यति;*"सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा"इति हि वक्ष्यते—

**अर्जुन उवाच—**

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १

ता॥विश्वरूपाध्यायमवतारयितुं विभूत्यध्यायार्थं संगृह्णाह—**एवमिति**। **भक्तियोगनिष्पत्तये तद्विवृद्धये**चेति प्रयोजनकथनेनानन्तरमर्जुनस्य दिदृक्षा भक्तिविवृद्ध्यधीनेति सूचितम्। **सकलेतरविलक्षणे**ति—सकलेतरवैलक्षण्यरूपेणेत्यर्थः । यद्वा सकलेतरस्वभावविलक्षणेनेत्यर्थः । एतेनानवधिकातिशयत्वमुक्तं भवति। 'अनन्यसाधारणं स्वाभाविकमनवधिकातिशयम्' इतिपूर्वोक्तस्यात्र प्रातिलोम्येन प्रत्यभिज्ञानात्—**सकलेतरविलक्षणेन भगवदसाधारणे**नेत्यनयोर्यथेष्टं हेतुसाध्यभावेन अन्वयात्समाधिकराहित्यतात्पर्याच्च नानर्थक्यम्। श्रुतार्थनिश्चयाधीनभक्तिविवृद्धिफलभूतदिदृक्षामूलमुत्तराध्यायोपोद्घातरूपमर्जुनवाक्यमवतारयति—**तमेतमिति** । तं-सर्वातिशायिनम्, एतम् उक्तप्रकारम्। **भगवत्सकाशा**दित्यनेन निश्चयहेतुभूतमाप्तत्वं सूचितम्; नह्याचार्यान्तरसकाशादुपश्रवणे दिदृक्षाया सत्यामपि दर्शनप्रार्थनं घटत इति च भावः । 'एवमेतत्' इत्यादिश्लोकार्थाभिप्रायेणाह—**एवमेवेति निश्चित्ये**ति । ननु'एवमेतद्यथात्थ ' इति पूर्वोक्तमभ्युपगम्य 'द्रष्टुमिच्छामि ते रूपमैश्वरम्'इत्यर्थान्तरस्य रूपविशेषस्य दिदृक्षावचनमिव भाति; ततश्च कथं तथाभूतं भगवन्तं साक्षात्कर्तुकाम इत्युच्यते, तत्राह—**तथैवे**ति। श्रुतप्रकारेणेत्यर्थः। तद्विवृणोति—**सर्वाश्चर्ये**ति।'अहं सर्वस्य प्रभवः' इत्यादिना'[1]विष्टभ्याहमिदं कृत्स्न

**प्र पा ॥** * गी ११-११-१३ ॥ १. गी. १० ८ ॥ २. गी. १०-४२ ॥

श॥भवतो विभूतय उक्ताः । तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवता अभिहितं श्रुत्वा यत् जगदात्मरूपम् आद्यम् ऐश्वरं तत् साक्षात्कर्तुम् इच्छन् **अर्जुन उवाच**—**मदनुग्रहाय** मदनुग्रहार्थं **परमं** निरतिशयं **गुह्यं** गोप्यम् **अध्यात्मसंज्ञितम्** आत्मानात्मविवेकविषयं **यत्** त्वया **उक्तं वचः** वाक्यं, **तेन** वचसा **मोहः अयं विगतो**

रा॥देहात्माभिमानरूपमोहेन मोहितस्य ममानुग्रहैकप्रयोजनाय परमं गुह्यं-परमं रहस्यमध्यात्मसंज्ञितम्—आत्मनि-वक्तव्यं वचः *'न त्वेवाहं जातु नासम्'इत्यादि †'तस्माद्योगी भवार्जुन' इत्येतदन्तं यत्त्वयोक्तम्, तेनायं ममात्मविषयो मोहस्सर्वो विगतो दूरतो निरस्तः ॥ १ ॥

तथा च—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २

तथा सप्तमप्रभृति दशमपर्यन्ते त्वद्व्यतिरिक्तानां सर्वेषां भूतानां त्वत्तः

ता॥मेकांशेन स्थितो जगत्'इत्यन्तेन प्रतिपादितो ह्यर्थोऽत्र विग्रहविशेषानुबन्धेन प्रत्यक्षं प्रत्यभिज्ञायत इति भावः।अत्र साक्षात्कारं प्रार्थयितुं'मदनुग्रहाय'इत्यादिभिस्त्रिभिश्श्लोकैः कृतज्ञतामास्तिक्यं भक्तिमत्त्वं च दर्शयति।तत्र प्रथमेन अध्यात्मशब्दादिस्वारस्यात्'भवाप्ययौ'इत्यादेस्सप्तमाद्यर्थस्य पृथग्वचनाच्चात्मतत्त्वतदवलोकनोपायश्रवणतत्फलानुवादः क्रियत इत्यभिप्रायेणाह—देहात्मेति। 'मोहो विगतः' इत्यनन्तरमभिधानात् मच्छब्देन मोहविशिष्टस्वरूपं विवक्षितमित्यभिप्रायेण - मोहितस्येत्यन्तमुक्तम्। 'मदनुग्रहाय' इत्यनेन न ह्यन्यत्तेनानवाप्तमवाप्तव्यमस्तीत्यभिप्रेतमित्याह- मदनुग्रहैकप्रयोजनायेति। युद्धप्रोत्साहनमात्रशङ्काप्यनेन निरस्ता। परमशब्दविशेषितगुह्यशब्देन 'मौनं चैवास्मि गुह्यानाम्' इत्युक्तगुह्यत्वप्रतीतिव्युदासाय रहस्यशब्देन व्याख्या। गुह्यतमभक्तियोगशेषत्वात्परमत्वविशेषणमित्याद्यत्य परमशब्दपाठेन सूचितम्। आत्मनि प्रतिपादकत्वेनाधिवसनाद्वचसोऽध्यात्मत्वमित्यभिप्रेत्य —आत्मनि वक्तव्यमित्युक्तम्। उपोद्घातान्मध्यमषट्कप्रस्तावश्लोकार्थाच्चावच्छिद्य जीवात्मप्रधानमंशमध्यात्मशब्दानूदितमाह—नत्वेवाहमिति। 'अध्यात्मसंज्ञितम्' इत्येतदनुसारात् 'अयम्' इत्यपरोक्षनिर्देशाभिप्रेतमुक्तं—ममात्मविषयइति। 'विगतः' इत्यनेन सोपसर्गेण सवासन निश्शेषविनाशो विवक्षित इति प्रदर्शनाय—सर्वशब्दः। दूरतो निरस्त इति सस्कारस्यापि तिरस्कारादपुनरङ्कुरं विनष्ट इत्यर्थः॥ १ ॥

'भवाप्ययौहि' इत्यादेः प्रकृतहेत्वर्थत्वव्युदासेन पृथगर्थत्वव्यञ्जनायाह—तथाचेति। सप्तमप्रभृति दशमपर्यन्तइति। भाष्यकारः स्वानुसंहिताध्यायोक्त्या तत्रत्यवचनमुपलक्षयति। बहुवचनासङ्कोचसूचितम् 'अहं कृत्स्नस्य' इत्यादिनोक्तमाह —त्वद्व्यतिरिक्तानामिति। निवृत्तमानुषत्वभ्रम-

प्र-पा॥ *गी. २-१२॥ †गी. ६-४६॥ १. गी. १० ३८॥ २. इत्युक्तावक्तव्यत्व॥ ३.गी.७ ६॥

शं॥मम, अविवेकबुद्धिः अपगता इत्यर्थः॥ १ ॥

किञ्च—भवः उद्भवः उत्पत्तिः,अप्ययः प्रलयो हि भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशः न संक्षेपतः मया त्वत्तः त्वत्सकाशात् कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं त-

आ॥ श्रीः ॐ। यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते॥ १ ॥

ज॥एतदध्यायप्रतिपाद्यमर्थमाह—यथेति। दशमान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति व्याप्तोपासनं सङ्क्षेपेणोक्तम्। न च सङ्क्षेपोक्तस्य ध्यानं शक्यम्, बुद्धावनारोहात्। अतो यथाभूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति, तथाभूतस्वरूपस्थितिरर्जुनाय प्रदर्शितस्यानुवादेनानेनैकादशेनाध्यायेनोच्यते। स्वरूपग्रहणेन विश्वरूपस्य मायादिना तदैव निर्मायविसृष्टत्वं निवारयति॥

रा॥परमात्मनो भवाप्ययौ-उत्पत्तिप्रलयौ विस्तरशो मया श्रुतौ हि । कमलपत्राक्ष तवाव्ययं नित्यं सर्वचेतनाचेतनवस्तुशेषित्वं ज्ञानबलादिकल्याणगुणगणैस्तवैव परतरत्वं सर्वाधारत्वं चिन्तितनिमिषितादिसर्वप्रवृत्तिषु तवैव प्रवर्तयितृत्वमित्याद्यपरिमितं माहात्म्यं च श्रुतम् । हिशब्दो वक्ष्यमाणदिदृक्षाद्योतनार्थः ॥ २ ॥

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३**

हे परमेश्वर,एवमेतदित्यवधृतम्,यथात्थ त्वमात्मानं ब्रवीषि।पुरुषोत्तम आश्रितवात्सल्यजलधे तवैश्वरं त्वदसाधारणं सर्वस्य प्रशासितृत्वे, पालयितृत्वे, स्रष्टृत्वे, संहर्तृ-

ता॥स्यार्जुनस्य वचनत्वात्‘त्वत्तः’इत्यनेन भवाप्ययौपयिकरूपत्वं विवक्षितमित्यभिप्रायेण—**परमात्मन** इत्युक्तम्। अप्ययशब्दस्य पञ्चम्यनन्वयाद्भवाप्ययशब्देन संसारमोक्षादिप्रतीतिस्स्यादिति तद्व्युदासायोक्तम्—**उत्पत्तिप्रलयाविति**। निमित्तोपादानसाधारणहेतुमात्रे पञ्चमीत्यप्ययान्वयः । ‘त्वत्तः श्रुतौ’ इत्यन्वयस्तु मन्दप्रयोजन इति भावः । विस्तरशः-विस्तरेणेत्यर्थः । ‘कमलपत्राक्ष ’ इत्यनेनान्तरादित्यविद्यादिप्रतिपादितपुण्डरीकाक्षत्वविशिष्टाप्राकृतविग्रहवत्त्वमस्मिन्नवतारेऽपि स्पष्टमुपलभ्यत इति सूचितम् । पुण्डरीकाक्षस्यैव हि सर्वलोककामेशत्वादिकमव्ययं माहात्म्यं तत्र　यते । **माहात्म्यमित्यत्र** ‘ तव ’ इति विपरिणतानुषङ्गः । अव्ययशब्देन कालतो विषयतः सङ्ख्यातः प्रकर्षतश्चानवधिकत्वं प्राक्सिद्धमिहाभिप्रेतमित्यभिप्रायेणोक्तं—**नित्यमित्यादि**—**अपरिमितमित्यन्तम्**। ‘भूमिरापः’ ‘मत्तः परतरं नान्यत्’ ‘ मयि सर्वे ’ ‘ बुद्धिर्ज्ञानम् ’ इत्यादिभिरिदं शेषित्वादिकं प्राक्प्रपञ्चितम्। **हिशब्दो वक्ष्यमाणदिदृक्षाद्योतनार्थ** इति। हेतुत्वप्रसिद्ध्याद्यानुगुण्याभावात्प्रकृतानुगुणोऽयमर्थ इति भावः॥

‘परमेश्वर’ इत्यनेन वाक्यार्थविश्वासहेतुभूतं परमाप्तत्वादिकं विवक्षितमित्यभिप्रायेणाह—**हेपरमेश्वरेति**। तद्व्यञ्जनाय स्वसंवादमात्रार्थत्वव्युदासेन श्रुतप्रतिष्ठापनाय चाह—**एवमेतदित्यवधृतमिति**। आश्रितजने दोषदर्शिनः कापुरुषा इति ह्याहुः।अतोऽत्र दिदृक्षमाणे स्वस्मिन् दोषानादररूपनिरतिशयपौरुषं पुरुषोत्तमशब्देन विवक्षितमित्यभिप्रायेण—**आश्रितवात्सल्यजलध** इत्युक्तम्. पुरु सनोतीति वा व्युत्पत्तिरिहाभिप्रेता;‘आविश्य बिभर्ति’इति वक्ष्यमाणं वा ज्ञापितम्।एवं परत्वसौलभ्ये समाख्याभ्यामुक्ते।‘ते’इति निर्देशे सत्यपि ‘ऐश्वरम्’ इति वचनमीश्वरत्वस्वभावाभिव्यञ्जकत्वपरमित्यभिप्रायेण—**त्वदसाधारणमित्युक्तम्** । तस्यैव प्राक्प्रपञ्चितप्रक्रियया विवरणं—**सर्वस्येत्यादि**। एवंस्वभावविशिष्टो हीश्वरशब्दार्थ इति भावः। प्रशासितृत्वादौ रूपस्यावस्थानं नाम-तदनुरूपैर्गुणसन्नहनचेष्टितैस्तत्तदभिव्यञ्जकत्वम् । यद्वा प्रशासितृत्वेऽवस्थानं ‘यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे’इति न्यायेन स्वदर्शनमात्रेण विपरीताध्यवसायं विनिवर्त्य सम्यक्प्रवृत्तिहेतुत्वात्।कल्याणगुणाकरत्वेऽवस्थानं नाम-अवतारविग्रहवदञ्जल्याद्यभिनयानर्हत्वम्।पालयितृत्वेऽवस्थानं तु-सत्त्वप्रवर्तनादिमुखेन। स्रष्टृत्वेऽवस्थानं स्वावयवेभ्यो

प्र-पा॥ १. गी. ७-४ ॥
२. गी. ७-७ ॥
३ गी. १०-४ ॥
४. गी. १५-१७ ॥
५. भार. सभा. ३९-३८, ६८-११ ॥

शं॥छत् अक्षिणी यस्य तव स त्वं कमलपत्राक्षः, हे कमलपत्राक्ष महात्मनः भावः माहात्म्यमपि च अव्ययं ‘श्रुतम्’ इति अनुवर्तते॥ २ ॥

एवमेतत् नान्यथा यथा येन प्रकारेण आत्थ कथयसि त्वम् आत्मानं परमेश्वर।

रा॥त्वे, भर्तृत्वे,कल्याणगुणाकरत्वे, परतरत्वे, सकलेतरविसजातीयत्वेऽवस्थितं रूपं द्रष्टुं साक्षात्कर्तुमिच्छामि ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४

तत्सर्वस्य स्रष्टृ,सर्वस्य प्रशासितृ, सर्वस्याधारभूतं त्वद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे,ततो योगेश्वर-योगो ज्ञानादिकल्याणगुणयोगः,'पश्य मे योगमैश्वरम्'इतिहि वक्ष्यते। त्वद्व्यतिरिक्तस्य कस्याप्यसंभावितानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधे आत्मानं त्वामव्ययं मे दर्शय । अव्ययमिति क्रियाविशेषणम् । त्वा सकलं मे दर्शयेत्यर्थः ॥ ४ ॥

---

ता॥ब्रह्मरुद्रादीना चातुर्वर्ण्यादीनां च प्रसूतेः।संहर्तृत्वेऽवस्थान तुवक्ष्यमाणग्रसनादिना।भर्तृत्वेऽवस्थितिस्तु'तत्रैकस्थम्'इत्यादिभिः स्फुटीभविष्यति।परत्वेन शङ्कितानां ब्रह्मरुद्रादीनां स्वैकदेशेऽवस्थानस्य'ब्रह्माणमीशम्'इत्यादिना वक्ष्यमाणतया परतरत्वेऽवस्थानं युक्तम् । सकलेतरविसजातीयत्व इति तूक्तसमस्तनिगमनम्;तत्फलितं वा; परमेश्वरपुरुषोत्तमसम्बुध्यभिप्रेतकथनं वा।'पश्य मे योगमैश्वरम्'इति गुह्यतमारम्भे स्वयमुक्तस्यापातप्रतीतार्थस्य दर्शनप्रार्थनानुसारेण 'रूपमैश्वरम्'इति । स्वरूपपरतया योजनायाम्'ऐश्वरम्'इत्येकमौपचारिकम्;इतरत्सर्वं मुख्यम्।स्वरूपानुबन्धेन तु विग्रहदिदृक्षा गर्भिता। रूपशब्दः स्वरूपरूपादिसमस्तासाधारणाकारपरो वा।रूप प्रकारमित्यर्थः।'द्रष्टुम्' इत्युक्ते दर्शनसमानाकारेऽपि ज्ञाने दर्शनशब्दप्रयोगात्तद्व्यवच्छेदार्थं चाक्षुषज्ञानमात्रपरत्वं च व्यवच्छेत्तुं—साक्षात्कर्तुमित्युक्तम् ॥ ३ ॥

सर्वस्य स्रष्टृत्वादिना तच्छब्दपरामृष्टश्रुताकारोक्तिः। अत्रापि स्वरूपपरत्वे मुख्यता; रूपपरत्वे, प्रकारमात्रपरत्वे च प्राग्वदनुसन्धेयम्।योगो ज्ञानादिकल्याणगुणयोगइति — अत्राणिमाद्यैश्वर्यशक्तिरपि गुणानुप्रविष्टा, योगनिर्वाहकत्वादिमात्रं तु दिदृक्षिताकारान्तरङ्गत्वाभावादत्र न विवक्षितमिति भावः। दर्शयिष्यमाणो ह्याकारोऽत्र दिदृक्षितः। नचार्जुनायाष्टाङ्गयोगाद्यर्थान्तरं प्रदर्श्यते, योगशब्दश्च प्रत्यभिज्ञायत इत्यभिप्रायेणाह —पश्येति। प्रभुशब्देन —यदि त्वं मन्यसे,तदा न किञ्चित्ते दुष्करमित्यभिप्रेतं गुणविशेषवत्त्वं दर्शयति—तद्व्यतिरिक्तस्येत्यादिना। अथवा योगेश्वरशब्दाभिप्रेतोक्तिरियम्। 'अश्वपतिर्धनपतिः' इत्यादिवद्गुणभूयस्त्वापेक्षया गुणानामपि नियमनेन वा योगेश्वरशब्द इति भावः। 'त्वाम्' इति आत्मशब्दस्यार्थान्तरत्वयुक्तम्, 'माम्' इति च वक्ष्यत इति भावः । अव्ययशब्दस्यात्र निष्प्रयोजनत्वशङ्काव्युदासाय, क्षरप्रपञ्चाख्यतद्रूपप्रदर्शनविरोधपरिहाराय, विशेषतो दिदृक्षोरपेक्षितार्थपरत्वं दर्शयति—अव्ययमितिक्रियाविशेषणमिति । ततः किमित्यत्राह—त्वांसकलमिति । समस्तगुणविभूतिविग्रहादिविशिष्टरूपमित्यर्थः ॥ ४॥

---

प्र-पा ॥ १.गी. ११-१३ ॥ | २. गी. १८-१५ ॥

---

आ॥प्रभुः समर्थः। 'नास्ति तस्मात्परं भूतं पुरुषाद्वै सनातनात्'इति मोक्षधर्मे। 'प्रभुरीशः समर्थश्च' इत्याद्यभिधानम् ॥ ४ ॥

---

ज॥'मन्यसे यदि' इत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः, किन्तु तवातिसामर्थ्यात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावेन प्रयुक्त इत्याशयेनाह—प्रभुरिति । ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह—नास्तीति । भूतं समर्थम् । प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह—प्रभुरिति ॥ ४ ॥

रा॥एवं कौतूहलान्वितेन हर्षगद्गदकण्ठेन पार्थेन प्रार्थितो भगवानुवाच--

**श्रीभगवानुवाच—**

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥** ५

पश्य मे सर्वाश्रयाणि रूपाणि,अथ शतशस्सहस्रशश्च नानाविधानि-नानाप्रकाराणि-दिव्यानि—अप्राकृतानि नानावर्णाकृतीनि-शुक्लकृष्णादिनानावर्णानि नानाकाराणिचपश्य॥

ता॥अर्जुनस्य भगवत आत्मप्रदर्शने हेतुं प्रश्नादिप्रकारफलितमवस्थाविशेषं दर्शयन् 'पश्य' इत्यादिभगवद्वाक्यस्य संगतिमाह-**एवमिति**। वक्ष्यमाणप्रकारमनुसन्धायाह--**सर्वाश्रयाणीति**। बहुव्रीहित्वान्नपुंसकत्वम् । आदित्यमण्डलादीन्यनन्तान्यधिकरणानि। यद्वा, आश्रयशब्द उपचाराद्विवक्षाभेदेन वा आश्रितपरः। **शतशस्सहस्रशश्चे**त्यनेन परव्यूहविभवाद्यवच्छेदकोडीकृतानन्ताप्राकृतविग्रहवत्त्वं दर्शितम्।यदेकादित्यमण्डलवर्ति रूपं,तत्समानमनन्तब्रह्माण्डेष्वादित्यमण्डलवर्त्यसंख्यात रूपम् । एवं श्रीविश्वरूपादिरूपान्तरेष्वपि। 'रूपंरूपं प्रतिरूपम्' इत्यादिश्रुत्यायमप्यर्थो विवक्षित इति केचित्।यथा द्रक्ष्यसि, तथा करिष्यामीत्यभिप्रायेण पश्येत्युक्तिः । नानाविधानीत्यनेन प्रत्येकं भूषणायुधलाञ्छनभुजसंख्यादिप्रकारविशेषानन्त्यमत्र विवक्षितमित्याह—**नानाप्रकाराणीति** । **अप्राकृतानीति** — अत्र दिव्यशब्देन दिवि वर्तमानत्वादिक न विवक्षितं, पृथिव्यादिव्याप्तेरपि वक्ष्यमाणत्वात्; द्रव्यवैलक्षण्यं चावश्यवक्तव्यमित्यभिप्रायः । वासुदेवादिषु चतुर्षु युगभेदेन सितरक्तपीतकृष्णरूपपरिवृत्तेरवतारान्तरेषु च तत्तत्फलार्थिध्यानानुगुण्याच्च नानावर्णत्वम् । आकृतिशब्देन सुरनरतिर्यगादिसमानसस्थानविशेषो विवक्षित इत्यभिप्रायेणाह—**नानाकाराणीति** ॥ ५ ॥

प्र-पा॥१.कठोप-५-वल्ल्याम् .९-वा—'अग्निर्यथैको भुवनम्प्रविष्टो रूपंरूप प्रतिरूपो बभूव।एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च ॥९ ॥ वायुर्यथैको भुवनम्प्रविष्ट...रूपंवहिश्च ॥ १० ॥ अस्यार्थ—'एक एव आत्मा सर्वेषामहमर्थतया आस्त' इत्यस्यार्थस्य दुर्बोधत्वात् तद्दृढीकरणाय पुनरप्युपदिशति—अग्निर्यथैक इत्यादिना । यथा एकस्तेजोधातुः त्रिवृत्करणकृतव्याप्त्या अण्डान्तर्गतलोकं प्रविष्टस्सन् , रूपंरूप-रूपेरूप, भौतिकव्यक्तिषु, वीप्सायान्द्विर्वचनम् । प्रतिरूपः-प्रत्युत्तं-रूपं-यस्य स तथोक्तः, सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिस ङ्क्रान्तान्तर्याभिविग्रहो वहिश्च व्याप्नोतीत्यर्थः ॥ ९ ॥ उदाहरणान्तरमाह—वायुर्यथैक-इति ॥ पूर्ववत्' इति॥

शं॥तथापि द्रष्टुम् इच्छामि ते तव ज्ञानैश्वर्यबलशक्तिवीर्यतेजोभिः संपन्नम् ऐश्वरं वैष्णवं रूपं पुरुषोत्तम ॥ ३ ॥

मन्यसे चिन्तयसि यदि मया अर्जुनेन तत् शक्यं द्रष्टुम् इति प्रभो स्वामिन् योगेश्वर योगिनो योगाः, तेषाम् ईश्वरः योगेश्वरः, हे योगेश्वर।,यस्मात् अहम् अतीव अर्थी द्रष्टुं ततः तस्मात् मे मदर्थं दर्शय त्वम् आत्मानम् अव्ययम् ॥ ४ ॥

एवं चोदितः अर्जुनेन भगवान् उवाच—पश्य मे पार्थ रूपाणि शतशः अथ सहस्रशः, अनेकशः इत्यर्थः । तानि च नानाविधानि अनेकप्रकाराणि दिवि भवानि दिव्यानि अप्राकृतानि नानावर्णाकृतीनि च नाना विलक्षणाः नीलपीतादिप्रकाराः वर्णाः तथा आकृतयश्च अवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥ ५ ॥

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६

रा॥ममैकस्मिन्रूपे पश्यादित्यान् द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतश्चैकोनपञ्चाशतम्; प्रदर्शनार्थमिदम्; इह जगति प्रत्यक्षदृष्टानि शास्त्रदृष्टानि च यानि वस्तूनि, तानि सर्वाण्यन्यान्यपि सर्वेषु लोकेषु सर्वेषु च शास्त्रेष्वदृष्टपूर्वाणि बहून्याश्चर्याणि पश्य ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७

इह ममैकस्मिन् देहे तत्राप्येकस्थम् - एकदेशस्थं सचराचरं कृत्स्नं जगत्पश्य, यच्चान्यद्द्रष्टुमिच्छसि, तदप्येकदेहैकदेश एव पश्य ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८

---

ता॥'शतशोऽथ सहस्रशः'इति स्वासाधारणानन्तरूपप्रसङ्गेऽपि प्रकृतोपयोगाय 'इहैकस्थम्' इत्येकस्यैव रूपस्य विशेषतः प्रदर्शयिष्यमाणत्वमनुसन्धायाह – **ममैकस्मिन्निति** । 'पश्यादित्यान्' इत्यादिना प्रधानदेवास्त्रयस्त्रिंशत्प्रथमं निर्दिश्यन्त इत्यभिप्रायेण – **द्वादशेत्यादि** सङ्ख्याविशेषप्रदर्शनम् । वक्ष्यमाणानुसारेण दृष्टमात्राश्रयत्वव्युदासायाह – **प्रदर्शनार्थमिति** । अर्जुनेन अन्यैश्चाप्रतिपन्नानामिति शेषः । 'अदृष्टपूर्वाणि' इत्येतदश्रुतपूर्वाणामप्युपलक्षणम्, अनवगतत्वमात्रेण वा सामान्यतस्सङ्ग्रह इत्यभिप्रायेणाह—**सर्वेषु च शास्त्रेष्वदृष्टपूर्वाणीति** । एतेनातीन्द्रिये वस्तुनि सामान्यतः शास्त्रावगतेऽपि साक्षात्कारैकसमधिगम्या बहवो विशेषास्सन्तीति सूचितम् ॥ ६ ॥

इह 'देहे' इत्येकवचनान्तनिर्देशेनैव प्रदर्शयिष्यमाण एको देहो विवक्षित इत्यभिप्रायेणाह— **इह ममैकस्मिन्देहइति** । एकवचनेन प्रदर्शयिष्यमाणविशेषनिर्देशेन च देहैकत्वस्याभिमतत्वादेकस्थपदेन तदेकदेशे स्थितिर्विवक्षिता। एकस्यावयविनोऽवयवभूतमिति कैश्चिदुक्तं तु भगवद्विग्रहस्य अप्राकृतत्वसमर्थनाच्च निरस्तमित्यभिप्रायेणोक्तं—**तत्राप्येकस्थमेकदेशस्थमिति** । यद्वा कृत्स्नस्य एकस्थत्ववचनात्तदेकदेशस्थितिः फलिता।'यच्चान्यद्द्रष्टुमिच्छसि'इत्यनेन पाण्डवधार्तराष्ट्रजयादिकमपि गर्भितम्।तत्रापि समुच्चयसामर्थ्याद्देहैकदेशाश्रितत्वमाह—**तदपीति** ॥ ७ ॥

---

शं॥पश्य आदित्यान् द्वादश; वसून् अष्टौ, रुद्रान् एकादश, अश्विनौ द्वौ, मरुतः सप्त सप्तगणाः ये तान् । तथा च बहूनि अन्यान्यपि अदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तः अन्येन वा केनचित्, पश्य आश्चर्याणि अद्भुतानि भारत ॥ ६ ॥

न केवलम् एतावदेव—इह एकस्थम् एकस्मिन्नेव स्थितं जगत् कृत्स्नं समस्तं पश्य अद्य इदानीं सचराचरं सह चरेण अचरेण च मम देहे गुडाकेश । यच्च अन्यत् जयपराजयादि, यत् शङ्कसे, 'यद्वा जयेम यदि वा नो जयेयुः' इति यत् अवोचः, तदपि द्रष्टुं यदि इच्छसि ॥ ७ ॥

रा॥अहं मम देहैकदेशे सर्वं जगद्दर्शयिष्यामि; त्वं त्वनेन नियतपरिमितवस्तुग्राहिणा प्राकृतेन स्वचक्षुषा मां—तथाभूतं सकलेतरविसजातीयमपरिमेयं द्रष्टुं न शक्ष्यसे; तव दिव्यम्-अप्राकृतं मद्दर्शनसाधनं चक्षुर्ददामि; पश्य मे योगमैश्वरं मदसाधारणं योगं पश्य; ममानन्तज्ञानादियोगमनन्तविभूतियोगं च पश्येत्यर्थः ॥ ८ ॥

सञ्जय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९

एवमुक्त्वा सारथ्येऽवस्थितः पार्थमातुलजो महायोगेश्वरो हरिः महाश्चर्ययोगानामीश्वरः परब्रह्मभूतो नारायणः परममैश्वरं स्वासाधारणं रूपं पार्थाय पितृष्वसुः

---

ता॥'न तु मां शक्ष्यसे' इत्यत्र तुशब्दद्योतितमशक्तिहेतु पूर्वश्लोकोक्तमाकृष्य दर्शयति—**अहमिति**। अनेनैवेत्यस्य विवक्षितमाह—**नियतेति**। दिव्यप्रतिपक्षत्वात्—**प्राकृतेनेत्युक्तम्**। **तथाभूतमित्यादि**। 'माम्'इत्यनेनात्र विग्रहादिविशिष्टत्वं विवक्षितमिति भावः।अत्र दिव्यशब्दविवक्षितमाह— **अप्राकृतमिति**। **मद्दर्शनसाधनमि**त्यप्राकृतत्वफलितोक्तिः। ऐश्वरपदाभिप्रेतमाह—**मदसाधारणमिति**। प्रकरणादिफलितमैश्वरपदानुगृहीतं च योगशब्दार्थमाह— **अनन्तेति**। नियमनशक्तिरीश्वरत्वम्; तदनुबन्धी च योगस्तदुचितगुणविभूतियोग एव। चक्षुषो दिव्यत्वाज्ज्ञानादिगुणदर्शनम्। अनन्तवीर्यत्वादिविशिष्टविशेषेण पश्यामीति वक्ष्यतीति भावः ॥ ८ ॥

'महायोगेश्वरो हरिः'इत्यनयोस्तिरस्कारकं पूर्वप्रतिपन्नं रूपमाह —**सारथ्येऽवस्थितः पार्थमातुलज**इति। एतेन दिव्यरूपप्रकाशनहेतुभूतवात्सल्यादिसूचनं च।महत्त्वेन विशेषणादाश्चर्यत्वम्। महच्छब्दस्य च योगेश्वरविशेषणत्वादपि योगविशेषणत्वमत्रोचितमित्यभिप्रायेणाह—**महाश्चर्ययोगानामिति**। अन्येष्वप्याश्चर्ययोगस्य तदधीनत्वमीश्वरशब्देन विवक्षितम्। 'महायोगेश्वरो हरिः' इति पदद्वयाभिप्रेतं सामान्यविशेषवाक्यार्थं दर्शयति—**परब्रह्मभूतो नारायण**इति। 'पश्य मे योगमैश्वरं' 'परमं रूपमैश्वरम्'इत्यनयोरदूरविप्रकर्षेण घटनादैकार्थ्यम्। 'ऐश्वरं रूपं दर्शयामास' इत्युक्ते स्वेतरस्य कस्यचिद्रूपमिति धीस्स्यादिति तद्व्युदासायोक्तं—**स्वासाधारणमिति**। रूपशब्दस्यात्रापि सानुबन्धस्वरूपपरतया तदभिव्यञ्जकविग्रहपरतया स्वरूपादिसमस्तासाधारणाकारमात्रपरतया वा निर्वाहो ग्राह्यः। अत्र पार्थशब्देन स्वस्वरूपप्रदर्शनार्थः प्रीतिहेतुस्सम्बन्धोऽभिप्रेत इति प्रदर्शनायाह—**पितृष्वसुः पृथायाः पु-**

---

प्र-पा ॥ १. अत्र केचिदेवमभिप्रयन्ति— पार्थाय भगवता प्रदर्शितं रूपं शैवमेव; 'पश्य मे योगमैश्वरम्' इत्यैश्वरत्वनिर्देशात्, तद्रूपमास्थितेन कृष्णेन 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति विपक्षाणां स्ववीर्यप्रभावहतत्वमुपवर्ण्य पश्चात्स्वरूपमास्थितेन समयान्तरे पार्थं

---

शं॥किन्तु—न तु मां शक्ष्यसे न स्वकीयेन चक्षुषा मां विश्वरूपधरं शक्ष्यसे द्रष्टुम् अनेनैवप्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा। येन त्वं शक्ष्यसे द्रष्टुं दिव्येन, यत् दिव्यं ददामि ते तुभ्यं चक्षुः। तेन पश्य मे योगम् ऐश्वरम् ईश्वरसंबन्धिनम् ऐश्वरं योगं योगशक्त्यतिशयम् इत्यर्थः ॥ ८ ॥

एवं यथोक्तेन प्रकारेण उक्त्वा, ततः अनन्तरं राजन् धृतराष्ट्र महांश्च असौ यो-

रा॥**पृथायाः पुत्राय दर्शयामास, तद्विविधविचित्रनिखिलजगदाश्रयं विश्वस्य प्रशासितृ**

ता॥**त्राथेति**।परममैश्वर रूपमित्युक्तं विवृणोति--**तद्विविधेति**।निखिलजगदाश्रयत्वं स्वरूपतो विग्रहद्वारा

**प्र-पा**॥प्रत्येव 'निहतांस्तेन पूर्वं त्व हतवानसि वै रिपून्। अप्रमेयप्रभावं तं देवदेवमुमापतिम्। भजस्व नित्यं प्रयतो विश्वेशं हरमव्ययम्' इति तेषा शिववीर्यप्रभावनिहतत्वोपदेशात्, शैवं विश्वरूपं योगप्रभःवात्प्रदर्शितमिति प्रतिपादनादिहापि 'पश्य मे योगमैश्वरम्' इति वचनसामञ्जस्याच्च योगप्रभावादेव दर्शितिमिति कल्पनोपपत्तेश्च—इति॥ तदन्ये न मन्यन्ते ; प्रतिपादयन्ति च --पार्थाय भगवता प्रदर्शित रूप वैष्णवमेव, 'पश्य **मे** पार्थ रूपाणि शतशोऽथ सहस्रशः' 'इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । **मम देहे** गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ न तु मा शक्यसे द्रष्टुमनेनैव स्वचक्षुषा' इत्यादिभिःतद्रूप दिदृक्षुमर्जुनं प्रति भगवद्वचनैः, 'नभस्स्पृशं दीप्तमनेकवर्णं व्यात्तानन दीप्तहुताशवक्त्रम् । दृष्ट्वाहि त्वा प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च **विष्णो**' 'लेलिह्यसे ग्रसमानस्समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः । तेजोभिरापूर्य जगत्स मग्रं भासस्त वोग्राः प्रतपन्ति **विष्णो**' 'स्थाने **हृषीकेश** तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च इत्यादिभिस्तद्रूपधरं देवं प्रत्यर्जुनवचनैः, 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् । तेजोमयं विश्वमनन्तमाद्यं **यन्मे** त्वदन्येन न दृष्टपूर्वम् । न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।**एवंरूपश्शक्य** अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ मा ते व्यथा माच विमूढभावो दृष्ट्वा घोरं **रूपमीदृङ्ममेदम्**'इत्यादिभिः तद्रूप दृष्टवन्त प्रति भगवद्वचनैः,'तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं **हरेः** । विस्मयो मे महान्राजन् हृष्यामि च पुनःपुनः' इत्युपसंहारस्थसंजयवचनेन, आश्वमेधिकपर्वणि च वासुदेवोदङ्कसंवादे 'अभिजानामि जगतः कर्तारं त्वां जनार्दन। द्रष्टुमिच्छामि **ते रूपं वैष्णवं** तन्निदर्शय ॥ वैशंपायनः—ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः।शाश्वत **वैष्णवं** धीमान् **ददृशे यद्धनंजयः**' इत्यादिवचनेन च विश्वरूपस्य वैष्णवत्वस्फुटीकरणात् ; **ईश्वरशब्दस्य** 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरिशिता' इत्यादिना ऐश्वर्यवद्वाचकत्वानुशासनात्, '**ईश** ऐश्वर्ये' इति धातोः 'स्थेशभासपिसकसो वरच्' इति कर्तरि वरचि निष्पन्नतया यौगिकत्वात् ,योगेनैव निर्वाहे सति रूढिकल्पनागौरवस्य हेयत्वात्, रूढ्यङ्गीकारे च निरुपाधिकेश्वरे भगवत्येव प्रयोगप्राचुर्यात् 'ईश्वरो विक्रमी धन्वी' इति सहस्रनामाध्याये भगवन्नामसु परिगणनात्, अत्रैवोत्तरत्र 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः। अतोऽस्मि लोके वेदेच प्रथितः पुरुषोत्तः । यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मा सर्वभावेन भारत' इति पुरुषोत्तमशब्दनिर्वचनप्रस्तावे पुरुषोत्तमस्यैवेश्वरशब्दवाच्यत्वोक्तेः, पूर्वाध्याये च 'रुद्राणां शङ्करश्चास्मि' इत्युक्त्य। हरिवंशे 'रुद्राणामहमेवासि' इति शिववचनेन च शिवस्य भगवद्विभूतित्वश्रवणात् तस्य निरतिशयैश्वर्यवत्त्वाभावात् ईश्वरशब्दस्य च निरुपपदस्य निरवधिकैश्वर्यवाचित्वौचित्यात् ईश्वरशब्देन शिवस्यानभिधानाच्च, भगवत एव संहारकर्तृत्वेऽपि 'रुद्रः कालान्तकाद्याश्च

**शं**॥**गेश्वरश्च महायोगेश्वरः हरिः नारायणः दर्शयामास दर्शितवान् पार्थाय पृथासुताय**

आ॥**हरिः सर्वयज्ञभागहारित्वात् । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे**

ज॥'महायोगेश्वरो हरिः' इत्यत्र हरिशब्दस्य प्रकृतोपयुक्तमर्थमाह—**हरिरिति** । गेहेषु **इष्टिगृहेषु**-हरतेरिकारप्रत्ययः । श्रेष्ठोऽप्राकृतः । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत्स-

रा॥च रूपम् ॥ ९ ॥

तच्चेदृशम्—

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १०
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११

देवं - द्योतमानम्, अनन्तं - कालत्रयवर्तिनिखिलजगदाश्रयतया देशकालपरि-

ता॥च। यद्वा 'अनेक' इत्यादिरुत्थानप्रदर्शनमिदम्। तत एव हि 'तच्चेदृशम्' इति सहितम्। 'इहैकस्थम्' इत्यादिभिस्सिद्धोऽयमर्थः। प्रशासितृशब्देनाधिष्ठातृत्वं विवक्षितम् ॥ ९ ॥

वस्त्राभरणायुधेष्वनेकत्वं जातिवैचित्र्यादपि द्रष्टव्यम्। नानाजातीयबहुवक्त्रयोगो हि श्रीविश्वरूपध्याने भगवच्छास्त्रेषु पठ्यते ; अन्यथानेकनयनत्वनिर्देशो निरर्थकस्स्यात्, वक्त्रानेकत्वेनैव तत्सिद्धेः। अनेकमद्भुतं दर्शनं यस्य तदनेकाद्भुतदर्शनम्-अनवधिकातिशयाश्चर्यतया दृश्यमानमित्यर्थः। दिव्यत्वमप्राकृतत्वम् ;सर्वाश्चर्यमयम्—आश्चर्यभूतसर्वतत्त्वाश्रयभूतमित्यर्थः। अत एव 'अनेकाद्भुतदर्शनम्' इत्यनेनापुनरुक्तिः। 'जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः' इत्यादि भाव्यम्। देवशब्दस्यात्रानुपयुक्तजातिविशेषादिमात्रनिष्ठताव्युदासार्थं विग्रहविशिष्टविषयत्वप्रदर्शनार्थं च—द्योतमानमित्युक्तम्।आनन्त्यप्रकारं—तद्धेतुं चाह, निखिलेत्यादिना। कृत्स्नजगदाश्रयत्वस्य कण्ठोक्तत्वात्फलितं कालत्रयवर्त्याश्रयत्व-

प्र-पा॥समस्ताश्चैव जन्तवः।चतुर्धा प्रलयायैते जनार्दनविभूतयः।' एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ' इति रुद्रस्यापि संहारकारणत्वावश्यंभावेन 'मयैवैते निहताः पूर्वमेव' इति भगवत्सङ्कल्पनिहतत्वेनोक्तानामपि विपक्षाणां मोक्षधर्मे 'यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते । तं रुद्रं विद्धि कौन्तेय देवदेवं कपर्दिनम्। कालस्स एवाभिहितः क्रोधजेति मया तव । निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून्' इति रुद्रवीर्यहतत्वोक्त्युपपत्तेः, 'द्रष्टुमिच्छामि ते रूपं' 'दर्शयात्मानमव्ययम्' इति भवदीयमाद्यं परं रूपं प्रदर्शनीयमिति प्रार्थ्यमानमर्जुनं प्रति अप्रसक्तपारक्यरूपप्रदर्श-नासाङ्गत्यात्, 'मम भूतमहेश्वरम्' इत्यत्र उपपदस्य रूढिभञ्जकत्वेन महेश्वरशब्दस्य केवलयौगिकत्वावश्यंभावात् योगशब्दस्य कूर्मपुराणान्तर्गतेश्वरगीतापठितेषु 'सोऽहं प्रेरयिता विप्राः परमं योगमाश्रितः। प्रेरयामि जगत्कृत्स्नमेतद्यो वेद सोऽमृतः' इत्यादीश्वरवचनेष्विव पूर्वापरग्रन्थाविरोधाय ज्ञानशक्त्यादिकल्याणगुणयोगपरत्वेन कुदृष्टिकल्पितायास्समाधिपरताया दुर्वचत्वाच्चेति। इदं कौस्तुभे सुविशदमुपपादितम्। इदं चात्र 'स्वेतरस्य कस्यचिद्रूपम्' इत्यादिना संगृहीतम् ॥

१. वि. पु ५-१९-७ ॥ 'तेनाश्चर्यवरेणाहं भवता कृष्ण सङ्गतः' इत्युत्तरार्धम् ॥

शं॥परमं रूपं विश्वरूपम् ऐश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनम् अनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तत् अनेकवक्त्रनयम्,

आ॥हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः' इति हि मोक्षधर्मे ॥ ९ ॥

ज॥निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ॥ ९ ॥

रा॥च्छेदानर्हं, विश्वतोमुखं —विश्वदिग्वर्तिमुखं स्वोचितदिव्याम्बरगन्धमाल्याभरणायुधान्वितम् ॥ १०॥ ११॥

ता॥मपि। तदुभयफलितं देशकालपरिच्छेदानर्हत्वमत्र यथासम्भवं विग्रहद्वारमद्वारकं च।आनन्त्य तु स्वरूपगतम् । विग्रहविशेषणवर्गमध्यवर्तित्वादनन्तशब्दोऽपि विग्रहविषयः । 'दृष्ट्वाद्भुतम्' इत्यत्र 'अनन्तायामविस्तारमित्यद्भुतमत्युग्रम्'इति रूपविषयमेव वक्ष्यति।ततश्चात्यन्तपृथुत्वादिमात्रप्रदर्शने तात्पर्यमित्यन्ये। एवम्'अनन्तायामविस्तारे' इति वक्ष्यमाण एतदनुवादोऽपि निर्वाह्यः।विश्वव्यापिनोऽप्यस्य विग्रहस्य शक्तिविशेषात्सर्वत्राप्रतिघातो युक्तः । अष्टैश्वर्यशालिना योगिनामपि भूमावुन्मज्जति निमज्जतीति सिद्धिविशेषोऽभिधीयते । अतोऽस्य प्रकृत्यादिकृत्स्नजगदाश्रयत्वं वक्ष्यमाणं नानुपपन्नम् । अत एवास्त्रभूषणरूपेण सर्वाश्रयत्वमिहोच्यत इत्येतदपि नाशङ्कनीयम्, तत्र 'देवदेवस्य शरीरं'इत्यत्र शरीरविशेषणतयानन्तायामविस्तारत्वाद्युक्तेः । न च वटपत्रशायिविग्रहवदघटितघटनाशक्त्या सूक्ष्मरूपेणवाल्पीयस्यपि सर्वान्तिर्भावप्रकाशनमित्यपि वाच्यम् , तथानुक्तेस्तद्विपरीतोक्तेश्च । अतो यथाश्रुत एवार्थः । एतच्चारम्भभाष्य एव अचिन्त्यशब्देन स्थापितमिति ।'अनेकवक्त्रे'इत्युक्तमेवात्र विश्वतोमुखशब्देन विशेष्यत इत्यभिप्रायेणाह—विश्वदिग्वर्तिमुखमिति । साक्षाद्विग्रहविषयत्वात् 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिष्विव नात्र सर्वत्र मुखशक्तियोगोऽपि विवक्षितः । सर्वत्र मुखयुक्तमिति च परोक्तमयुक्तम् ,पाणिपादादिषु मुखाभावादिति भावः। अविशदविशदोपलम्भक्रमेण पाठक्रममनादृत्य 'देवम्' इत्यादिकं पूर्वं व्याख्यातम्। स्वगताकारप्रतीतेः परस्ताद्धि पृथक्सिद्धद्रव्यविशिष्टताप्रतीतिः ; तथैव च प्रदर्शनमुचितमित्यभिप्रायेणाम्बरादिकं पूर्वमुक्तमपि परस्ताद्दर्शित—स्वोचितेत्यादिना । अत्रापि पाठक्रमोल्लङ्घनेनाम्बरादिक्रमेण निर्देशोऽन्तरङ्गत्वबहिरङ्गत्वतारतम्यप्रदर्शनाय। अत्र 'दर्शयामास'इति पूर्वेणान्वयः ॥ १० ॥ ११ ॥

प्र-पा ॥ १. श्री. ३-३ ॥

शं॥अनेकाद्भुतदर्शनम् अनेकानि अद्भुतानि विस्मापकानि दर्शनानि यस्मिन् तत् अनेकाद्भुतदर्शनं रूपं,तथा अनेकदिव्याभरणम् अनेकानि दिव्यानि आभरणानि यस्मिन् तत् अनेकदिव्याभरणं, तथा दिव्यानेकोद्यतायुधं दिव्यानि अनेकानि अस्यादीनि उद्यतानि आयुधानि यस्मिन् तत् दिव्यानेकोद्यतायुधं 'दर्शयामास' इति पूर्वेण सम्बन्धः ॥ १० ॥

किञ्च—दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाणि अम्बराणि वस्त्राणि च ध्रियन्ते येन ईश्वरेण तं दिव्यमाल्याम्बरधरं, दिव्यं गन्धानुलेपनं यस्य तम् दिव्यगन्धानुलेपनं,सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवम् अनन्तं न अस्य अन्तः अस्ति इति अनन्तः तम् अनन्तं विश्वतोमुखं सर्वतोमुखं, सर्वभूतात्मभूतत्वात्, 'तं दर्शयामास'। 'अर्जुनः ददर्श इति वा अध्याह्रियते ॥ ११ ॥

आ॥सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ॥ ११ ॥

जा॥ 'सर्वाश्चर्यमयम्' इति केनचित्प्राचुर्यार्थो मयड्व्याख्यातः, तदसत् ,सर्वशब्देन गतार्थत्वादिति भावेनाह—सर्वेति । मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ॥ ११ ॥

रा॥तामेव देवशब्दनिर्दिष्टां द्योतमानतां विशिनष्टि—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२

तेजसोऽपरिमितत्वदर्शनार्थमिदम्; अक्षयतेजस्स्वरूपमित्यर्थः ॥ १२ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३

तत्रानन्तायामविस्तारे अनन्तबाहूदरवक्त्रनेत्रे अपरिमिततेजस्के अपरिमितदिव्यायुधोपेते स्वोचितापरिमितदिव्यभूषणे दिव्यमाल्याम्बरधरे दिव्यगन्धानुलेपने अनन्ताश्चर्यमये देवदेवस्य दिव्ये शरीरे अनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादिभोक्तृवर्गपृथिव्यन्तरिक्षस्वर्गपातालातलवितलसुतलादिभोगस्थानभोग्यभोगोपकरणभेदभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत् *'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' †'हन्त ते कथयिष्यामि विभूतीरात्मनश्शुभाः' ‡'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'

---

ता॥'दिवि' इत्यादिश्लोकस्य सङ्गतिमाह—तामेवेति । निर्दिष्टस्य भास्वरत्वस्य निरतिशयत्वलक्षणो विशेष उच्यत इत्यर्थः । सङ्ख्याविशेषेण परिच्छिन्नत्वशङ्काव्युदासायाह—तेजस इति ॥ १२ ॥

---

प्र-पा ॥ *गी. १०-८ ॥ †गी. १०-१९ ॥ ‡गी. १०-२० ॥

---

शं॥या पुनः भगवतः विश्वरूपस्य भाः, तस्याः उपमा उच्यते—दिवि अन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य सूर्यसहस्रस्य या युगपदुत्थिता भाः, सा यदि सदृशी स्यात् तस्य महात्मनः विश्वरूपस्य भासः । यदि वा न विद्यते, ततः विश्वरूपस्यैव भाः अतिरिच्यते इत्यभिप्रायः ॥ १२ ॥

किञ्च—तत्र तस्मिन् स्वरूपे एकस्मिन् स्थितम् एकस्थं जगत् कृत्स्नं प्रविभक्तम्

---

आ॥सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत्प्रत्यायनार्थमेव। तथाहि ऋग्वेदखिलेषु 'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति । महातात्पर्याच्च प्राबल्यं, न च परिमाणोक्त्या किंचित्प्रयोजनम् ॥ १२ ॥

---

ज॥'दिवि सूर्यसहस्रस्य' इति विश्वरूपस्य सहस्रसूर्योपमप्रभत्वमुच्यते, तत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासार्थमाह—सहस्रेति । अनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवं, निरुपमत्वात्, किं तर्हीत्यत आह—तदपीति। प्रत्यायनार्थं बुद्धिप्रवेशनार्थमेवोच्यते। यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः । सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुत इत्यत आह—तथाहीति। ततस्ततः सूर्यादेरपि विलक्षण इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाध इति चेत्—'शतं सहस्रमिति अपरिमितनामानि' इति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात्, श्रुतेर्निरवकाशत्वेन प्राबल्यात् । इतश्च श्रुतेः प्राबल्यमित्याह—महातात्पर्याच्चेति । समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं श्रुतेस्तदानुकूल्याद्गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यमिति चेत्—किं भगवतः परिमितप्रभत्वमेव वस्तुतः, उतापरिमितप्रभस्याप्यत्र सहस्रसूर्योपमप्रभत्वमुच्यते, नाद्यः, सकलश्रुतिस्मृतीतिहासपुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमाणोक्त्या किञ्चिदपि प्रयोजनं न सिध्यति । कुतो महदित्याह—नचेति ॥ १२, १३, १४, १५ ॥

रा॥*'आदित्यानामहं विष्णुः'इत्यादिना †'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यन्तेनोदितम् । एकस्थम् एकदेशस्थं, पाण्डवो भगवत्प्रसादलब्धतद्दर्शनानुगुणदिव्यचक्षुरपश्यत् ॥ १३ ॥

ततस्स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४

ततो धनंजयो महाश्चर्यस्य कृत्स्नस्य जगतः स्वदेहैकदेशेनाश्रयभूतं कृत्स्नस्य प्रवर्तयितारं चाश्चर्यतमानन्तज्ञानादिकल्याणगुणगणं देवं दृष्ट्वा विस्मयाविष्टो हृष्टरोमा शिरसा दण्डवत्प्रणम्य कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५

देव तव देहे सर्वान् देवान् पश्यामि ; तथा सर्वान् प्राणिविशेषाणां सङ्घान्, तथा ब्रह्माणं चतुर्मुखमण्डाधिपतिं, तथेशं कमलासनस्थं कमलासने ब्रह्मणि स्थितमीशं तन्मतेऽवस्थितं तथा देवर्षिप्रमुखान् सर्वानृषीन् , उरगांश्च वासुकितक्षकादीन् दीप्तान् ॥

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६

अनेकबाहूदरवक्त्रनेत्रम् अनन्तरूपं त्वां सर्वतः पश्यामि ; विश्वेश्वर—विश्वस्य नि-

ता॥'सर्वतोऽनन्तरूपम्' इत्यन्वये 'सर्वतः' इति शब्दस्य वैयर्थ्यं स्यात् ;'सर्वतः पश्यामि'इत्यन्वयस्तु दिव्यचक्षुर्लाभानुगुणत्वाद्युक्तः । विश्वरूपत्वे हेतुपरो 'विश्वेश्वरशब्दः' इत्यभिप्रायेणाह—विश्वस्य नियन्तरिति।व्याप्यनियन्ता हि शरीरी । 'नान्तं न मध्यम्'इत्यादौ विद्यमानस्यादर्शनं न विवक्षितम् ; अर्जुनस्य दिव्यचक्षुर्लाभेन तदयोगात्,अन्यत्र 'अनन्तरूपम्' इति हेतुगर्भविशेषणाद्विषयाभावा-

प्र-पा ॥ *गी. १०-२१ ॥ | †गी. १०-३९ ॥

शं॥अनेकधा देवपितृमनुष्यादिभेदैः अपश्यत् दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डवः अर्जुनः तदा ॥ १३ ॥

ततः तं दृष्ट्वा सः विस्मयेन आविष्टः विस्मयाविष्टः हृष्टानि रोमाणि यस्य अयं हृष्टरोमा च अभवत् धनञ्जयः । प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिः नमस्कारार्थं संपुटीकृतहस्तः अभाषत उक्तवान् ॥ १४ ॥

कथं यत् त्वया दर्शितं विश्वरूपं तत् अहं पश्यामीति स्वानुभवम् आविष्कुर्वन् अर्जुनः उवाच—पश्यामि उपलभे हे देव तव देहे देवान् सर्वान्, तथा भूतविशेषसङ्घान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां सङ्घाः भूतविशेषसङ्घाः तान्, किञ्च—ब्रह्माणं चतुर्मुखम् ईशम् ईशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थम् इत्यर्थः ऋषींश्च वसिष्ठादीन् सर्वान्, उरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥ १५ ॥

रा॥यन्तः, विश्वरूप-विश्वशरीर, यतस्त्वमनन्तः, अतस्तव नान्तं न मध्यं न पुनस्तवादिं

ता॥देव शशशृङ्गादेरिवादर्शनमुक्तमित्यभिप्रायेणाह— यत इति। इद च 'विश्वरूप' इत्यनेनापि विवक्षितम्। अत्र देशतः कालतश्चादिमध्यान्तनिषेधो भाव्यः। आद्यन्तरूपावच्छेदाभावात्तदुभयनिरूप

शं॥अनेकबाहूदरवक्त्रनेत्रम् अनेकबाहवः उदराणि वक्त्राणि नेत्राणि च यस्य तव सः त्वम् अनेकबाहूदरवक्त्रनेत्रः तम् अनेकबाहूदरवक्त्रनेत्रम्। पश्यामि त्वा त्वां सर्वतः सर्वत्र अनन्तरूपम्-अनन्तानि रूपाणि अस्य इति अनन्तरूपः तम् अनन्तरूपम्। न

आ॥अनेकशब्दोऽनन्तवाची, अनन्तबाहुमिति वक्ष्यति। 'सर्वतः पाणिपादं तत्' इत्यादि च। 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः' इति ऋग्वेदखिलेषु। 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। संबाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः' इति यजुर्वेदे च। विश्वशब्दश्चानन्तवाची, 'सर्वं समस्तं विश्वंच अनन्तं पूर्णमेवच' इत्यभिधानात्। 'अनन्तबाहुमनन्तपादमनन्तरूपं पुरुवक्त्रमेकम्' इति च बाभ्रव्यशाखायाम्। महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति ; अन्यथा 'अनादिमत्परं ब्रह्म' इत्याद्ययुक्तं स्यात्। एकत्र त्वनन्तान्यस्य रूपाणीत्यनन्तरूपः। अन्यत्र त्वपरिमाण इति। उक्तं ह्युभयमपि। 'परात्परं यन्महतो माहन्तं यदेकमव्यक्तमनन्तरूपम्' इति यजुर्वेदे। अव्यक्तस्यानन्तत्वादेव महत्त्वे अपरिमितत्वं सिद्ध्यति। 'महान्तं च समावृत्य प्रधानं स-

ज॥'अनेकबाहूदरवक्त्रनेत्रम्' इत्यत्रानेकशब्दस्य द्व्यादौ पर्यवसानात् विवक्षितमर्थमाह—अनेकेति। अनेन 'अनेकवक्त्रनयनम्' इत्यपि व्याख्यातम्। कुत एतदित्यत आह—अनन्तेति। 'सर्वतः' इत्यस्यार्थस्तात्पर्यनिर्णयेऽवगन्तव्यः। इत्यादि च वक्ष्यति। बाहुभ्या प्रधानाभ्या पतत्रैः पतत्रसदृशैरितरबाहुभिः सन्धमति अग्न्यादिभूतानि सयोजयतीति प्रत्येकमन्वयः। संनमतीत्यस्याप्ययमेवार्थः। एतयोर्मन्त्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह—विश्वशब्दश्चेति। तथा च प्रथमार्थे तसिरित्युक्तं भवति। स्पष्टार्थो चात्र श्रुतिमाह—अनन्तपादमिति। यदि भगवाननन्तबाह्वादिस्तदा परममहत्परिमाणः स्यात्, अन्यथा तदयोगात्; न च तद्युक्तम्; 'रूपं महत्ते' इति महत्त्वमात्रोक्तेः। तथा 'बहुवक्त्रनेत्रम्' इति बहुत्वमात्रोक्तेरनन्तबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह—महत्त्वादीति। स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत। नचैवम्; अवच्छेदकाश्रवणात्। महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानन्तावयत्वेन च सह सम्भवति। परममहति महत्त्वस्य, अनन्ते बहुत्वस्यान्तर्भावादित्यर्थः। अवच्छेदकानुक्तावप्यवान्तरमहत्त्वादिग्रहणे को दोष इत्यत आह—अन्यथेति। तत्र परममहत्त्वस्यानन्तावयवत्वस्यचोक्तेरिति भावः। 'पश्यामि त्वां सर्वतोऽनन्तरूपं' 'त्वया ततं विश्वमनन्तरूप' इत्यनन्तशब्दद्वयस्य माहात्म्यातिशयसूचनायार्थभेदमाह-एकत्रात्विति। अपरिमाणोऽपरिच्छिन्न इत्यनन्तरूप इति सम्बन्धः। स्यादिदं व्याख्यानं, यदीदं द्वयं प्रामाणिकं स्यादित्यत आह—उक्तंहीति। महान्तं महत्। 'महतो महान्तम्' इत्यनन्तमपरिच्छिन्नपरिमाणं रूपमस्येत्युक्तार्थे प्रमाणम्। एकं भिन्नमपि अनन्तरूपमित्यनन्तसङ्ख्यान्यस्य रूपाणीत्यत्र। ननु 'महतो महन्तम्' इति महत्तत्त्वान्महत्त्वमेवोच्यते ; न त्वनन्तत्वम् ; ततश्च 'यदेकमव्यक्तम्' इत्यव्यक्तव्यापित्ववचनात्तत्साम्यमेव सिध्यतीत्यत आह—अव्यक्तस्येति। महतो महत्त्वेऽव्यक्तव्यापित्वे चेत्यपि ग्राह्यम्। अव्यक्तस्यानन्तत्वं कुत इत्यत आह—महान्तं चेति। अनन्तस्य विष्णोः प्रतिमाभूतस्य तस्यान्तः परि-

रा॥च पश्यामि ॥ १६ ॥

ता॥णीयमध्याभावोऽपि सिद्धः ॥ १६ ॥

शं॥अन्तम्, अन्तः अवसानं, न मध्यं, मध्यं नाम द्वयोः कोट्योः अन्तरं, न पुनः तव आदिं—न देवस्य अन्तं पश्यामि, न मध्यं पश्यामि, न पुनः आदिं पश्यामि हे विश्वेश्वर विश्वरूप ॥ १६ ॥

आ॥मवस्थितम्। 'अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते' इत्यादित्यपुराणे। तानि चैकैकानि रूपाण्यनन्तानीति चैकत्र भवति। 'असंख्याता ज्ञानकास्तस्य देहाः सर्वे परिमाणविवर्जिताश्च' इत्यृग्वेदखिलेषु। 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ' इति च। 'कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम्' इति च भागवते। न चैतदयुक्तम्; अचिन्त्यशक्तित्वादीश्वरस्य। 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' इति च श्रीविष्णुपुराणे। 'नैषा तर्केण मतिरापनेया' इति श्रुतिः। अतिप्रसङ्गस्तु महातात्पर्यवशात् वाक्यबलाच्चापनेयः न हि घटवत्कश्चित्प

ज॥माणं परिच्छेदः,कार्यतः सङ्ख्यापरिच्छेदोऽपि न विद्यते।प्रकारान्तरेणानन्तरूपशब्दद्वयस्यार्थभेदमाह—तानि चेति। एकस्यानन्तरूपशब्दस्यानन्तसङ्ख्यारूपार्थत्वे स्थिते सत्येकत्रानन्तरूपशब्दे तानि चानन्तसङ्ख्यानि रूपाणि प्रत्येकमपरिच्छिन्नपरिमाणानीत्यर्थो भवतीत्यर्थः। अत्र प्रमाणमाह—असङ्ख्याता इति। ज्ञानकाः ज्ञानानन्दात्मकाः। अयं बहिर्व्याप्त आकाशः परमात्मा यावान् यावत्परिमाणस्तावानेवैषोऽन्तर्हृदये स्थितः परमात्मेत्यर्थः। गर्भे जठरे जगद्यस्यासौ तथोक्तः। अत्रसन्नोऽवनतः। गर्भजगत्त्वेनापरिच्छिन्नपरिमाणत्वं लभ्यते। कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदन्तो वक्तव्याः-तत्राल्पपरिमाणप्रतीतिर्या सा किं भ्रान्तिः,उत प्रमितिरिति; आद्ये क्रियादेर्द्विभुजचतुर्भुजादेश्च मिथ्यात्वं स्यात्, न द्वितीयः, युगपदेकत्राल्पानल्पपरिमाणसमावेशस्यायुक्तत्वात्; अतोऽपरिच्छिन्नपरिमाणोक्तिरुपचारमात्रमिति चेत्—किमिदमनेकपरिमाणत्वस्यायुक्तत्वं, किमन्यत्रादर्शनेनासम्भावितत्वम्, उत नायमल्पानल्पपरिमाणोपेतो द्रव्यत्वात्; नायं परममहत्परिमाणोऽल्पपरिमाणत्वात्पटवदित्यादियुक्तिविरुद्धत्वम्; अथातिप्रसङ्गदुष्टत्वं,किं वाऽप्रामाणिकत्वम्; नाद्य इत्याह—नचेति। अघटितघटनाशक्त्युपेते किं नामासम्भावितमिति भावः। न द्वितीयः; ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाह—अचिन्त्या इति। एषा ब्रह्मविषया। अपनेया निराकार्या। अतिप्रसङ्गोऽपि किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात्, तदा निर्दुःखो दुःखी स्यादितीश्वरमधिकृत्य स्यात्; उत प्राणादयोऽपि तथा स्युः,तथाच'अणुश्च'इत्यादिका तद्विषयवाक्यव्यवस्था नाङ्गीक्रियेतेत्यन्यदधिकृत्य स्यात्; आद्यं दूषयति—अतिप्रसङ्गस्त्विति। अविशेषमाश्रित्य ह्ययमतिप्रसङ्गः। न चासावस्ति निर्दोषानन्तगुणत्वे हरेः श्रुतीनां महातात्पर्येण दुःखादेस्तद्विरोधात्परिमाणद्वयस्य तु तदविरोधात् दुःखादेरप्रामाणिकत्वात्परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः। विपर्ययापर्यवसायी चायं प्रसङ्ग इति भावेनाह—नहीति। यदि घटः पृथुबुध्नोदराकारः स्यात्तर्हि पदार्थो न स्यात्, तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसङ्गो यथा न युक्तः, भवति च पदार्थस्तस्मात्पृथुबुध्नोदराकारः, न भवतीति विपर्ययस्य प्रमाणबाधितत्वेनापर्यवसानात्, तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात्, तथा प्रकृतेऽपीति। एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति। प्राणादिकमधिकृत्यातिप्रसङ्ग इति द्वितीयं

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वा दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७

रा॥तेजोराशिं सर्वतो दीप्तिमन्तं समन्ताद्दुर्निरीक्ष्यं दीप्तानलार्कद्युतिमप्रमेयं त्वां

ता॥'किरीटिनम्' इत्यादेः पाठक्रममनादृत्य उपलम्भार्थक्रमानुरोधेनान्वयमाह—तेजोराशिमित्यादिना । 'तेजोराशिम्' इति धर्मिस्वरूपनिर्देशः । सर्वतोदीप्तिमन्तं—'तस्य भासा सर्वमिदं विभाति' इत्यादिवत्सर्वव्यापिप्रभायोगिनम् । 'समन्तात्' इति कृत्स्नविग्रहप्रदेशविवक्षयाभिहितम् । दीप्तानलार्कद्युतिम्' इति दुर्निरीक्षत्वे हेतुः । अत्र द्युतिशब्देन किरणरूपं तेजो विवक्षितम्; अतो 'दीप्तिमन्तम्'इत्यनेनापौनरुक्त्यम् । यद्वा पूर्वत्र सर्वव्यापित्वे तात्पर्यम्; इह तु दुष्प्रेक्षत्वहेतुभूतातितीव्रत्वे। अप्रमेयम्-ईदृक्त्वेयत्ताभ्यां परिच्छेत्तुमशक्यम् । एतावता सामान्योपलम्भकथनमित्यभिप्रायेण—अप्रमेयं त्वामित्यवच्छिद्योक्तम् । अदृष्टपूर्वरूपदर्शनेऽपि त्वदसाधारणचिह्नैः त्वां प्रत्यभिजानामीत्य-

प्र-पा ॥ १. कठोप. २-५-१५ ॥

शं॥किंच—किरीटिनं-किरीटं नाम शिरोभूषणविशेषः, तत् यस्य अस्ति सः किरिटी तं-किरीटिनम्; तथा गदिनं गदा अस्य विद्यते इति गदी तं गदिनं तथा चक्रिणं चक्रम् अस्य अस्तीति चक्री तं चक्रिणं च. तेजोराशिं तेजःपुञ्जं, सर्वतोदीप्तिमन्तं सर्वतोदीप्तिः

आ॥दार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन्निराक्रियते । केषुचित्पदार्थेषु वाक्यव्यवस्था अचिन्त्यशक्तित्वाभावादङ्गीक्रियते। 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का।चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः।एवंपरेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद्व्यवस्था ' ' इति जाबालखिलश्रुतेश्च। उपचारत्वपरिहाराय न मध्यमिति । अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः 'स विश्वरूपो अनूनरूपो अतो यं सोऽनन्तरूपो न हि नाशोऽस्ति तस्य'इति शाण्डिल्यशाखायाम् ॥ १६ ॥

अनलार्कद्युतिमित्युक्ते मितत्वशङ्कामपाकरोति—अप्रमेयमिति ॥ १७ ॥

ज॥निराकरोति —केषुचिदिति।अत्रापि संभावनाहेतुभावाभावाभ्यां विशेषादविशेषो ऽसिद्ध इति भावः। सुविरुद्धा अन्यत्र सहादृष्टा अविरुद्धाश्च। तथा गुणा इव दोषाः। श्रुता अश्रुताश्च नैव सन्ति । किंत्वज्ञैर्मिथ्यादृष्टिभिर्हि तथा सन्तीति प्रतीताः । एवं परे ईश्वरे स्थितिस्ततोऽन्यत्र तु श्रुतानां प्रमाणान्तरसिद्धानां च गुणदोषाणां व्यवस्थाऽवस्थानम्। तच्च क्रमादुत्तमेषु गुणबाहुल्यं दोषाल्पत्वम्;मध्यमेषूभयसाम्यम्; अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति । तदेवमसभावनाद्यभावान्न भगवति अपरिच्छिन्नपरिमाणत्वोक्तेरुपचरितत्वं कल्प्यम् , अर्जुनेनापि तन्निराकृतमिति भावेनाह—उपचारत्वेति। नान्तं न पुनस्त्वादिं पश्यामीत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय न मध्यमित्युक्तम्। मध्यनिराकरणार्थमेव तत्किं न स्यादित्यत आह—अन्यथेति । उपचारत्वपरिहारार्थत्वाभावे । तदैश्वर्यं स्यादिति शेषः। कुतः? आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः । विश्वं महदादिकं रूपं स्वरूपमस्येति प्रतीतिं सप्रमाणकं निवारयति—विश्वरूपइति । एतच्चाभ्यासरूपमिति मन्तव्यम् ॥ १६ ॥

नन्वनलार्कद्युतिमित्युक्तत्वात् सहस्रशब्दोऽनन्तवाचीत्याद्युक्तमयुक्तमिति चेत्-न; एतदेवाशङ्क्य प्रत्यायनार्थमेवैतदुक्तम्; वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह—अनलेति ।

रा॥किरीटिनं गदिनं चक्रिण च पश्यामि ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययश्शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८

उपनिषत्सु [1]'द्वे विद्ये वेदितव्ये' इत्यादिषु वेदितव्यतया निर्दिष्टं परममक्षरं त्वमेव, अस्य विश्वस्य परं निधानं विश्वस्यास्य परमाधारभूतस्त्वमेव; त्वमव्ययः-व्ययरहितः; यत्स्वरूपो यद्गुणो यद्विभवश्च त्वं तेनैव रूपेण सर्वदावतिष्ठसे, शाश्वतधर्मगोप्ता

---

ता॥भिप्रायेणाह—**किरीटिनङ्गदिनश्चक्रिणञ्च पश्यामि** इति। किरीटिनमिति भूषणवर्गोपलक्षणम्। तत्रापि किरीटनिर्देशस्तस्य सर्वेश्वरत्वव्यञ्जकत्वात्। किरीटकरण्डिकाभेदेन द्विधा हि मकुटजातिः; तत्र किरीट उत्कृष्टधार्यः। 'गदिनं चक्रिणम्' इत्यायुधवर्गोपलक्षणम्। तत्रापि चक्रादेर्व्यपदेशो भगवदसाधारणत्वेन प्रसिद्धत्वात्॥ १७ ॥

'त्वमक्षरम्' इत्यादिना भगवत्प्रभावदर्शनादेवमक्षरवेदितव्याव्ययसनातनपुरुषादिशब्दैर्मुण्डकोपनिषदादिस्मारणमित्यभिप्रायेणाह—**उपनिषत्स्विति**। **निर्दिष्टमिति**—'अथ परा यया तदक्षरमधिगम्यते' इत्यादिनेति शेषः। 'विष्णुसंज्ञं सर्वाधारं धाम' इत्याद्यनुसन्धानेनाह—**विश्वस्यास्य परमाधारभूत** इति। निधीयतेऽस्मिन्निति निधानम्; निधानानामपि निधानत्वात्परं निधानम्। 'आधारभूतं विश्वस्य' इत्याद्युक्तजीवव्यवच्छेदार्थः परशब्दः। 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः। प्रज्ञामात्राः प्राणेऽर्पिताः' इति हि श्रूयते। अनन्याधारत्वाय परमशब्देन व्याक्रिया। अव्ययशब्देन 'तदव्ययम्' 'अनन्तमव्ययं कविम्' इत्यादिकं सारितम्। स्वरूपस्य गुणस्य विभवस्य वा यदाकदाचित्प्रच्युतिर्हि व्ययः; स सर्वोऽप्यस्य नास्तीत्यविशेषिताव्ययशब्देनोच्यते, दृश्यमानाकारानुवादित्वंशब्दनिर्दिष्टविशेषकत्वादव्ययशब्दस्य जीवादिसाधारणस्वरूपमात्रनित्यतोक्तावतिशयाभावादित्यभिप्रायेणाह—**यत्स्वरूपो यद्गुणो यद्विभवश्चेति**। अत्र विभवशब्देन नित्यविभूतिर्विवक्षिता; विभूतियुगलविवक्षायां तु द्रव्यस्वरूपस्यान्यूनानतिरिक्तत्वमात्रमिह विवक्षितमिति भाव्यम्। शश्वद्भवश्शाश्वतः; शाश्वतत्वे हेतुः

---

**प्र पा**॥ *मुण्ड. १-१-३ ॥ १. मु १ १-५ ॥ २ ॥ ३. कौषी ३-९ ॥ ४. मु. १-१-६ ॥ ५ पुरुषसू ॥

---

शां॥यस्य अस्तीति स सर्वतोदीप्तिमान् तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यं समन्तात् समन्ततः, दीप्तानलार्कद्युतिम् अनलश्च अर्कश्च अनलार्कौ तयोः दीप्तानलार्कयोः द्युतिरिव द्युतिः तेजः यस्य तव स त्वं दीप्तानलार्कद्युतिः तं दीप्तानलार्कद्युतिम्, अप्रमेयं न प्रमेयम् अशक्यपरिच्छेदम् इत्येतत्॥ १७ ॥

इत एव ते योगशक्तिदर्शनात् अनुमिनोमि—त्वम् अक्षरं न क्षरतीति अक्षरं परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः। त्वम् अस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयते अस्मिन्निति निधानं, परः आश्रयः इत्यर्थः। किञ्च—त्वम् अव्ययः न तव व्ययो विद्यते इति अव्ययः, शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतः नित्यः धर्मः तस्य

---

जा॥ इत्युक्ते जातां द्युतेर्मितत्वशङ्काम्। एतच्च सविशेषणविशेषणत्वात् द्युत्या सम्बध्यते॥ १७ ॥

रा॥शाश्वतस्य नित्यस्य वैदिकस्य धर्मस्य एवमादिभिरवतारैस्त्वमेव गोप्ता ; सनातनस्त्वं पुरुषो मतो मे*—'वेदाहमेतं पुरुषं महान्तं'†'परात्परं पुरुषम्' इत्यादिषूदितस्सनातनपुरुषस्त्वमेवेति मे मतः ज्ञातः ; यदुकुलतिलकस्त्वमेवंभूत इदानीं साक्षात्कृतो मयेत्यर्थः॥

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वा दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदन्तपन्तम् ॥ १९

अनादिमध्यान्तम्-आदिमध्यान्तरहितम् ,अनन्तवीर्यम्-अनवधिकातिशयवीर्यम् ; वीर्यशब्दः प्रदर्शनार्थः ; अनवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधिमित्यर्थः ।

ता॥नित्यागममूलत्वमित्यभिप्रायेण-वैदिकस्येत्युक्तम्। 'नारायणश्शाश्वतधर्मगोप्ता' इत्यादिष्वपि वैदिक एव विशेषधर्म उच्यत इत्यभिप्रायः।प्रत्यक्षशास्त्राभ्यामवगतोऽयमर्थ उच्यत इत्यभिप्रायेण—एवमादिभिरवतारैरित्युक्तम्। पुरुषविषयेण श्रुतिद्वयेनोपास्यत्वप्राप्यत्वप्रदर्शनम्। आदिशब्देन 'येनाक्षरं पुरुषं वेद सत्यम्' इत्यादिकं क्रोडीकृतम्। सनातनशब्देन सत्यशब्दोपबृंहणम्। 'मतः'इति स्वाभिमानमात्रप्रतीतिव्युदासायाह—ज्ञातइति। अत्र श्लोके'त्वम्'इति प्राचीनमांसचक्षुःप्रतिपन्नाकारानुवादः। शेषेण तु दिव्यचक्षुर्लाभसाक्षात्कृताकारकथनम्।प्रभावमात्रज्ञानस्य प्रागेव सिद्धत्वादित्यभिप्रायेणाह-यदुकुलेति । मतशब्दोऽत्र सामान्यरूपः'पश्यामि इत्युक्तसाक्षात्काराख्यविशेषपर्यवसित इत्यभिप्रायेण—इदानींसाक्षात्कृतइत्युक्तम् ॥ १८ ॥

'अनादिमध्यान्तम्'इति नञस्तदन्यपरत्वे 'सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन' 'अहमादिश्च मध्यं च भूतानामन्त एव च' इत्यादिभिर्विरुध्येत;अतो निषेधपरतामाह—आदिमध्यान्तरहितमिति। 'नान्तं न मध्यम्' इत्यादिकं स्वरूपविषयम् , इदं तु विग्रहविषयमित्यपौनरुक्त्यम्। यद्वा उत्पत्तिस्थितिनाशरूपविकारनिषेधः क्वचित्;अन्यत्र तत्तद्धेतुनिषेध इत्यादिरूपेण विभजनीयम्।अथवात्र कालाभिमानिरूपदर्शनात् 'अनादिर्भगवान्कालः' इत्यादिवत्कालाख्यविभूतिनित्यत्वविवक्षा । वीर्यस्यानन्त्यं नाम तारतम्यप्रयुक्तावच्छेदनिवृत्तिरित्यभिप्रायेणाह—अनवधिकातिशयवीर्यमिति । निर्दिष्टमात्रपरत्वव्युदासाय सन्नियोगशिष्टानामन्यतरोक्तावितरदपि सिध्यतीत्यभिप्रायेणाह—वीर्यशब्दः प्रदर्शनार्थइति। 'अनेकबाहुम्' इति बाहुनानात्वमात्रं पूर्वमुक्तम्; 'अनन्तबाहुम्' इतितु संख्यानिवृत्तिरुच्यत इत्यपौन-

प्र-पा ॥ * पुरुषसूक्त ॥ †मुण्ड. ३-२-८ ॥ ३. गी. १०-३२ ॥ ४. गी. १०-२० ॥
१ ॥ २. मु. १-२-१३ ॥ ५. वि. पु. १-२-२६ ॥

शं॥गोप्ता शाश्वतधर्मगोप्ता।सनातनः चिरन्तनः त्वं पुरुषः परमः मतः अभिप्रेतः मे मम॥

किञ्च—अनादिमध्यान्तम् आदिश्च मध्यं च अन्तश्च न विद्यते यस्य सः अयम् अनादिमध्यान्तः तं त्वाम् अनादिमध्यान्तम् , अनन्तवीर्यं न तव वीर्यस्य अन्तः अस्ति इति अनन्तवीर्यः तम् अनन्तवीर्यं,तथा अनन्तबाहुम् अनन्ताः बाहवः यस्य तव सः त्वम् अ-

आ॥' शशिसूर्यनेत्रम् ' इत्यपि 'अहं क्रतुः' इत्यादिवत् । 'तदङ्गजाः सर्वसुरादयोऽपि तस्मात्तदङ्गेत्यृषिभिः स्तुतास्ते' इत्यृग्वेदखिलेषु । 'चन्द्रमा मनसो जातः। चक्षोः सूर्यो

ज॥'शशिसूर्यनेत्रम्' इत्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथाव्याख्यानमित्यत आह—शशीति । इत्यादिवत् व्याख्येयम् । जन्यजनकभावेनाश्रयाश्रयिभावेन वाऽभेदोक्तिरित्यर्थः।कुत एतदित्यत आह—तदङ्गजाइति । तदङ्गेत्यविभक्तिको निर्देशः संबुद्धिर्वा । अभेदे बाधकं चाह—चन्द्रमाइति ।

रा॥अनन्तबाहुम्-असंख्येयबाहुम् ; सोऽपि प्रदर्शनार्थः ; अनन्तबाहूदरपादवक्त्रादिकं ; शशिसूर्यनेत्रं-शशिवत्सूर्यवच्च प्रसादप्रतापयुक्तसर्वनेत्रम् , देवादीननुकूलान् नमस्कारादि कुर्वाणान्प्रति प्रसादः;तद्विपरीतानसुरराक्षसादीन् प्रति प्रतापः;*'रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः' इति हि वक्ष्यते। दीप्तहुताशवक्त्रं प्रदीप्तकालानलवत्संहारानुगुणवक्त्रम् ; स्वतेजसा विश्वमिदं तपन्तं-तेजः-पराभिभवनसामर्थ्यम् ; स्वकीयेन तेजसा विश्वमिदं तपन्तं त्वां पश्यामि—एवंभूतं सर्वस्य स्रष्टारं सर्वस्याधारभूतं,सर्वस्य प्रशासितारं,सर्वस्य संहर्तारं,ज्ञानाद्यपरिमितगुणसागरम् आदिमध्यान्तरहितमेवंभूतदिव्यदेहं त्वां यथोपदेशं साक्षात्करोमीत्यर्थः। एकस्मिन् दिव्यदेहे अनेकोदरादिकं कथम्? इत्थमुपपद्यते-एकस्मात्कटिप्रदेशादनन्तपरिमाणादूर्ध्वमुद्गता

ता॥रुक्त्यमित्यभिप्रायेणाह—असंख्येयबाहुमिति।'अनेकबाहूदरवक्त्रनेत्रम्'इति पूर्वसमादिष्टसमुदाये कस्यचिदसंख्येयत्वविधानमितरेषामपि प्रदर्शनार्थमित्यभिप्रायेणाह—सोऽपीति। 'शशिसूर्यनेत्रम्' इत्यत्र चन्द्रसूर्ययोरेव न नेत्रत्वरूपणम्, रूपणप्रकरणाद्यभावात्,अस्य च रूपस्यानन्तनयनविशिष्टत्वात्;अतस्साधर्म्यमेव विवक्षितम्। तत्रापि केषांचिच्छशितुल्यत्वं केषांचित्सूर्यतुल्यत्वमिति विभाजकाभावात्सर्वेषामुभयतुल्यत्वं विवक्षितमित्याह—शशिवदिति।युगपत्प्रसादप्रतापयोर्विरुद्धयोर्विषय व्यवस्थापयति—देवादीनिति। तदेव वक्ष्यमाणेन स्थापयति—रक्षांसीति। 'दीप्तानलार्कद्युतिम्' इति प्रागभिधानेऽपि पुनः 'दीप्तहुताशवक्त्रम्' इति विशेषतोऽभिधानं वक्त्रसाध्यजगद्ग्रसनाख्यविशेषतात्पर्येणेत्यभिप्रायेणाह—प्रदीप्तकालानलवदिति। संहारानुगुणेति—साधर्म्यकथनम्। अत्र हुताश एव वक्त्रमिति परोक्तनिरसनाय'कालानलसन्निभानि'इति वक्ष्यमाणानुसन्धानेन—कालानलवदित्युक्तम्।पावकश्च वसुगणेऽन्तर्भूतः।पृथगुक्तः।'विश्वमिदं तपन्तम्'इति वचनादत्र तेजश्शब्देन अन्यानपेक्षत्वं न विवक्षितम्, प्रकृतानुपयोगात्;अतस्तदुचितमर्थमाह—तेजसइति। 'कालः पचति भूतानि' इत्यादेः इदं निदानसूचनमित्यभिप्रायेणाह—स्वकीयेनेति। पूर्वं श्रुतमनन्तरं दिव्यचक्षुषा साक्षात्कृतं सर्वमाकारं संकलय्याह—एवमिति। एकस्य देहस्य अनेकबाहुमुखादियोगश्श्रुतपूर्वो दृष्टपूर्वश्च; उदरादेरनेकत्वं तु कथमिति चोदयति—एकस्मिन्निति। परिहरति—इत्थमिति। श्रुतानुरूपं सर्वमुपपादनीयमिति भावः। एकस्मादित्यादि। अयमभिप्रायः—'अनेकबाहूदरवक्त्रनेत्रम्' इत्यवयवानेकत्वमात्रवचनाद्रूपमेकमिति गम्यते, एकविग्रहविषयपूर्वापरपरामर्शाच्च। नच 'पश्य मे पार्थ रूपाणि' इत्युपक्रमादिहाप्यनेकविग्रहविषयमनेकोदरत्वादिकमिति वाच्यम्, तथा सति 'अनेकविग्रहम्'इत्येतावतो वक्तव्यत्वात्। नह्यनेकेषु शरीरेष्वनेकबाहूदरत्वादिकं विशेषतो वक्तव्यम्; नच भगवच्छास्त्रे अनेकोदरादिमद्रूपं न दृष्टमिति वाच्यं, तस्य शास्त्रस्येदानीं निश्शेषप्रवृत्त्यभावात्; नारदादिदृष्टरूपाण्यपि तत्रेदानीं न

प्र-पा॥ *गी-११-३६॥ १. भार. उद्यो॥ २. गी. ११-१६॥

शं॥नन्तबाहुः तं त्वाम् अनन्तबाहुं,शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव सः तं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्च असौ हुताशश्च वक्त्रं यस्य तव सः त्वं

आ॥अजायत' इति च। बहुरूपत्वाद्ब्रह्माश्रयत्वं तेषां युक्तम्॥ १९॥

ज॥चक्षोश्चक्षुषः।नन्वत्र चन्द्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते;गीतायां तु नेत्राश्रयत्वादि; ततोऽन्यत्र दंष्ट्रार्यमेन्दू इति; तत्कुतो न विरोध इत्यत आह—बह्विति॥ १९॥

रा॥**यथोदितोदरादयः, अधश्च यथोदितदिव्यपादाः; तत्रैकस्मिन्मुखे नेत्रद्वयमिति च न विरोधः** ॥ १९ ॥

**एवंभूतं त्वां दृष्ट्वा देवादयोऽहं च प्रव्यथिता भवाम इत्याह—**

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २०**

**द्युशब्दः पृथिवीशब्दश्चोभावुपरितनानामधस्तनानां च लोकानां प्रदर्शनार्थौ; द्यावापृथिव्योरन्तरम्-अवकाशः; यस्मिन्नवकाशे सर्वे लोकास्तिष्ठन्ति;सर्वोऽयमवकाशो दिशश्च सर्वास्त्वयैकेन व्याप्ताः ; दृष्ट्वाद्भुतं रूपमुग्रं तवेदम्-अनन्तायामविस्तारमत्यद्भुत-**

ता॥पश्यामः, इतोऽन्यथापि श्रीविश्वरूपं नारदेन दृष्टम् ; ततोऽन्यदेव धृतराष्ट्रेण दृष्टम् ; अतो यथा संहिताभेदेन वराहनारसिंहादेरन्यथान्यथासन्निवेशवर्णभुजादिवैचित्र्य,तद्वच्छ्रीविश्वरूपविग्रहेऽपि वचनबलादेव तथातथा वैचित्र्यमङ्गीकुर्मः, अतश्शाखामूलनानात्वेऽपि काण्डैक्याद्वृक्षैक्यवद्बाहूदरादिभेदेऽपि भेदोक्तिरहितकटिप्रदेशैक्यादिह रूपैक्यम्—इति।एतच्च सर्वं यथोदितशब्देन सूचितम्। **एकस्मिन्मुखे नेत्रद्वयमिति**—एकैकस्मिन्नित्यर्थः॥ १९ ॥

**एवंभूतमिति** अत्युग्ररूपमित्यर्थः । प्रव्यथितविशेषणानुसारेण लोकशब्दोऽत्र जनविषय इत्याह—**देवादय** इति । 'दृष्ट्वा लोकाः प्रव्यथितास्तथाहम्' इति वक्ष्यमाणावेक्षणेन—**अहं चे**त्युक्तम्। अनन्तत्वस्य बहुशोऽभिहितत्वादवच्छिन्नलोकद्वयव्याप्तिवचनं तदुपलक्षितलोकवर्गद्वयप्रदर्शनार्थमित्यभिप्रायेणाह—**द्युशब्द** इति । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यनेकार्थान्तरशब्दस्य प्रस्तुतानुगुणमर्थमाह—**अवकाश** इति । शक्तिविशेषादिवशात्सप्रतीघत्वविरोधाद्यभावाभिप्रायेणावकाशं विवृण्वन्पिण्डितार्थमाह—**यस्मिन्नि**ति । **अनन्तायामविस्तार**मिति पूर्वोक्तस्यानुकर्षणम् । अयमभिप्रायः—पूर्वापरवाक्ययोर्विग्रहैकविषयतया मध्ये स्वरूपव्याप्तिकथनप्रयोजनाभावाद्विग्रहस्य चातिमहत्त्वेन कण्ठोक्तत्वात्तद्विषयोऽयं व्याप्तिव्यपदेश इति । नात्र लोकत्रयशब्देन पृथिव्यादिकं विवक्षितम्, तत्र प्रव्यथितत्ववचनायोगात् । अतो 'मञ्चाः क्रोशन्ति' इति वत्तद्वर्तिनः प्राणिनो वक्तव्याः । ततश्च लक्षणातोऽपि लोकशब्दस्यैव मुख्यत्वेन जनविषयत्वं वरम् । जनस्य त्रित्वं च शत्रुमित्रोदासीनरूपेण सुप्रसिद्धम्; तस्य च सर्वस्य जनस्यात्र समवायो युद्धदिदृक्षया सिद्धः ; अत एव लोकत्रयवर्तिकतिपयपुरुषव्यथादर्शनेन लोकत्रयनिर्देश इति न भ्रमितव्यम्, नापीदमर्जुन-

**प्र·पा** ॥ १. गी. ११-२३ ॥ २. नामलिङ्गानुशासने. ३-काण्डे. नानार्थवर्गे. रान्तेषु-३४७ ॥

शं॥**दीप्तहुताशवक्त्रः तं त्वां दीप्तहुताशवक्त्रं,स्वतेजसा विश्वम् इदं समस्तं तपन्तं सन्तापयन्तम्** ॥ १९ ॥

**द्यावापृथिव्योः इदम् अन्तरं हि व्याप्तं त्वया विश्वरूपधरेण एकेन, दिशश्च**

आ॥**'मातापित्रोरन्तरङ्गः स एको रूपेण चान्यैः सर्वगतः स एकः' इति वारुणश्रुते-**

ज॥'द्यावापृथिव्योरिदमन्तरंहि'इत्यत्र त्वयेत्यनेनैवैकत्वस्य सिद्धत्वादेकेनेति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह—**मातापित्रो**रिति । बहुत्वेऽपि स एकोऽभिन्नः। अनेन दिशश्च सर्वा रूपान्तरैरित्युक्तं भवति । तदयुक्तम्, विश्वरूपस्य ' द्रष्टुमिच्छामि ते रूपम् ' इत्यादिना एकत्वावगतेरित्यत आह—

रा॥मत्युग्रं च रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं—युद्धदिदृक्षया आगतेषु ब्रह्मादिदेवासुरपितृगणसिद्धगन्धर्वयक्षराक्षसेषु प्रतिकूलानुकूलमध्यस्थरूपं लोकत्रयं सर्वं प्रव्यथितम्-अत्यन्तभीतम्; महात्मन् अपरिच्छेद्यमनोवृत्ते; एतेषामप्यर्जुनस्येव विश्वाश्रयरूपसाक्षात्कारसाधनं दिव्यं चक्षुर्भगवता दत्तम्; किमर्थमिति चेत्—अर्जुनाय स्वैश्वर्यं सर्वं प्रदर्शयितुम्; अत इदमुच्यते—'दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्' इति ॥ २० ॥

ता॥स्योत्प्रेक्षणं, दृष्टस्यैव सर्वस्य वचनात्; तदेतदाह—**युद्धे**ति। अत्र देवासुरादिग्रहणं मानुषव्यवच्छेदार्थं, युद्धायागतानां सर्वेषा भगवद्विग्रहादर्शनात्। सोपसर्गस्य धातोर्विवक्षितमाह—**अत्यन्तभीत**मिति। महात्मशब्दस्य गम्भीरबुद्धिविशेषवत्सु प्रसिद्धत्वात्, विग्रहस्योग्रत्ववदाशयापरिच्छेदस्यापि भयहेतुत्वादत्रायमेवार्थ उचित इत्यभिप्रायेणाह-- **अपरिच्छेद्ये**ति। ननु 'दर्शयामास पार्थाय' इति ह्युपक्रान्तम्; तत्कथं देवासुरादीनामपि मानुषवन्मांसचक्षुषां भगवद्विग्रहसाक्षात्कार उच्यत इत्यत्राह—**एतेषामपी**ति। अर्जुनस्य शिष्यभूतस्यात्यन्तोपसन्नस्य निरतिशयभक्तेस्स्वविग्रहप्रकाशनं प्राप्तम्; तदर्थं च तस्यैव दिव्यचक्षुर्दत्तम्, वक्ष्यति च—'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति; अतस्सामान्येन सर्वस्य जनस्य दिव्यचक्षुःप्रदाने कारणं न पश्याम इत्यभिप्रायेण शङ्कते—**किमर्थ**मिति। परिहरति—**अर्जुनाये**ति। देवादीनामपि दिदृक्षासम्भवात्सर्वेषामवतारसाक्षात्कारवत्सुकृतविपाकसन्निपातात्क्षुद्राणामिव महतामपि भयावहत्वादिना निरङ्कुशैश्वर्यप्रकाशनेन प्रकृतोपयोगाच्च दिव्यचक्षुर्दानमिति भावः। तदेवार्जुनवाक्येन संवादयति—**अतइद**मिति ॥ २० ॥

**प्र-पा** ॥ १. गी. ११-९ ॥ | २. गी. ११-५२ ॥

शं॥ **सर्वाः** व्याप्तं दृष्ट्वा उपलभ्य अद्भुतं विस्मापकं रूपम् इदं तव उग्रं क्रूरं लोकत्रयं लोकानां त्रयं प्रव्यथितं भीतं चलितं वा हे महात्मन् अक्षुद्रस्वभाव ॥ २० ॥

आ॥रेकेनैव द्यावापृथिव्योरन्तरं व्याप्तो भवति। 'पश्य मे पार्थ रूपाणि' इति बहूनि रूपाणि प्रतिज्ञातानि मातापितरौ च पृथिवीद्यावौ। 'मा नो माता पृथिवी दुर्मतौ धात्। मधु द्यौरस्तु नः पिता, इत्यादिप्रयोगात्। न तु नियमतो भयप्रदं तत्स्वरूपम्। नारदस्य तदभावात्। केषांचित्तथा दर्शयति भगवान्। 'म्रियन्ति केचित्तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिः' इति वारुणशाखायाम्। न तु तं सर्वे पश्यन्ति। अदृष्ट्वाऽपि

जा॥**पश्ये**ति। ऐक्यापेक्षयैकवचनमिति भावः। मातापित्रोरिति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता, द्यावापृथिव्योरित्यनभिधानादित्यत आह—**मातापितरौचे**ति।माता, पृथिवी, नः-अस्मान्, दुर्मतौ, मा धात्-न दध्यात्।नोऽस्माकं मधु सुखहेतुरस्तु।'दृष्ट्वाद्भुतम्'इत्यादिना विश्वरूपदर्शनस्य भयहेतुत्वमुच्यते। तन्न सर्वेषां सर्वदा; किं तु केषांचित्कारणविशेषात्कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह—**नत्विति**। अभ्यसे--अभ्यासे सति सर्वेषा तृप्तिरानन्द एवेत्यर्थः। एवं तद्दर्शनस्य भयहेतुत्वनियमाभावमभिधाय लोकत्रयस्य दर्शनाभावं चाह—**नत्विति**। किंतु त्रिलोकेषु स्थितैर्भक्तैरित्युक्तप्रकारेण कैश्चिदेव। तदभिप्रायश्च लोकत्रयशब्द इति भावः। प्रकारान्तरेण लोकत्रयमित्यस्याभिप्रायमाह—**अदृष्ट्वाऽपी**ति। विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्दृष्टुरर्जुनस्य तथाऽहमिवैतेऽपि दृष्ट्वा बिभ्यतीति प्रतिभातीत्यतो लोकत्रयं दृष्ट्वाप्रव्यथितमि-

**अमी हि त्वा सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥**

रा॥अमी सुरसङ्घाः उत्कृष्टास्त्वां विश्वाश्रयमवलोक्य हृष्टमनसस्त्वत्समीपं विशन्ति; तेष्वेव केचिदत्युग्रमत्यद्भुतं च तवाकारमालोक्य भीताः प्राञ्जलयस्स्वज्ञानानुगुणं स्तुतिरूपाणि वाक्यानि गृणन्ति - उच्चारयन्ति; अपरे महर्षिसङ्घास्सिद्धसङ्घाश्च परावरतत्त्वयाथात्म्यविदः स्वस्तीत्युक्त्वा पुष्कलाभिर्भगवदनुरूपाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥

ता॥'अमी हि त्वा विशन्ति'इत्यत्र न संहारादिकं विवक्षितं,स्तुत्यादिभिस्सहपाठाद्धार्तराष्ट्रादिवदत्रोपसंहाराभावात् ; परोक्तस्यावतीर्णसुरसङ्घविषयत्वस्य 'वीक्षन्ते' इत्यादिभिर्विरोधाच्च ; अतोऽत्र समीपगमनरूपसेवाप्रकारोऽभिधीयत इत्यभिप्रायेणाह—**अमी सुरसङ्घा** इत्यादिना । 'केचिद्भीताः' इत्यनेन धार्ष्ट्यरहिताना पृथगभिधानादनेन वाक्येन अक्षोभ्याशया हर्षवन्तो विवक्षिता इति व्यञ्जनाय ब्रह्मादीनां सर्वेषां देवानां सेवार्थागमनं प्रथममुच्यते । **उत्कृष्टा** इति तु सुरशब्दव्यञ्जितोक्तिः । विनाशार्थप्रवेशव्यवच्छेदाय—**हृष्टमनस** इत्युक्तम् । वक्ष्यमाणवक्त्रप्रवेशव्यवच्छेदायाह—**त्वत्समीपमि**ति। 'केचित्'इति पृथक्करणस्य समुदायविशेषसाकाङ्क्षत्वात्'सुरसङ्घाः'इति च प्रसक्तत्वाज्जात्यन्तरानवादाच्च—**तेष्वेवे**त्युक्तम् । **अत्युग्रमत्यद्भुतंचे**ति भीत्यादिहेतुभूतप्रकृताकारकथनम् । 'पुष्कलाभिः' इति वक्ष्यमाणत्वादिह तदभावो विवक्षित इत्यभिप्रायेण—**स्वज्ञानानुगुणा**मित्युक्तम् । **स्तुतिरूपाणी**त्यादिना 'गृणन्ति'इत्यस्यापेक्षितकर्माध्याहारः । श्रुत्यादिसिद्धस्तुतिपाठमात्रपरत्वायाह—**उच्चारयन्ती**ति । एतेनापि 'केचित्'इत्यस्य देवविशेषविषयत्वं सिद्धम्,अन्येषां तु भूतानां पलायनस्य वक्ष्यमाणत्वात् । 'महर्षि'इत्यादिना पृथग्व्यपदेशविशेषणादिफलितमपरशब्देन व्यञ्जितम्। महर्षिसङ्घाः-भृग्वादिगणाः; सिद्धसंघाः-सनकमुख्याः; महर्षित्वादिसूचितं पुष्कलस्तुतिहेतुमाह—**परावरतत्त्वयाथात्म्यविद** इति । 'जितं ते' इत्यादिवत् भक्तिपरवशाना मङ्गलाशासन वा, सेव्यसंदर्शनमात्रे सेवकस्य वक्तव्यः स्वस्तिशब्दः ; स्तुतिस्तु तदनन्तरं गुणप्रकर्षोक्तिः । अत एव गोब्राह्मणेभ्यो जगतो वा स्वस्तीति परोक्तं प्रकृतासङ्गतम्। अत्र स्तुतेः पौष्कल्यं प्रामाणिकसर्वेश्वरत्वादिकथनमित्यभिप्रायेणाह—**भगवदनुरूपाभि**रिति ॥ २१ ॥

शं॥अथ इदानीं 'यद्वा जयेम यदि वा नो जयेयुः'इति अर्जुनस्य यः संशयः आसीत्, तन्निर्णयाय पाण्डवविजयम् ऐकान्तिकं दर्शयामि इति प्रवृत्तो भगवान् । तं पश्यन् आह —किञ्च—अमी हि युध्यमाना ये योद्धारः त्वां ये सुरसङ्घाः ये अत्र भूभारावताराय अवतीर्णाः वस्वादिदेवसङ्घाः मनुष्यसंस्थानाः ते त्वां विशन्ति प्रविशन्तः दृश्यन्ते । तत्र केचित् भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति पलायनेऽपि अशक्ताः सन्तः । युद्धे प्रत्युपस्थापिते उत्पातादिनिमित्तानि उपलक्ष्य स्वस्ति अस्तु जगतः इति उक्त्वा महर्षीणां

आ॥तान्निरूप्य भयेन द्रष्टुस्तथा प्रतिभाति। तथा च गौतमखिलेषु—'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद्भिभ्यतो दृष्टवत्ते। पश्यन्ति ते न्यस्तचक्षुर्मुखांस्तु तस्मिन्नेवैते मनसो गतत्वात्' इति ॥ २० ॥

ज॥त्याहेत्यर्थः।अत्र श्रुतिसंमतिमाह—**दृष्ट्वेति**।देवं विश्वरूपं दृष्ट्वा मोदमानास्त एतेऽर्जुनादयस्तद्भयायिनः पश्यन्ति; कथंभूतान्? अदृष्ट्वाऽपि तन्निरूप्यैतद्भयाद्भिभ्यतो भयचिह्नवतस्तस्मिन्नेव विश्वरूपे मनसो गतत्वात्तन्न्यस्तचक्षुर्मुखांश्च दृष्टवत दृष्टवन्त इवेत्यर्थः ॥ २० ॥

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२

रा॥ऊष्मपाः पितरः—*'ऊष्मभागा हि पितरः' इति श्रुतेः; एते सर्वे विस्मयमापन्नास्त्वां वीक्षन्ते ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३

बह्वीभिर्दंष्ट्राभिरतिभीषणाकारं लोकाः पूर्वोक्ताः प्रतिकूलानुकूलमध्यस्थास्त्रिविधाः सर्वे एवाहं च तवेदमीदृशं रूपं दृष्ट्वा अतीव व्यथिता भवामः ॥ २३ ॥

नभस्स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥

नभश्शब्दः†'तदक्षरे परमे व्योमन्'‡'आदित्यवर्णं तमसः परस्तात्'§'क्षयन्तमस्य रजसः पराके'¶'यो अस्याध्यक्षः परमे व्योमन्' इत्यादिश्रुतिसिद्धत्रिगुणप्रकृत्यतीतपर-

ता॥देवजातिभेदसमभिव्याहारानुगुणमूष्मपशब्दार्थमाह—पितरइति ॥ २२ ॥

'रुद्रादित्याः' इत्यादिना विस्मय उक्तः; 'रूप महत्ते' इति भीतिरुच्यते; पूर्वोक्तलोकत्रयशब्दस्थानत्यलोकशब्दस्य च प्रत्यभिज्ञयैकविषयत्वं दर्शयति—लोकाः पूर्वोक्ताइति । इदमीदृशमिति प्रकारिणः प्रकाराणां च निर्देशः।प्रस्थानप्रसरणादिषु प्रशब्दस्य निषेधपरत्वदर्शनात्'प्रव्यथिताः' इत्यत्र तद्व्युदासायाह—अतीवेति । व्यथिताः—चलिताः, भीता वा ।। २३ ।।

आकाशपर्यायाणामनेकेषां परस्मिन् पदे प्रयोगमभिप्रेत्याह—नभश्शब्दइति । त्रिगुणेति विशेषणात्परमव्योम्नश्शुद्धसत्त्वमयत्वसूचनम् ; अत्र प्रसिद्धप्राकृताकाशपरत्वे, गार्गिविद्योक्ताकाशशब्द-

प्र-पा॥*यजु १ अष्ट ३-१०-६१-३ ॥ †तै. नारा ६ १-२॥ ‡पुरुषसू ॥ § साम. उत्तर. १८७-२-४ ॥ ¶ यजु. २ अष्ट ८-९-६ ॥

शं॥द्धानां च सङ्घाः ते महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥

किञ्च—रुद्रादित्याः वसवो ये च साध्या. विश्वे देवाः अश्विनौ च देवौ मरुतश्च ऊष्मपाश्च पितरः गन्धर्वयक्षासुरसिद्धसङ्घाः गन्धर्वाः हाहाहूहूप्रभृतयः यक्षाः कुबेरप्रभृतयः असुराः विरोचनप्रभृतयः सिद्धाः कपिलादयः तेषां सङ्घाः गन्धर्वयक्षासुरसिद्धसङ्घाः ते वीक्षन्ते पश्यन्ति त्वां विस्मिताः विस्मयम् आपन्नाः सन्तः ते एव सर्वे॥२२॥

यस्मात्—रूपं महत् अतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिन् रूपे तत् रूपं बहुवक्त्रनेत्रं हे महाबाहो बहुबाहूरुपादं बहवो बाहवः ऊरवः पादाश्च यस्मिन् रूपे तत् बहुबाहूरुपादं किञ्च—बहूनि उदराणि यस्मिन्निति तत् बहूदरं बहुदंष्ट्राकरालं बह्वीभिः दंष्ट्राभिः करालं विकृतं तत् बहुदंष्ट्राकरालं—दृष्ट्वा रूपम् ईदृशं लोकाः लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिताः भयेन तथा अहम् अपि॥

तत्रेदं कारणं—नभःस्पृशं द्युस्पर्शम् इत्यर्थः, दीप्तं ज्वलितम्, अनेकवर्णम् अनेके वर्णाः भयङ्कराः नानासंस्थानाः यस्मिन् त्वयि तं त्वाम् अनेकवर्णं व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननम्, दीप्तविशालनेत्रं दीप्तानि

रा॥नभ्योमवाची,सविकारस्य प्रकृतितत्त्वस्य, पुरुषस्य च सर्वावस्थस्य,कृत्स्नस्याश्रयतया न भस्स्पृशमिति वचनात्, 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तम्' इति पूर्वोक्तत्वाच्च ; दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं त्वां दृष्ट्वा प्रव्यथितान्तरात्मा—अत्यन्तभीतमनाः धृतिं न विन्दामि - देहस्य धारणं न लभे ; मनसश्चेन्द्रियाणां च शमं न लभे; विष्णो—व्यापिन् सर्वव्यापिनमतिमात्रमत्यद्भुतमतिघोरं च त्वां दृष्ट्वा प्रशिथिलसर्वावयवो व्याकुलेन्द्रियश्च भवामीत्यर्थः ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५

युगान्तकालानलवत्सर्वसंहारे प्रवृत्तान्यतिघोराणि तव मुखानि दृष्ट्वा दिशो न

ता॥वन्मूलप्रकृतिविषयत्वे वा को दोष इत्यत्राह—सविकारस्येति।'इहैकस्थं जगत्कृत्स्नं...यच्चान्यद्द्रष्टुमिच्छसि' 'बहून्यदृष्टपूर्वाणि पश्य' इत्यादिकं ह्युक्तमिति भावः। हेत्वन्तरमाह—द्यावापृथिव्योरिति। प्रसिद्धद्युपृथिव्यादिसर्वलोकव्यापकत्व हि तत्रोक्तम्, अन्यथा पुनरुक्तिस्स्यात्; अतः प्रकृतिपुरुषादिसर्वाश्रयवेषेण नभस्स्पृक्त्वोक्तिः प्राकृतव्योमस्पर्शित्वविषयेति भावः।अनेकवर्णत्वमिह प्रतिनियतानन्तावयवविशेषवर्तिभिस्सितरक्तादिभिर्वर्णैः किम्मीरत्वम् ; तथैव ह्यन्यत्र श्रीविश्वरूपविग्रहस्यानेकवर्णत्वमुक्तम् ; अन्नमयाद्यपेक्षया मनोमयस्यान्तरत्वाच्चेतनस्वरूपविषयत्वे प्रव्यथितशब्दादनतिरिक्तप्रयोजनत्वादत्रान्तरात्मशब्देन मनो विवक्षितमित्यभिप्रायेणोक्तम्—अत्यन्तभीतमना इति । अचेतनेऽप्यन्तःकरणे भीतिव्यपदेशश्चेतनत्वारोपेण भीत्यतिशयद्योतनार्थः। 'न लभे च शर्म' इति सुखस्य वक्ष्यमाणत्वात् धृतिशब्दोऽत्र न प्रीतिपर्यायसुखविशेषविषयः, धारणे च प्रसिद्धोऽयम् ; अतो धार्यानिर्देशेऽपि प्रकरणादर्थस्वभावाच्च देहविषयमिदं धारणमित्यभिप्रायेण—देहस्य धारणमित्युक्तम्।मनसश्चेन्द्रियाणां चेत्यपि सामर्थ्याच्छमशब्दप्रसिद्ध्या च लब्धम्; अन्यथा तत्रापि पुनरुक्तिस्स्यादिति भावः। विष्णुशब्दस्यात्र संज्ञामात्रपरत्वादप्युपयुक्तनिर्वचनसिद्धार्थपरत्वमुचितमित्यभिप्रायेणाह—व्यापिन्निति । पिण्डितार्थमाह—सर्वव्यापिनमिति । अतिमात्रं—महापरिमाणमित्यर्थः ॥ २४॥

अवयवान्तरेभ्यो मुखानामतिभीषणत्वव्यञ्जनाय'दंष्ट्रा'इति श्लोकः;स्वस्यातिभीतत्वप्रदर्शनेन प्रसादनार्थं च।सर्वसंहारे प्रवृत्तानीति-कालानलसाधर्म्योक्तिः;कालाभिमानिरूपतया तद्व्यापारानुबन्धसूचनं च। अतिघोराणीति 'दंष्ट्राकरालानि'इत्यस्यार्थः। करालशब्दो दन्तुरत्वं,विकृतत्वं,भीषणत्वं वाह। जगन्निवासशब्दे बहुव्रीहिविवक्षायाम् 'इहैकस्थम्' इत्यादिप्रकृतसर्वाधारत्वानुवादो न स्यात्;

प्र-पा॥१. गी ११-७ ॥ | २. गी. ११- ६ ॥

शं॥प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिन् त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः अन्तरात्मा मनः यस्य सः अहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमं च उपशमनं मनस्तुष्टिं हे विष्णो ॥ २४ ॥

कस्मात्—दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैव उपलभ्य कालानलसन्निभानि प्रलयकाले लोकानां दाहकः अग्निः कालानलः तत्सदृशानि कालानलसन्निभानि मुखानि, दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातः अस्मि । अतः न लभे न उपलभे च शर्म सुखम् । अतः प्रसीद प्रसन्नो भव देवेश जगन्निवास ॥ २५ ॥

रा॥जाने; सुखं च न लभे;जगतां निवास देवेश - ब्रह्मादीनामीश्वराणामपि परममहेश्वर प्रति प्रसन्नो भव ; यथाहं प्रकृतिं गतो भवामि, तथा कुर्वित्यर्थः ॥ २५॥

एवं सर्वस्य जगतः स्वायत्तस्थितिप्रवृत्तित्वं दर्शयन् पार्थसारथी राजवेषच्छद्मनावस्थितानां धार्तराष्ट्राणां यौधिष्ठिरेष्वनुप्रविष्टानां चासुरांशानां संहारेण भूभारावतरणं स्वमनीषितं स्वेनैव करिष्यमाणं पार्थाय दर्शयामास;स च पार्थो भगवतः स्रष्टृत्वादिकं सर्वैश्वर्यं साक्षात्कृत्य तस्मिन्नेव भगवति सर्वात्मनि धार्तराष्ट्रादीनामुपसंहारमनागतमपि तत्प्रसादलब्धेन चक्षुषा पश्यन्निदं प्रोवाच—

अमी सर्वे धृतराष्ट्रस्य पुत्रास्सर्वैस्सहैवावनिपालसंघैः ।
भीष्मो द्रोणस्सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥ २६
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७

रा॥अमी धृतराष्ट्रस्य पुत्राः दुर्योधनानादयस्सर्वे भीष्मो द्रोणस्सूतपुत्रः कर्णश्च तत्पक्षीयैरवनिपालसमूहैस्सर्वैरस्मदीयैरपि कैश्चिद्योधमुख्यैस्सह त्वरमाणा दंष्ट्राकरालानि भया-

---

ता॥तत्पुरुषविवक्षायां तु प्रकृतैकार्थ्यमित्यभिप्रायेणाह—**जगतांनिवासे**ति। देवेशशब्देन 'तमीश्वराणां परमं महेश्वरम्' इति श्रुतिप्रसिद्धसर्वेश्वरेश्वरत्वं यथोपदेशं साक्षात्कृतमिति सूचितमित्यभिप्रायेणाह—**ब्रह्मादीना**मित्यादि । अनेन ब्रह्मादयोऽपि त्वां वीक्षितुं न शक्नुवन्ति, किमुताहं क्षुद्रजन्तुरित्याभिप्रेतमिति व्यञ्जयति । **मांप्रती**ति । किमर्जुने भगवतः क्रोधः? येन प्रसादः प्रार्थ्यत इत्यत्र प्रसादफलमाह—**यथाह**मिति ॥ २५ ॥

'अमी' इत्यादिश्लोकपञ्चकार्थोत्थानहेतुं तस्य पूर्वेण सगतिं चाह—**एव**मिति । अवश्यभावितया—**स्वमनीषित**मित्युक्तम् । स्वमनीषितभारावतरणज्ञापनाय भीषणरूपाविष्कारः; तेन च युद्धप्रोत्साहनं सिध्येदिति भावः । वक्ष्यमाणमर्जुनादेरुपकरणमात्रत्व तद्व्यापाराभावेऽपि शक्यत्वं चाभिप्रेत्य—**स्वेनैव करिष्यमाण**मित्युक्तम्।तदानीं युद्धभूमौ स्थितानां वक्ष्यमाणभगवद्वक्त्रप्रवेशस्याघटिततया इन्द्रजालादिशङ्कां परिहरति—**स च पार्थ** इति। भगवतस्सर्वगोचरस्रष्टृत्वादिसाक्षात्कारे धार्तराष्ट्रादिकतिपयजन्तुसंहारो नात्यद्भुत इत्यभिप्रायेणाह—**तस्मिन्ने**वेति । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति वक्ष्यमाणप्रकारेण सर्वशरीरतया सर्वभूतस्सत्यसङ्कल्पो भगवानेव धार्तराष्ट्रादिविलयेऽपि सर्वविधं कारणम् , लौकिकातीन्द्रियेण रूपेण ग्रसन् भगवानेव प्रधानतमो हेतुः ; दृष्टास्त्वर्जुनशरादयः काकतालीयवन्निमित्तमात्रमिति भावः।**अनागतमपी**त्यादि—लौकिकं हि प्रत्यक्ष वर्तमाननियतमिति भावः । **इदमि**ति—धार्तराष्ट्रादिविशेषविषयमित्यर्थः । यद्वा वर्तिष्यमाणमपि साक्षात्काराद्वर्तमानवद्व्यपदिशतीति भावः । अस्मदीयैरिति पृथगभिधानादवनिपालसङ्घैरित्येतत्परपक्षविषयमिति व्यञ्जनाय—**तत्पक्षीयैरि**त्युक्तम् । दुर्योधनादीना सर्वेषामिव तत्पक्षीयाणामपि सर्वेषां वधस्य युद्धे करिष्यमाणत्वात्—**सर्वैरि**त्युक्तम् । **अस्मदीयैरि**ति वचनात्स्वपक्षस्थानामपि वधस्त्वेषां चावस्थानं विवक्षितम् । परेषु सर्वैरिति विशेषणात्स्वकीयेषु योधमुख्यैरित्युपादानाच्च पाण्डवपक्षीयाणां युद्धे निश्शेषवधाभावः-**कैश्चिदि**त्युक्तः।

---

प्र-पा ॥ १. ६-७ श्वे॥ | २. गी. ११-४० ॥

रा॥नकानि तव वक्त्राणि विनाशाय विशन्ति; तत्र केचिच्चूर्णितैरुत्तमाङ्गैर्दशनान्तरेषु विलग्नास्संदृश्यन्ते ॥ २६, २७ ॥

ता॥शीघ्रं संहरणस्य तत्तदपराधत्वरामूलत्वं त्वरमाणपदेन विवक्षितम् । यद्वा समरसंरम्भादिस्सर्वोऽपि व्यापारस्तेषां स्ववधार्थ इति भावः।'भयानकानि'इति पृथगुक्तत्वात्करालशब्दोऽत्र सान्तरालत्वविकृतत्वपरः, दन्तुरत्वपरो वा, 'करालं दन्तुरे वक्रे' इत्यादि । 'अमी च त्वा' इत्यत्र क्रियानिर्देशाभावेऽपि 'मा भवन्तमनलः पवनो वा' इत्यादिष्विवाध्याहारेणैव क्रियान्वयो गुण एव । यद्वा विशन्तीति वक्ष्यमाणपदमत्रापि पठितव्यम् । अथवा दृष्ट्वा प्रव्यथितान्तरात्मानो धृतिं न विन्दन्तीति विपरिणतानुषङ्गेण वाक्यसमाप्तिः ; न पुनः श्लोकद्वयमप्येकवाक्यतया विवक्षितम् , पूर्वश्लोके त्वेति कर्मतया निर्देशात्परत्र वक्त्राणि त इत्युक्तेः 'अमी सर्वे धृतराष्ट्रस्य पुत्राः ' इति वा भाष्याभिप्रेतः पाठः, 'दुर्योधनादयस्सर्वे'इत्युक्तेः ; अत एव हि विशन्तीत्यनेनैकवाक्यतया व्याख्यातम् । रक्षणार्थम् भगवति प्रवेशव्युदासाय वक्ष्यमाणपरामर्शात्—**विनाशायेत्युक्तम्। तत्र** धार्तराष्ट्रादिष्वित्यर्थः। यद्वा तेषु वक्रेष्वित्यर्थः । केचिद्विनाशाय विशन्ति ; केचित्तु विनष्टास्सन्दृश्यन्ते इत्युक्तं भवति । 'विद्ध्येनमिह वैरिणम्' इत्यस्यानन्तरं यादवप्रकाशीयैरिह केचित्पञ्चश्लोकान्पठन्तीति विलिख्य व्याख्यातम्—'अर्जुन उवाच —भवत्येष कथ कृष्ण कथं चैष विवर्धते । किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥ १ ॥ भगवानुवाच—एष सूक्ष्मः परश्शत्रुर्देहिनामिन्द्रियैस्सह । सुख तत्र इवासीनो मोहयन्पार्थ तिष्ठति॥ २॥ कामक्रोधमयो घोरस्स्तम्भहर्षसमुद्भवः । अहङ्कारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ३ ॥ हर्षमस्य निवर्त्यैष शोकमस्य ददाति च । भयं चास्य करोत्येष मोहयंश्च मुहुर्मुहुः ॥ ४ ॥ स एष कलुषः क्षुद्रश्छिद्रापेक्षी धनञ्जय । रजःप्रवर्तितो मोहान्मानुषाणामुपद्रवः ॥ ५ ॥'इति । अत्र च 'नानारूपैः पुरुषैर्वध्यमाना विशन्ति ते वक्त्रमचिन्त्यरूपम् । यौधिष्ठिरा धार्तराष्ट्राश्च योधाश्शस्त्रैः कृत्ता विविधैस्सर्व एव ॥ दिव्यानि कर्माणि तवाद्भुतानि पूर्वाणि पूर्वेऽप्यृषयस्स्तुवन्ति । नान्योऽस्ति कर्ता जगतस्त्वमेको धाता विधाता च विभुर्भवश्च ॥ तवाद्भुतं किं नु भवेदसह्यं किं वा शक्यं परतः कीर्तयिष्ये । कर्तासि लोकस्य यतस्स्वयं विभो त्वत्तस्सर्वं त्वयि सर्वं त्वमेव ॥ अत्यद्भुतं कर्म न दुष्करं ते कर्मोन्मानं न च विद्यते ते। न ते गुणानां परिमाणमस्ति न तेजसो नापि बलस्य नर्द्धेः' इति।अत्र 'दिव्यानि' इत्यादयश्श्लोका नारायणार्यैरपि लिखिताः । 'प्रजापतिस्त्वं प्रपितामहश्च' इत्यस्यानन्तरमन्यश्च श्लोकः 'अनादिमानप्रतिमप्रभावस्सर्वेश्वरस्सर्वमहाविभूतिः।न हि त्वदन्यः कश्चिदस्तीह देव लोकत्रये दृश्यतेऽचिन्त्यकर्मा' इति । एते श्लोकास्सन्ति नवेति देवो जानाति । पूर्वव्याख्यातृभिरनुदाहृतत्वादध्ययनप्र-

प्र-पा ॥ १ ॥ २. गी. ११-२१ ॥ ३ ॥

शं॥एभ्यो मम पराजयशङ्का या आसीत् सा च अपगता।यतः—अमी च त्वां धृतराष्ट्रस्य पुत्राः दुर्योधनप्रभृतयः— 'त्वरमाणाः त्वां विशन्ति' इति व्यवहितेन सम्बन्धः । सर्वे सहैव सहिताः अवनिपालसङ्घैः अवनिं पृथिवीं पालयन्तीति अवनिपालाः तेषां सङ्घैः, किञ्च—भीष्मो द्रोणः सूतपुत्रः कर्णः तथा असौ सह अस्मदीयैरपि धृष्टद्युम्नप्रभृतिभिः योधमुख्यैः प्रधानैः सह ॥ २६ ॥

किञ्च—वक्त्राणि मुखानि ते तव त्वरमाणाः त्वरायुक्ताः सन्तः विशन्ति—किंविशिष्टानि?—दंष्ट्राकरालानि भयानकानि भयङ्कराणि । किञ्च—केचित् मुखानि प्रविष्टानां-

यथा नदीनां बहवोऽम्बुवेगास्समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८

यथा प्रदीप्तज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९

**रा॥**एते राजलोका बहवो नदीनामम्बुप्रवाहाः समुद्रमिव प्रदीप्तज्वलनमिव च शलभाः तव वक्त्राण्यभिविज्वलन्ति स्वयमेव त्वरमाणा आत्मनाशाय विशन्ति ॥ २८ ॥ २९ ॥

लेलिह्यसे ग्रसमानस्समन्ताल्लोकान् समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३०

---

**ता॥**सिद्ध्यभावाच्च भाष्यकारैरनादृताः । नच गीताशास्त्रस्य श्लोकसङ्ख्या व्यासादिभिरुक्ता। अर्वाचीनास्त्वविश्वसनीया इति ॥ २६ ॥ २७ ॥

'त्वरमाणाः' इत्युक्तस्वव्यापारमूलविनाशत्वे, सर्वेषां चैकस्मिन्नेवोपसहारे तस्य चैकस्य सर्वसंहारानुगुणसामान्याकारेणावस्थानमात्रे च दृष्टान्तद्वय श्लोकद्वयेनोच्यते—**यथेति** । पाण्डवादीना सर्वेषामपि विनाशानभिधानाज्जगत्प्रतपन्तीत्येतावन्मात्रस्य चानन्तरमुक्तेः'नरलोकवीराः'इत्युक्त एवार्थो'लोकाः' इत्युक्त इत्यभिप्रायेण—**एते राजलोका** इति सङ्कलय्य कथितम् । 'अम्बुवेगाः' इत्यत्र वेगशब्दस्यात्र वेगवद्विषयत्वव्यञ्जनाय प्रवाहशब्दः । पतङ्गशब्दस्यानेकार्थस्यात्र शकुन्तादिविषयत्वव्यावर्तनाय —**शलभा** इत्युक्तम् । 'अभिविज्वलन्ति' इति पदम्पूर्वश्लोकस्थमपि समनन्तरश्लोकगतज्वलनदृष्टान्तौपयिकमिति व्यञ्जनाय ज्वलनदृष्टान्तादनन्तरं पठितम्। 'समृद्धवेगाः' इत्येतत्प्रागुक्तत्वरमाणपदसमानार्थमित्यभिप्रेत्य—**स्वयमेवत्वरमाणा** इत्युक्तम्। पतङ्गानां प्रदीपादिषु पक्षवेगादिभिर्नाशकत्वस्यापि सम्भवात्तद्व्यवच्छेदः 'प्रदीप्तज्वलनम्' इति वचनेन विवक्षित इति व्यञ्जनाय—**आत्मनाशायेत्यु**क्तम् । नदीप्रवाहस्य नाशो नाम पृथग्भूतप्रवाहाकारत्यागः ; येन नदीप्रवाहव्यपदेशस्तस्मिन्नेव द्रव्ये निवर्तते ; पतङ्गानान्तु द्रव्यान्तरव्यपदेशयोग्यभस्मताद्यापत्तिरिति प्रकारभेदप्रदर्शनाय दृष्टान्तद्वयाभिधानम् । यद्वा स्वेच्छया निवर्तितुमशक्यमित्येवमभिप्रायः प्रवाहदृष्टान्तः ; तथाविधस्य विनाशस्य स्वेच्छामूलव्यापारहेतुकत्वव्यञ्जनाय पतङ्गदृष्टान्तः । ईश्वरस्यापि च सर्वप्रवेशेऽप्यपरिपूर्णत्वविवक्षया समुद्रनिदर्शनम् , सहसा विध्वंसनाय तु ज्वलनोदाहरणम् ॥ २८ ॥ २९ ॥

---

**शं॥**मध्ये विलग्नाः दशनान्तरेषु दन्तान्तरेषु मांसमिव भक्षितं संदृश्यन्ते चूर्णितैः चूर्णीकृतैः उत्तमाङ्गैः शिरोभिः ॥ २७ ॥

कथं प्रविशन्ति मुखानि इति ? आह—यथा नदीनां स्रवन्तीनां बहवः अनेके अम्बूनां वेगाः त्वराविशेषाः समुद्रमेव अभिमुखाः द्रवन्ति विशन्ति , तथा तद्वत् तव अमी भीष्मादयः नरलोकवीराः मनुष्यलोके शूराः विशन्ति वक्त्राणि अभिविज्वलन्ति प्रकाशमानानि ॥ २८ ॥

ते किमर्थं प्रविशन्ति कथं च इति ? आह—समृद्धवेगाः समृद्धः उद्भूतः वेगः गतिः येषां ते समृद्धवेगाः यथा प्रदीप्तज्वलनम् अग्निं पतङ्गाः पक्षिणः विशन्ति नाशाय, तथैव नाशाय , विशन्ति लोकाः प्राणिनः तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

रा॥राजलोकान् समग्रान् ज्वलद्भिर्वदनैर्ग्रसमानः कोपवेगेन तद्रुधिरावसिक्तमोष्ठपुटादिकं लेलिह्यसे-पुनःपुनर्लेहनं करोषि । तवातिघोरा भासो रश्मयः तेजोभिः स्वकीयैः प्रकाशैर्जगत्समग्रमापूर्य प्रतपन्ति ॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥ ३१

'दर्शयात्मानमव्ययम्' इति तवैश्वर्यं निरङ्कुशं साक्षात्कर्तुं प्रार्थितेन भवता निरङ्कुशमैश्वर्यं दर्शयताऽतिघोररूपमिदमाविष्कृतम्। अतिघोररूपः को भवान् किं कर्तुं प्रवृत्त इति भवन्तं ज्ञातुमिच्छामि, तवाभिप्रेतां प्रवृत्तिं न जानामि; एतदाख्याहि मे; नमोऽ-

ता॥ईश्वरः किं संहरणेऽत्यन्तनिर्व्यापारः, येन 'स्वयमेवत्वरमाणाः' इत्युच्यत इत्यस्योत्तरं—'लेलिह्यसे' इति श्लोकेनोच्यते । संहरणादेर्निदान तत्तच्चेतनाना व्यापारविशेषः ; तत्तदुपाधिककोपादिविशिष्टस्तु भगवान् संहृत्यादिकं करोतीति भावः । राजलोकानिति पूर्ववद्व्याख्यम् । समग्रान्-युद्धाय समवेतानित्यर्थः । 'लेलिह्यसे' इत्यस्य सञ्जिहीर्षानुभावत्वव्यञ्जनाय--**कोपवेगेनेत्युक्तम्** । **तद्रुधिरे**त्यादिना ग्रसनलेहनाभ्याम् अर्थसिद्धमुच्यते । क्रियासमभिहारे हि यङो विधानम् ; पौनःपुन्यं भृशार्थो वा क्रियासमभिहार इत्यभिप्रायेणाह—**पुन.पुनर्लेहनमिति** । भास्तेजश्शब्दयोः पौनरुक्त्यशङ्काव्युदासाय—**रश्मय** इति, **स्वकीयैः प्रकाशै**रितिचोक्तम्। **समग्रं**-सर्वमित्यर्थः। **प्रतपन्ति**-सन्तापयन्ति, ग्रसनार्थं पचन्ति - इति भावः । यद्वा ब्रह्मादीनामपि पश्यता दुस्सहत्वमात्रे तात्पर्यम् ॥ ३० ॥

एवमत्यन्तघोराकारदर्शनं सोढुमशक्तो धनञ्जयस्स्वसर्वैश्वर्यप्रकाशनप्रवृत्तस्य तादृशघोररूपाविष्कारे तात्पर्यकथन पुनः प्रसन्नरूपपरिग्रहार्थं प्रसादं चापेक्षते—'आख्याहि' इति श्लोकेन । भक्तस्य मे भयानकरूपप्रदर्शने कोऽभिप्राय इत्यज्ञानात्प्रश्न इत्याह—**दर्शये**त्यादिना।उपदेशसाक्षात्काराभ्या भगवतः प्रतिपन्नत्वात्'को भवान्' इति प्रश्नो न स्वरूपसंज्ञादिविषयः, 'नहि प्रजानामि तव प्रवृत्तिम्' इति प्रवृत्तिप्रश्नाभिप्रायेणाज्ञाताशश्चात्रैव निर्दिश्यत इति तद्विषयजिज्ञासयैवायं प्रश्नो युक्त इत्यभिप्रायेण—**किं कर्तुं प्रवृत्त** इत्युक्तम् । कृष्णरूपप्रच्छन्नागतदैत्याभिव्यक्तस्वरूपान्तरादिशङ्कयायं प्रश्न इति कैश्चिदुक्तमेतेन निरस्तम् । तदानीं परिदृश्यमानविग्रहादिप्रवृत्तिमात्रव्युदासाय—**अभिप्रेता**मित्युक्तम्।

श॥त्वं पुनः—लेलिह्यसे आस्वादयसि ग्रसमानः अन्तः प्रवेशयन् समन्तात् समन्ततः लोकान् समग्रान् समस्तान् वदनैः ज्वलद्भिः दीप्यमानैः तेजोभिः आपूर्य संव्याप्य जगत् समग्रं सह अग्रेण समस्तम् इत्येतत्।किञ्च—भासः दीप्तयः तव उग्राः क्रूराः प्रतपन्ति संतापं कुर्वन्ति हे विष्णो व्यापनशील ॥ ३० ॥

यत एवम् उग्रस्वभावः,अतः—आख्याहि कथय मे मह्यं कः भवान् एवम् उग्ररूपः उग्राकारः । नमः अस्तु ते तुभ्यम् , हे देववर देवानां प्रधान , प्रसीद प्रसादं कुरु।

आ॥धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति, यथा कश्चित्कंचिन्नामादिकं जा-

ज॥स्वरूपमेवाज्ञात्वा तद्धर्मान्वाऽयं पृच्छतीत्यन्यथा प्रतीतिनिरासायार्थमाह—**धर्मान्तरे**ति । तर्हि किं धर्मान्तरो भवानिति प्रश्नेन भाव्यं, को भवानिति तु न युज्यत इत्यत आह—**यथे**ति । अन्येषा व्यवहारान्नाम,प्रत्यक्षेण रूपादिकं च जानन्नपि जातिज्ञानार्थं यथाकश्चित्कंचित्कस्त्वमित्येवं पृच्छति;तथाऽर्जुनो भगवन्तं तद्धर्मांश्च जानन्नपि धर्मान्तरज्ञानार्थं को भवानित्येव पृच्छतीत्यर्थः । प्रश्नव्याख्यान-

रा॥स्तु ते देववर प्रसीद—नमस्तेऽस्तु सर्वेश्वर, एवं कर्तुमनेनाभिप्रायेणेदं संहर्तृ रूपमाविष्कृतमित्युक्त्वा प्रसन्नरूपश्च भव ॥ ३१ ॥

आश्रितवात्सल्यातिरेकेण विश्वैश्वर्यं दर्शयतो भवतो घोररूपाविष्कारे कोऽभिप्राय इति पृष्टो भगवान् पार्थसारथिस्स्वाभिप्रायमाह—पार्थोद्योगेन विनापि धार्तराष्ट्रप्रमुखमशेषं राजलोकं निहन्तुमहमेव प्रवृत्त इति ज्ञापनाय मम घोररूपाविष्कारः, तज्ज्ञापनं च पार्थमुद्योजयितुम्—इति—

**श्रीभगवानुवाच—**

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२**

ता॥देववरशब्देन ब्रह्मरुद्राद्यपेक्षयापि ममुत्कृष्टत्व वदतात्यन्तोत्कृष्टविषये स्वरसभावित्वं नमस्कारस्य द्योत्यत इत्यभिप्रायेण—**सर्वेश्वर**शब्दः। यथोक्तमहिर्बुध्न्येन 'नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः' इति । श्लोकस्य पिण्डितार्थमाह—**एवं कर्तुमि**ति । 'प्रसीद' इत्यनेन फलितमुच्यते—**प्रसन्नरूपश्चे**ति।एतदेव हि पश्चात्'तदेव मे दर्शय रूपम्'इत्यादौ प्रपञ्चयिष्यते ॥ ३१ ॥

'कालोऽस्मि' इत्यादिश्लोकत्रयस्यार्थं संकलय्यादौ संगमयति—**आश्रिते**त्यादिना। **आश्रितवात्सल्यातिरेकेणे**त्यनेन घोररूपाविष्कारानौचित्यं द्योत्यते । 'एवं कर्तुमनेनाभिप्रायेण' इति निर्दिष्टयोर्निर्दिश्रेणिकाक्रमेणोत्तरं ददाति—**पार्थोद्योगेने**त्यादिना । कालशब्दस्यात्र कलामुहूर्तादिमयकालद्रव्यमात्रपरत्वे भगवता सामानाधिकरण्यायोगादिन्द्रप्राणाधिकरणन्यायेन तदन्तर्यामिविषयत्वं वा, आकाशप्राणाधिकरणन्यायेन यौगिकार्थत्व वा, सृष्टिस्थितिकालव्यावृत्तसंहर्तृकालाभिमानित्वविशिष्टभगवत्स्वरूपानुसंधानासाधारणं ध्येयविग्रहविशेषनिष्ठतापरत्वं वा स्वीकार्यम् । तत्र त्रिष्वपि कालशब्दस्य

प्र-पा ॥ १. अहि-संहि. ५२-७ ॥

शं॥विज्ञातुं विशेषेण ज्ञातुम् इच्छामि भवन्तम् आदौ भवम् आद्यं;नहि यस्मात् प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥ ३१ ॥

कालः अस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धः प्रवृद्धि

आ॥नन्वपि जातिज्ञानार्थं पृच्छति कस्त्वमिति। यदि तमेव न जानाति तर्हि विष्णावित्येव संबोधनं न स्यात्, त्वमक्षरमित्यादि च ॥ ३१ ॥

कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची । 'कल बन्धने'। 'कल-

ज॥स्य वर्तमानत्वाद्वर्तमाननिर्देशः।उग्रं रूपं दृष्ट्वा रुद्रो वा यमो वाऽयमिति स्वरूप एव संदिहानस्य प्रश्नः किं न स्यादित्यत आह—**यदी**ति । तत्स्वरूपमेवेत्यर्थः। 'भासस्तवोग्राः प्रतपन्ति विष्णो' इति। तर्हि ननु धर्मविषयोऽयं प्रश्नोऽस्तु, ततश्चान्तरशब्दो न युक्त इत्यत आह—**त्वमि**ति । यदि भगवद्धर्मान्न जानीयात्तर्हि 'त्वमक्षरं परमम्' इत्यादिवर्णनं न स्यात्। अतो भगवन्तं तद्धर्मांश्चाक्षरत्वादीन् ज्ञात्वा तदन्यधर्मज्ञानार्थमेव प्रश्न इत्येवमुक्तमित्यर्थः ॥ ३१ ॥

एवं तर्हि 'कालोऽस्मि'इत्युत्तरमयुक्तं धर्मानुक्तेरित्यत आह—**काले**ति । धर्मविशिष्टभगवद्वाचीत्यर्थः । कुत एतदित्यत आह—**कले**ति। यथा कामधेनुः सर्वार्थान् ददाति, तथाऽयमपि धातुः स-

रा॥कलयति गणयतीति कालः; सर्वेषां धार्त्तराष्ट्रप्रमुखानामायुरवसानं गणयन्नहं तत्क्षयकृत् घोररूपेण प्रवृद्धो राजलोकान् समाहर्तुमाभिमुख्येन संहर्तुमिह प्रवृत्तोऽस्मि; अतो मत्संकल्पादेव त्वामृतेऽपि त्वदुद्योगादृतेऽपि एते धार्त्तराष्ट्रप्रमुखास्तव प्रत्यनी-

ता॥यौगिकोऽर्थः प्रतीयमानः प्रकृतापेक्षितत्वादपरित्याज्य इत्यभिप्रायेणाह—कलयतीति। सम्बन्धाद्यर्थादपि गणनस्यात्र संहरणानुगुणत्वात्—गणयतीत्युक्तम्। प्रकृतविशेषपरतया योजयति—सर्वेषामिति। लोकशब्दस्य राजलोकशब्देन व्याख्यानं पूर्ववत्। 'प्रवृद्ध' इति रूपमहत्त्वं विवक्षितमित्याह—घोररूपेण प्रवृद्ध इति। यद्वा ग्रसनोन्मुखावस्थ इति भावः। 'समाहर्तुम्' इति पदेन समुदायकरणादिकं न विवक्षितम्, प्रस्तुतासंगतत्वात्; नापि संहरणमात्रं 'लोकक्षयकृत्' इत्यनेन पुनरुक्तिप्रसङ्गात्; अतस्संहरणमेव मध्यनिविष्टेनाप्युपसर्गान्तरेण विशेष्यत इत्याह—आभिमुख्येनेति। अपरोक्षत इत्यर्थः। भृत्यैश्शत्रुनिरसनवन्न परोक्षस्संहारोऽयमिति भावः। आभिमुख्यमात्रमेव वा संहारहेतुरिति भावः। 'मनसैव जगत्सृष्टिं संहारं च करोति यः। तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः' इत्याद्यनुसारेणाह—अतो मत्संकल्पादेवेति। निमित्तभूतव्याप्रियमाणाकारस्त्वमिति विवक्षित इत्यभिप्रायेण—त्वदुद्योगमृतेऽपीत्युक्तम्। न भविष्यन्तीत्युक्ते नोत्पत्स्यन्त इति प्रतीतिस्स्यादिति तद्व्यवच्छेदायोत्तरका-

प्र-पा॥ १. वि. पु. ५-२२-१५॥

शां॥गतः। यदर्थं प्रवृत्तः तत् शृणु—लोकान् समाहर्तुं संहर्तुम् इह अस्मिन् काले प्रवृत्तः। ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे, येभ्यः तव आ-

आ॥च्छेदने'। 'कल ज्ञाने'। 'कलकामधेनुः' इति पठन्ति। प्रसिद्धश्च स शब्दो भगवति। 'नियतं कालपाशेन बद्धं शक्र विकत्थसे। अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः। बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा' इति मोक्षधर्मे। विष्णुना बद्धो बलिर्वक्ति 'विष्णौ चाधीश्वरे चित्तं धारयन्कालविग्रहे' इति भागवते। प्रवृद्धः परिपूर्णोऽनादिर्वा 'ऋतं च सत्यंचाभीद्धात्' इति हि श्रुतिः; 'एतन्महद्भूतम्' इति च, 'प्र विष्णुरस्तु तवसस्तवीयांस्त्वेषँ ह्यस्य स्थविरस्य नाम' इति च। न तु वर्धनम् 'नासौ जजान न मरिष्यति नैधतेऽसौ' इति हि भागवते। 'यस्य दिव्यं हि तद्रूपं हीयते वर्धते न च' इति मोक्षधर्मे। न कर्मणेति तु कर्मणापि न, किमु स्वयमिति। लोकान्समाहर्तुमिह विशेषेण

ज॥वीर्यवाचीत्यर्थः। तथाचास्मादण् कर्तरि घञ् वा। जगदिति योग्यतया सम्बध्यते। भवत्वेवं बन्धनादिधर्मवद्वाची; भगवद्वाची तु कुतोऽन्यत्र रूढत्वादित्यत आह—प्रसिद्धश्चेति। बद्धं मा प्रति विकत्थसे। आत्मानं तु श्लाघसे। कः कालः। अयं कथम्। श्यामः प्रजा हरति। बद्ध्वा तिष्ठति रौद्रश्चेति। अत्र कथं विष्णुवाचित्वनिश्चय इत्यत आह—विष्णुनेति। कालनामा विग्रहो यस्यासौ तथोक्तः। प्रवृद्ध इति कादाचित्की वृद्धिः प्रतीयते, अत आह—प्रवृद्ध इति। वृद्धिर्धात्वर्थः। सा च प्रशब्देन देशतः कालतश्च सदातनी विवक्षितेति भावः। अनादिरिति नित्यस्याप्युपलक्षणम्। भूताधिकारे विहितस्य क्तस्य कुतः सार्वकालिकत्वम्?; प्रयोगदर्शनादिति भावेनाह—ऋतंचेति। इद्धाद्भूतमितिवदित्यर्थः। अत्रापि सार्वकालिकत्वानिश्चय इत्यतो दीप्तेः सत्तायाश्च सदातनत्वे श्रुतिसद्भावादित्याह—प्रविष्णुरिति। विष्णुः, तवसो-देशकालपरिच्छिन्नात्सूर्यादेस्तेजसः, तवीयान् अतिशयिततेजोरूपो भवति; अत एव ह्यस्य स्थविरस्य-अनादिकालीनस्य त्वेषमिति नाम; असाधारण्येन हि

रा॥केषु येऽवस्थिता योधाः,ते सर्वे न भविष्यन्ति-विनङ्क्ष्यन्ति ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३**

तस्मात्त्वं तान् प्रति युद्धायोत्तिष्ठ,तान् शत्रून् जित्वा यशो लभस्व; धर्म्यं राज्यं च समृद्धं भुङ्क्ष्व ; मयैवैते कृतापराधाः पूर्वमेव निहताः-हनने विनियुक्ताः ; त्वं तु तेषां हनने निमित्तमात्रं भव;मया हन्यमानानां शस्त्रादिस्थानीयो भव,सव्यसाचिन्;'षच सम-

ता॥लसत्तानिषेधपरतामाह—**विनङ्क्ष्यन्ती**ति ॥ ३२ ॥

यदि मदुद्योगमृतेऽपि धार्तराष्ट्रादयो न भविष्यन्ति; तर्हि किमर्थं मामुद्योजयसीत्यत्रोत्तरं—'तस्मात्त्वम्' इति श्लोकः । मद्भक्तस्य ते जययशोराज्यादिलाभार्थं त्वदुद्योजनमिति परिहाराशयः । 'जित्वा शत्रून्' इति यशोराज्ययोस्साधारणहेतुः । वैषम्यनैर्घृण्यपरिहारेण जिघांसाहेतुप्रदर्शनार्थं—**कृतापराधा**इत्युक्तम् । ननु पूर्वमेव निहता इति प्रत्यक्षविरुद्धम् ; तथा सति तद्धननार्थं निमित्तमात्र भवेत्युद्योजनं च व्यर्थमित्यत्राह—**हनने विनियुक्ता**इति । हनने विनियोगस्तदर्थसंकल्पः ; हन्तव्यत्वेन संकल्पिता इत्यर्थः । सङ्कल्पस्यामोघत्वात्फलसिद्ध्यविनाभावेन निहतत्वोक्तिः, एवमपि निष्ठार्थो घटते ; ईश्वरसंकल्पप्रभृति फलपर्यन्ते क्रियासमुदाये सकल्पांशस्य निष्पन्नत्वादेकदेशे च समुदायशब्दप्रयोगोपपत्तेस्स्थालीकाष्ठादिव्यापारेषु प्रत्येकं पचतिप्रयोगवत् । अत्राशंसायामादिकर्मणि क्त इत्येके 'निमित्तमात्रम्' इत्युपादानत्वनिषेधः प्रतीयते;तत्र च प्रसङ्गाभावात्प्रतिषेधोऽपि नोचित इत्यत्राह—**मया हन्यमानाना**मिति । मयैवोपकरणीकृतेन तत्प्रतिपत्तिमता भवता पापनैर्घृण्यपराजयादिशङ्का न कार्येति भावः । मात्रशब्दः प्राधान्यव्यवच्छेदार्थ इत्यभिप्रायेणाह—**शस्त्रादिस्थानीय**इति । सव्यसाचिपदेन

शं॥शङ्का,ये अवस्थिताः प्रत्यनीकेषु अनीकमनीकं प्रति प्रतिपक्षभूतेषु अनीकेषु योधाः योद्धारः ॥ ३२ ॥

यस्मात् एवम्—तस्मात् त्वम् उत्तिष्ठ 'भीष्मप्रभृतयः अतिरथाः अवस्थिताः, अजेयाः देवैरपि, अर्जुनेन जिताः' इति यशः लभस्व; केवलं पुण्यैः हि तत् प्राप्यते । जि-

आ॥प्रवृत्तः । भ्रात्रादींश्च ऋते इत्यपिशब्दः । प्रत्यनीकत्वं तु परस्परतया । सर्वेऽपि न

जा॥व्यपदेशा भवन्तीत्यर्थः । अस्त्वेवं तथाऽपि प्रागल्पस्सन्निदानीं वृद्धिं गत इत्यत्रार्थः किं न स्यादित्यत आह—**न त्विति**। तुशब्दो विशेषणार्थः। विक्रियारूपं वर्धन प्रवृद्धशब्दप्रवृत्तिनिमित्तं न भवति । भगवति भावविकाराणा प्रतिषिद्धत्वात्।भगवतो विक्रियारूपवृद्ध्यभावेऽपि तद्रूपस्य भवत्विति, तत्राह—**यस्येति** । ननु 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतौ कर्मनिमित्तवृद्धिप्रतिषेधनात् वृद्धिमात्रमस्तीति ज्ञायते, अन्यथा विशेषणवैयर्थ्यात् । तथाच सप्रतिपक्षमुक्तवाक्यमित्यत आह—**नेति** । न कर्मणेति विशेषनिषेधस्तु वृद्धिलक्षणविक्रियाकारणत्वेन संभावितेन कर्मणाऽपि यदा न वर्धते, तदा स्वयंकर्मणा विना न वर्धत इति किमु वक्तव्यमिति वृद्धिलक्षणविक्रियाकारणत्वमात्रनिषेधाय कैमुत्यप्रदर्शनमित्यन्यथोपपन्नमित्यर्थः । ननु सर्वत्र भगवानेव लोकाना संहर्ता तस्मादिहेति व्यर्थमित्यत आह—**लोका**निति । युगपद्बहुप्रत्यक्षत एवेति विशेषेण युधिष्ठिरादीनामवशिष्टत्वात्कथं त्वामृते इत्येवोक्तमित्यत आह—**भ्रात्रादींश्चे**ति। अपिशब्दो द्योतयतीति शेषः।असत्प्रतिकूलेष्वनीकेषु अवस्थिता योधा न भविष्यन्तीत्युक्ते का पाण्डवादीना प्राप्तिः,येन 'ऋतेऽपि त्वा'इत्युच्यत इत्यत आह—**प्रत्यनीकत्वमि**ति। सेनाद्वयस्यापीति शेषः । कुत एवं व्याख्यानमित्यत आह—**सर्वे**ति । सेनाद्वयगता अपीत्यर्थः। प्रत्यनी-

रा॥वाये' सव्येन शरसचनशीलस्सव्यसाची; सव्येनापि करेण शरसमवायकरः,करद्वयेन योद्धुं समर्थ इत्यर्थः ॥ ३३ ॥

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधमुख्यान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठाः युध्यस्व जेतासि रणे सपत्नान् ॥ ३४**

द्रोणभीष्मकर्णादीन् कृतापराधतया मयैव हनने विनियुक्तान्-त्वं जहि त्वं हन्याः;एतान् गुरून् बन्धूंश्चान्यानपि भोगसक्तान् कथं हनिष्यामीति मा व्यथिष्ठाः-तानुद्दिश्य धर्माधर्मभयेन बन्धुस्नेहेन कारुण्येन च मा व्यथां कृथाः;यतस्ते कृतापराधा मयैव हनने विनि-

ता॥संबोधनं युद्धौपयिकासाधारणातिशयद्योतनार्थमित्यभिप्रायेण व्युत्पादयति—षचसमवाय इत्यादिना । सव्यशब्दस्य करणार्थतां धातोः प्रकृतोचितं कर्मविशेषं ताच्छील्यार्थतां च प्रत्ययस्य दर्शयति—सव्येनेति । समवायोऽत्र शरसंधानम् । परिसंख्यान्यायात् दक्षिणेन शरसमवायं कर्तुमशक्त इति शङ्कामपनयन् सव्यशब्दस्य पादादिसाधारणस्य प्रस्तुतौपयिकं विशेष्यमप्याह—सव्येनापि करेणेति । अयोगव्यवच्छेदार्थे सव्योपादानम् , न त्वन्ययोगव्यवच्छेदार्थमिति भावः । फलितमाह—करद्वयेनेति । भूभारनिर्हरणार्थे तवेदृशं सामर्थ्यं मया संकल्पितमिति समर्थशब्दाभिप्रायः ॥ ३३ ॥

अर्जुनस्यास्थानस्नेहकारुण्यधर्माधर्मभयमूलं 'कथं भीष्मम्' इत्यादिकं साक्षात्प्रतिवक्ति—द्रोणंचेति । 'मा व्यथिष्ठाः' इत्यत्र पूजाद्यर्हान् मन्वान इति वाक्यशेषाभिप्रायेणाह—गुरूनिति । गुरून् बन्धून् भोगसक्तानिति पदैर्धर्माधर्मभयबन्धुस्नेहकारुण्यानां हेतुप्रदर्शनम् । अत्र च धर्माधर्मभयादिव्यर्थताहेतुरित्याह—तानुद्दिश्येति । धर्माधर्मभयादिकं तु पृष्ठतः करोमि; द्रोणादयो हि तैस्तैर्हेतुभिर्दुर्जयाश्शत्रवः; युद्धसिद्धिश्च चञ्चलेति भीरुरस्मीति यदि ब्रवीषि, तर्हि मा भैषीरित्यभिप्रायेण—'मा व्यथिष्ठाः' 'युध्यस्व'इत्यादिकमुच्यत इत्याह—यतस्त इति। 'जेतासि'इत्यत्र द्वितीयया

शां॥त्वा शत्रून् दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धम् असपत्नम् अकण्टकम् । मया एव एते निहताः प्राणैः वियोजिताः पूर्वमेव । निमित्तमात्रं भव त्वं हे सव्यसाचिन्—वामेन हस्तेन शराणां क्षेप्ता सव्यसाची इति उच्यते—अर्जुन ॥ ३३ ॥

द्रोणं च—येषुयेषु योधेषु अर्जुनस्य आशङ्का तांस्तान् व्यपदिशति भगवान् , मया हतानिति। तत्र द्रोणभीष्मयोः तावत् प्रसिद्धम् आशङ्काकारणम् । द्रोणस्तु धनुर्वेदाचार्यः दिव्यास्त्रसम्पन्नः, आत्मनश्च विशेषतः गुरुः इष्टः । भीष्मश्च स्वच्छन्दमृत्युः दिव्यास्त्रसम्पन्नश्च परशुरामेण द्वन्द्वयुद्धम् अगमत्, न च पराजितः। तथा जयद्रथः, यस्य पिता तपः चरति 'मम पुत्रस्य शिरः भूमौ निपातयिष्यति यः, तस्यापि शिरः पतिष्यति' इति। कर्णोऽपि वासवदत्तया अमोघया शक्त्या सम्पन्नः सूर्यपुत्रः अयं कानीनः य

आ॥भविष्यन्ति । अक्षौहिण्यादिभेदेन बहुवचनं युक्तम् ॥ ३२, ३३ ॥

योऽस्य शिरश्छिन्नं भूमौ पातयति, तच्छिरो भेत्स्यतीति तत्पितुर्वराज्जयद्रथोऽ-

ज॥केष्विति बहुवचनं कथमित्यत आह—अक्षौहिणीति । भेदेन बहुत्वेन ॥ ३२ ॥ ३३ ॥

'यद्वा जयेम यदि वा नो जयेयुः' इत्यस्य संदेहेऽपि प्रवृत्तिर्युक्ता, पक्षद्वयेऽपि फललाभादिति 'हतो वा'इयुत्तरमुक्तम्। इदानीं तव पराजयशङ्काऽपि नास्तीत्युच्यते—द्रोणंचेति। तत्र द्रोणस्य धनुर्विद्याचार्यत्वेन भीष्मस्य स्वच्छन्दमृत्युत्वेन चाशङ्काविषयत्वाद्युक्तं योधवीरसमुदायात् पृथक्कृत्य स्वशब्देन ग्रहणम् । जयद्रथस्य कर्णस्य च कुत इत्यत आह—योऽस्येति । अस्य जयद्रथस्य तच्छिरस्तस्य पात-

रा॥युक्ताः; अतो निर्विशङ्को युध्यस्व,रणे सपत्नान् जेतासि-जेष्यसि; नैतेषां वधे नृशंसतागन्धः, अपितु जय एव लभ्यत इत्यर्थः ॥ ३४ ॥

सञ्जय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५

एतदाश्रितवात्सल्यजलधेः केशवस्य वचनं श्रुत्वा अर्जुनस्तस्मै नमस्कृत्य भीतभीतो भूयस्तं प्रणम्य कृताञ्जलिर्वेपमानः किरीटी सगद्गदमाह ॥ ३५ ॥

ता॥तृजन्तायोगात्तृनश्च भविष्यदर्थत्वासिद्धेर्लुडन्ततयैकपद्यम्; तत्रानद्यतनविवक्षापि नास्तीत्यभिप्रायेणाह—जेष्यसीति।शङ्कितानिष्टनिवृत्ताविष्टप्राप्तौ च श्लोकतात्पर्यमित्याह—नैतेषामिति।अर्जुनस्यापजयशङ्काभावात्'मा व्यथिष्ठाः'इत्यादिकमारम्भोक्तनृशंसत्वशङ्कापरिहारार्थमिति भावः। अनुकूलेषु ह्यानृशंस्यमित्यभिप्रायेण सपत्नशब्द इति चाभिप्रेतम् ॥ ३४ ॥

'एतच्छ्रुत्वा' इति श्लोके नमस्कारद्वयहेतुं विप्रकीर्णानां पदानामुचितान्वयप्रकारं च दर्शयति—

एतदाश्रितेति। वचनश्रवणमात्रादवशस्य प्रथमो नमस्कारः, भीतभीतस्य वक्ष्यमाणवाक्यप्रारम्भार्थौ पुनःप्रणामाञ्जली, अपेक्षामात्रेण स्वविग्रहादिप्रकाशनवत्स्वाभिप्रायस्याविष्कारमपि वात्सल्येनैव कृतवानित्यभिप्रायेणाह—आश्रितवात्सल्यजलधेरिति । ब्रह्मेशरक्षकत्वादिभिः केशवः; आश्रितसंसारकर्षणादिभिः कृष्णः । भगवच्चरणारविन्दवन्दनेन किरीटजुष्टं शिरः कृतार्थतां गतमित्यभिप्रायेणात्र किरीटिपदप्रयोगः । 'भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्' इति हि महर्षिणोक्तम् ॥३५ ॥

प्र-पा ॥ १ ॥

शां॥नः, अतः तं नाम्नैव निर्दिशति । मया हतान् त्वं जहि निमित्तमात्रेण। मा व्यथिष्ठाः तेभ्यः भयं मा कार्षीः । युध्यस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥

एतत् श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्वा, भूयः पुनः एव आह उक्तवान् कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात्, स्नेहाविष्टस्य च हर्षोद्भवात्, अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः; तेन वाचः अपाटवं मन्दशब्दत्वं यत् तत् गद्गदं तेन सह वर्तत इति। 'सगद्गदं वचनम् आह' इति वचनक्रियाविशेषणम् एतत् । भीतभीतः पुनःपुनः भयाविष्टचेताः सन् प्रणम्य प्रह्वः भूत्वा, 'आह' इति व्यवहितेन सम्बन्धः ॥

अत्र अवसरे सञ्जयवचनं साभिप्रायम् । कथं;द्रोणादिषु अर्जुनेन हतेषु अजय्येषु चतुर्षु, निराश्रयः दुर्योधनः निहतः एव इति मत्वा धृतराष्ट्रः जयं प्रति निराशः सन् सन्धिं करिष्यति,ततः शान्तिः उभयेषां भविष्यति इति । तदपि न अश्रौषीत् धृतराष्ट्रः,

आ॥पि विशेषेणोक्तः । 'प्रवरा वासवी शक्तिः' इति कर्णः ॥ ३४ ॥

जा॥पितुः शिरो भेत्स्यति भेत्स्यते। तत्पितुर्जयद्रथपितुः। शक्तिरस्ति कर्णस्येति शेषः। कर्णो विशेषेणोक्त इति वर्तते ॥ ३४ ॥

**स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६**

रा॥स्थाने युक्तम् ; यदेतद्युद्धदिदृक्षयागतमशेषदेवगन्धर्वसिद्धयक्षविद्याधरकिन्नरकिंपुरुषादिकं जगत्त्वत्प्रसादात् त्वां सर्वेश्वरमवलोक्य तव प्रकीर्त्या सर्वं प्रहृष्यति, अनुरज्यते च ; यच्च त्वामवलोक्य रक्षांसि भीतानि सर्वा दिशः प्रद्रवन्ति; सर्वे सिद्धसंघा

ता॥'स्थाने हृषीकेश' इतिश्लोकश्श्रीविष्णुपञ्जरादिषु विनियुक्तो मन्त्रः प्रसिद्धः।'स्थाने' इत्यस्य अधिकरणार्थताप्रतीतिव्युदासायाह—**युक्त**मिति । अत्र जगच्छब्दविवक्षितार्थे तस्य प्रकीर्तिमूलप्रहर्षनिदानं च व्यनक्ति—**यदेत**दिति। प्रहृष्यतीत्यनेन प्रियातिथिलाभादाविवाक्षिमनःप्रीतिर्विवक्षिता। 'अनुरज्यते' इति तु पित्रादिषुपुत्रादेरिव स्नेह इत्यपुनरुक्तिः।**त्वामवलोक्ये**त्यनेन रक्षसां भीतिहेतुप्रदर्शनम्। प्रकीर्त्येत्यस्यानुषङ्गस्तु विरुद्धत्वादयुक्तः। अन्यकर्तृकप्रकीर्त्येति तु कल्पनागौरवम्। अवलोकनं तु 'वीक्षन्ते त्वा' इति देवासुरादीनां सर्वेषामुक्तमिति भावः।सिद्धशब्दोऽत्रानुकूलवर्गप्रदर्शनार्थ इत्यभिप्रायेण—

शं॥भवितव्यवशात् ॥ ३५ ॥

स्थाने युक्तम् । किं तत् ? तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन ; हृषीकेश यत् जगत् प्रहृष्यति प्रहर्षम् उपैति, तत् स्थाने युक्तम् इत्यर्थः । अथवा—विषयविशेषणं स्थाने इति । युक्तः हर्षादिविषयः भगवान् , यतः ईश्वरः सर्वात्मा सर्वभूतसुहृच्च इति । तथा अनुरज्यते अनुरागं च उपैति; तच्च विषये इति व्याख्येयम् । किञ्च—रक्षांसि भीतानि भयाविष्टानि दिशः द्रवन्ति गच्छन्ति, तच्च स्थाने विषये । सर्वे नमस्यन्ति नमस्कारं कुर्वन्ति च सिद्धसङ्घाः सिद्धानां समुदायाः कपिलादीनाम्, तच्च स्थाने इति ॥

आ॥यदेतद्वक्ष्यमाणं तत् स्थाने युक्तमेवेत्यर्थः। अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणादेर्हृषीकेशः । केशत्वं त्वंशूनां तन्नियतत्वादेः । प्रमाणं तु 'शशिसूर्यनेत्रम्' इत्यत्रोक्तम् । हृषीकाणामिन्द्रियाणामीशत्वाच्च । तेषां विशेषतः ईशत्वं च—'यः प्राणे तिष्ठन्' इत्यादौ प्रसिद्धम् 'न मे हृषीकाणि पतन्त्यसत्पथे' इत्यादिप्रयोगाच्च । इतरोऽर्थो मोक्षधर्मे सिद्धः 'सूर्याचन्द्रमसोः शश्वत्केशैर्मे अंशुसंज्ञितैः । बोधयत्स्वापयच्चैव जगदुत्पद्यते पृ-

ज॥'स्थान इत्येतत् युक्तम्' इत्यर्थेऽव्ययं चास्ति, अस्ति च सप्तम्यन्तं पदम्, तत्किमत्राभिप्रेतम्, कथं चास्यान्वय इत्यत आह—**यदि**ति। स्थाने विषये एवेति वा बहुमानस्थाने त्वयीति वा योजनायां साध्याहारत्वमिति भावः । हृषीकेशशब्दस्य प्रकृतोपयुक्तमपूर्वमर्थमाह—**अग्नी**ति । अत्राद्येनादिशब्देन सूर्यो गृह्यते । द्वितीयेन बोधनस्थापने । अग्न्याद्यंशुभिः स्वकेशैरिति शेषः । जगद्धर्षणादेरिति बोधनस्थापनाभ्यां जगद्धर्षणादित्यर्थः । सूर्याद्यंशूनां कथं भगवत्केशत्वमित्यत आह—**केशत्वंत्वि**ति । तन्नियतत्वतज्जन्यत्वादिना तादात्म्योक्तिरित्यत्र किं प्रमाणमित्यत आह—**प्रमाणंत्वि**ति।**इत्यत्र** एतद्व्याख्यानावसरे। अनेन वक्ष्यमाणं वाक्यं विवृतं भवति । तथाचाग्न्यादिषु स्थित्वा स्वकेशनियतैस्तदंशुभिर्जगतो बोधनस्थापनाभ्यां हर्षणादित्युक्तं भवति । हृष्यतेः कीप्रत्ययः । हृष्यो हर्षहेतवः केशा अस्येति हृषीकेशः । नानेन प्रसिद्धोऽर्थस्त्यज्यत इति भावेन तमप्याह—**हृषीकाणा**मिति । ननु जगदीशस्य विशेषत इन्द्रियेशत्वं कथमित्यत आह—**तेषा**मिति । पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरकत्वेनेति भावः । हृषीकशब्दस्येन्द्रियवाचित्वं कुत इत्यत आह—**ने**ति। पूर्वेण समुचितस्यास्य व्याख्यानसमर्थनहेतुत्वाच्चशब्दः। आद्येऽर्थे प्रमाणमाह—**इतरोऽर्थ**इति । अग्निश्च । जगद्बोधयन्तः स्थापयन्तश्च पृथक्स्वावसरे उत्पद्यन्ते

रा॥सिद्धाद्यनुकूलसंघाः नमस्यन्तिच ; तदेतत्सर्वं युक्तमिति पूर्वेण संबन्धः ॥ ३६ ॥

युक्ततामेवोपपादयति—

**कस्माच्च ते न नमेरन् महात्मन् गिरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**

महात्मन् ते तुभ्यं गरीयसे ब्रह्मणो हिरण्यगर्भस्यापि आदिभूताय कर्त्रे हिरण्यगर्भादयः कस्माद्धेतोर्न नमस्कुर्युः ॥

**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥** ३७

**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**

अनन्त देवेश जगन्निवास त्वमेवाक्षरं न क्षरतीत्यक्षरं जीवात्मतत्त्वं, *'न जायते

ता॥सिद्धाद्यनुकूलसंघाइत्युक्तम् ॥ ३६ ॥

'कस्मात्' इत्यादिकं पूर्वेण संगमयति—**युक्ततामिति**।'ते' इत्यस्य प्रथमाबहुवचनत्वभ्रमव्युदासाय—**तुभ्यमित्युक्तिः** । प्रणतिकर्तारस्त्वर्थसिद्धा अनुषक्ता एवेति भावः । ब्रह्मशब्दस्यानेकार्थेषु प्रयोगादिह सर्वप्रणन्तव्यत्वोपयोगाय हिरण्यगर्भपदेन व्याख्या । 'आदिकर्त्रे' इति सविशेषणनिर्देशेन व्यवच्छेद्यभूतनूतनहिरण्यगर्भकर्तृसंभावनाभ्रमव्युदासाय—**आदिभूतायेति** व्यस्योक्तम् । कर्तृशब्देन निमित्तत्वस्योक्तत्वात् आदिशब्द उपादानत्वपरः ; स्वस्य कारणान्तरनिषेधार्थो वा । नमश्शब्दयोगवन्नमनमात्रयोगेऽपि चतुर्थी विद्यत इति ज्ञापनाय—**नमस्कुर्युरित्युक्तम्** । 'पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः' इत्यादिवत् ॥ ३६= ॥

'त्वमक्षरम्' इति प्रागप्युक्तत्वादत्र 'त्वमक्षरम्' इति तदतिरिक्तार्थपरत्वमुचितम् ; 'तत्परम्'इत्यस्य सामर्थ्याच्चात्राक्षरसदसच्छब्दानामवरतत्त्वविषयत्वं न्याय्यम्; तत्रच भावाभावशब्दाभिलप्यविकारयोगितया सदसच्छब्दयोरचित्परत्वं निर्विकारतयाऽक्षरशब्दस्य जीवात्मविषयत्वं चोचितमित्यभिप्रायेणाह—**नक्षरतीति** । जीवस्वरूपस्य निर्विकारत्वे श्रुतिं दर्शयति—**नजायतइति** । कार्यकारणयोरस-

प्र-पा ॥ * कठ. १-२-१८ ॥ १ ॥

शं॥अतश्च भगवतो हर्षादिविषयत्वे हेतुं दर्शयति —**कस्माच्च** हेतोः **ते** तुभ्यं **न**. **नमेरन्** न नमस्कुर्युः;हे **महात्मन् गरीयसे** गुरुतराय ; यतः **ब्रह्मणः** हिरण्यगर्भस्य **अपि आदिकर्ता** कारणम् अतः तस्मात् **आदिकर्त्रे**। कथम् एते न नमस्कुर्युः;अतः हर्षादीनां नमस्कारस्य च स्थानं त्वम् अर्हः विषयः इत्यर्थः । हे **अनन्त देवेश** हे **जगन्निवास त्वम् अक्षरं** तत् **परं, यत्** वेदान्तेषु श्रूयते । किं तत् , **सदसत्** इति । सत् विद्यमानम्, अ-

आ॥थक् । बोधनात्स्थापनाच्चैव जगतो हर्षसंभवात्। अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन । हृषीकेशो महेशानो वरदो लोकभावनः' इति च ॥ ३६ ॥

कथं स्थान इति तदाह—**कस्मादित्यादिना** । पूर्णश्चासावात्मा चेति महात्मा, आत्मशब्दश्चोक्तो भारते 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भाव-

जा॥उदयं गच्छन्ति। सूर्यकृतैश्च। अत्रापि पूर्ववद्बोधनादेर्हेतुमद्भावो ज्ञातव्यः।ईशानत्वादावप्युक्तो हेतुः॥

'सर्वे नमस्यन्ति'इत्येतद्युक्तमिति स्वयमेवोक्त्वा'कस्माच्च ते न नमेरन्'इति विरुद्धं कथं पृच्छतीत्यत आक्षेप एवायमिति ज्ञापयन् तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमवतारयति—**कथमिति** । इति शङ्कायामिति शेषः। तत्तस्या उत्तरम् । महात्मन्नक्षुद्रचित्तेत्यल्पार्थप्रतीतिनिरासार्थमाह—**पूर्णश्चेति**। आत्मा जीव इति प्रतीतिं वारयितुमाह—**आत्मेति** । उक्तो निरुक्तः। यद्यस्मात् । आप्नोतेर्मन् । पकारस्य च तकारः। आङ्पूर्वाद्दाञः स एव प्रत्ययः। आकारलोपस्तत्वम्। आङ्पूर्वाददो मन् । तत्वं च । इह देहे सन्तते

रा॥म्रियते वा विपश्चित्’इत्यादिश्रुतिसिद्धो जीवात्मा हि न क्षरति;सदसञ्च त्वमेव-सदसच्छब्दनिर्दिष्टं कार्यकारणभावेनावस्थितं प्रकृतितत्त्वं, नामरूपविभागवत्तया कार्यावस्थं सच्छब्दनिर्दिष्टं तदनर्हतया कारणवस्थमसच्छब्दनिर्दिष्टं च त्वमेव। तत्परं यत्—तस्मात्प्रकृतेः प्रकृतिसंबन्धिनश्च जीवात्मनः परमन्यन्मुक्तात्मतत्त्वं यत्,तदपि त्वमेव।अतस्त्वमादिदेवः पुरुषः पुराणः,त्वमस्य विश्वस्य परं निधानम्—निधीयते त्वयि विश्वमिति त्वमस्य विश्वस्य परं निधानम्;विश्वस्य शरीरभूतस्यात्मतया परमाधारभूतस्त्वमेवेत्यर्थः॥

**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८**

ता॥च्छब्देन व्यपदेशः ‘असद्वा इदमग्र आसीत्। ततो वै सदजायत’ इत्यादिश्रुतिसिद्ध इत्यभिप्रायेण कार्यकारणभावकथनम्। एकस्मिन्नेव द्रव्ये सदसच्छब्दप्रयोगनिदानमाह—**नामरूपेति**। ‘अक्षरं सदसत्’इति निर्दिष्टोभयपरामर्शी तच्छब्दः। विशेषकाभावात्तिलतैलदारुवह्न्यादिवत् परस्परमिलिततदुभयापेक्षया परत्वं च मुक्तात्मनः प्रसिद्धमिति—‘सदसत्तत्परं यत्’ इत्यनूद्यत इत्यभिप्रायेण—**मुक्तात्मतत्त्वमित्युक्तम्**। प्रकृतिपुरुषशरीरकत्वं मुक्तात्मनस्तादधीन्यं च कारणत्वसाधकमित्याह—**अत इति**। सर्वतत्त्वात्मकत्वादित्यर्थः। जगन्निवासशब्देन जगन्निवासो यस्येति विग्रहः। अतो निधानशब्देनात्राधारत्वमेवानुक्तं विवक्षितमिति प्रदर्शनायाधिकरणव्युत्पत्तिं दर्शयति—**निधीयते त्वयीति**। तेन ‘त्वमक्षरम्’ इत्यादिसामानाधिकरण्यकारण विश्वशरीरित्वं विवक्षितमित्याह—**विश्वस्य शरीरभूतस्येति**। एतेन निधानशब्दस्यात्राव्यक्तपरत्वं कैश्चिदुक्तं निरस्तम् ॥ ३७= ॥

**प पा॥**१. तैत्ति.आनन्द.७-१॥‘असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानं स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति’॥ अस्यार्थः—इदं-स्थूलचेतनाचेतनशरीरकं ब्रह्म, असत्-अनभिव्यक्तनामरूपं ब्रह्म, अग्रे आसीत्-सृष्टेः प्रागासीत्। ततः-तस्मात्, सत् अजायत-इदञ्जगत् अभिव्यक्तनामरूपमभवदित्यर्थः। ननु असच्छब्दितस्य ब्रह्मण उपादानत्वे कर्त्रन्तरमपेक्षितम्, निमित्तोपादानयोर्भेदावश्यम्भावात् इत्याशङ्क्याह—तदात्मानमिति। आत्मानमेवोपादानत्वेन स्वीकृत्य स्वयमेवाकुरुत। तस्मादिति-यस्मात् स्वयमेव स्वस्य कार्यम्, अतएव ब्रह्म सुष्ठु कार्यं यस्य तत्सुकृतम्। कार्यस्य सौष्ठवञ्चानतिक्लेशरूपत्वम्। स्वभिन्नस्य कार्यस्य निर्माणे हि क्लेशप्रसक्तिः। ततश्चाक्लिष्टकार्यं ब्रह्मेति ‘महतो भूतस्य निश्वसितमेतत्’ इत्यादिश्रुतयो वदन्तीत्यर्थः-इति ॥

शं॥सत् च यत्र नास्ति इति बुद्धिः।ते उपाधिभूते सदसती यस्य अक्षरस्य,यद्द्वारेण सदसती इति उपचर्यते। परमार्थतस्तु सदसतोः परं तत् अक्षरं, यत् अक्षरं वेदविदः वदन्ति। तत् त्वमेव, न अन्यत् इति अभिप्रायः॥ ३७॥

पुनरपि स्तौति—त्वम् आदिदेवः,जगतः स्रष्टृत्वात्।पुरुषः पुरि शयनात् पुराणः चिरन्तनः त्वम् एव अस्य विश्वस्य परं प्रकृष्टं निधानं निधीयते अस्मिन् जगत् सर्वं महाप्रलयादौ इति। किञ्च—वेत्ता असि, वेदिता असि सर्वस्यैव वेद्यजातस्य। यत् च वेद्यं वेदनार्हं तदपि त्वं, परं च धाम परमं पदं वैष्णवम्। त्वया ततं व्याप्तं विश्वं समस्तं, हे अनन्तरूप!॥ ३८॥

आ॥स्तस्मादात्मेति भण्यते’ इति। तत्परं सदसतः परम् ‘असच्च सच्चैव च यद्विश्वं सदसतः परम्’ इति भागवते॥ ३७॥

ज॥भावो नित्या सत्ता। आङ्पूर्वात्तनोतेर्क्तः। सदसद्भावात्मकं विश्वं त्वमेवेति सत्तादिप्रदत्वादेवोच्यते। न त्वन्यथा, तथा सति उत्तरवाक्यविरोधादिति भावेन तत्पठित्वा सप्रमाणकं व्याचष्टे—तत्परमिति॥

रा॥जगति सर्वो वेदिता वेद्यं च सर्वं त्वमेव, एवं सर्वात्मतयावस्थितस्त्वमेव परं च धाम स्थानं प्राप्यस्थानमित्यर्थः ; त्वया ततं विश्वमनन्तरूप—त्वयात्मत्वेन-विश्वं-चिद-चिन्मिश्रं जगत् ततं-व्याप्तम् ॥ ३८ ॥

अतस्त्वमेव वाय्वादिशब्दवाच्य इत्याह—

**वायुर्यमोऽग्निर्वरुणश्शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**

सर्वेषां प्रपितामहस्त्वमेव, पितामहादयश्च;सर्वासां प्रजानां पितरः प्रजापतयः, प्रजापतीनां पिता हिरण्यगर्भः प्रजानां पितामहः, हिरण्यगर्भस्यापि पिता त्वं प्रजानां प्रपितामहः ; पितामहादीनामात्मतया तत्तच्छब्दवाच्यस्त्वमेवेत्यर्थः ॥ ३८= ॥

ता॥'वेत्तासि' इत्यादौ परमात्मनो वेदितृत्वादिमात्रविधानेऽतिशयाभावात्कारणावस्थद्रव्यान्तर्यामित्वस्यचोक्तत्वात् , कार्यावस्थज्ञातृज्ञेयान्तर्यामित्वमेवात्र विवक्षितमित्यभिप्रायेणाह—**जगति सर्वो वेदिता वेद्यं चेति** । धामशब्दस्यानेकार्थस्यापि स्थाने प्रसिद्धिप्रकर्षात्स एवार्थ उचितः। स्थानंच प्राप्यमिति प्रसिद्धम् । अतः परत्वेन विशेषितप्राप्यत्वमेवात्र विवक्षितमित्यभिप्रायेणाह—**प्राप्यस्थानमिति** । यद्वा परमप्राप्यमिति भगवदसाधारणं स्थानं विवक्षितं स्यात् ; तेनापि पूर्ववत्सामानाधिकरण्यव्यपदेशः । आमनन्ति च तदप्राकृत स्थानम् 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि । तदैरंमदीयं सरः तदश्वत्थस्सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितम् ' इति, तथा 'सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते' इति। सामान्यतो विशेषतश्च प्रवृत्तयोः पूर्वोत्तरसामानाधिकरण्ययोर्मध्यस्थेन 'त्वया ततम् ' इत्यादिना शरीरात्मभाव एव निबन्धनमिति स्पष्टमुच्यत इत्यभिप्रायेणाह—**त्वयात्मत्वेनेति** ॥ ३८ ॥

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः' इत्यादिश्रुत्युपबृंहणाभिप्रायेण 'त्वया ततं विश्वम्' इति निर्दिष्टं शरीरात्मभावं 'वायुर्यमोऽग्निः'इत्यादिसामानाधिकरण्यहेतुत्वेनाह—**अतस्त्वमेवेति** । संबन्धिविशेषानुपादानात्प्रपितामहत्वं सर्वप्रतिसंबन्धिकमित्यभिप्रायेणाह—**सर्वेषां प्रपितामहस्त्वमेवेति** । चशब्दः पितामहादिसमुच्चयार्थक इत्यभिप्रयन्नाह—**पितामहादयश्चेति** । सर्वप्रपितामहस्य कस्यचिदभावेन तच्छरीरकत्वेन प्रपितामहत्वायोगदन्यथा तदाह—**सर्वासां प्रजाननां पितर इत्यादिना** । प्रजापतयः दक्षादयः । चशब्दसमुच्चितपितामहत्वं तु तच्छरीरकतयेत्याह—**पितामहादीनामात्मतयेति** ॥ ३८= ॥

प्र-पा॥१.छा.८-५-३॥,अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तद् अरश्च...प्रभुविमितं हिरण्मयम् ॥' अस्यार्थः—इतः-भूलोकापेक्षया, तृतीयस्यां दिवि—तृतीये द्युशब्दिते ब्रह्मलोके,अरण्यसंज्ञकौ अर्णवौ स्तः; अतश्च ब्रह्मलोकस्य अरण्यवासस्य च अरण्यायनशब्दवाच्यत्वकृतोऽभेदः ; अरण्यवासस्य ब्रह्मचर्यसाध्यत्वात् कार्यकारणयोरभेदोपचारः । अत्र भुवं चतुर्मुखलोकान्तमन्तरिक्षलोकं च अपेक्ष्य भगवल्लोकस्य तृतीयत्वम्। प्रसङ्गाद्भगवल्लोकचिह्नानि कानिचिदाह—तत्-तत्र, ऐरंमदीयं-तन्नामकम्, इरया-अमृतेन माद्यन्त्यस्मिन्निति तथा ; अमृतमयमिति यावत् । अस्तीति शेषः । तत्-तत्र, सोमसवनः-तदाह्वयः, अश्वत्थः, अस्तीति च पूर्ववत्; चन्द्रवदाह्लादकत्वात्तथा। तत्-तत्र, अपराजिता-अब्रह्मविद्भिः प्राप्तुमशक्यत्वेन तत्संज्ञिका, ब्रह्मणः, पूः-पुरी च, अस्तीति । प्रभुविमितं-प्रभुणा-भगवता विशेषेण मितं स्वभोगभूमित्वेन परिगृहीतं, व्याप्तस्यापि भगवतो नित्यविग्रहविशिष्टतया सन्निधानादिति भाव.। हिरण्मयं-तद्वद्भासमानं हितरमणीयस्वरूपं वा, मण्डपमस्तीति शेषः ॥

२॥ ३. ऋग्वेदसं. २-३-२१-२३-१६४-४६. तैत्तिरीब्राह्म. ३-७-९-३ ॥

४. तै-नारा. १-७॥

नमोनमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमोनमस्ते ॥ ३९

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तुते सर्वत एव सर्व ।

रा॥अत्यद्भुताकारं भगवन्तं दृष्ट्वा हर्षोत्फुल्लनयनोऽत्यन्तसाध्वसावनतस्सर्वतो नमस्करोति ॥ ३९= ॥

अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४०

अनन्तवीर्य अपरिमितवीर्य,अपरिमितपराक्रमस्त्वं सर्वमात्मतया समाप्नोषि,ततस्सर्वोऽसि-यतस्त्वं सर्वं चिदचिद्वस्तुजातमात्मतया समाप्नोषि,अतः सर्वस्य चिदचिद्वस्तुजातस्य त्वच्छरीरतया त्वत्प्रकारत्वात्सर्वप्रकारस्त्वमेव सर्वशब्दवाच्योऽसीत्यर्थः,'त्वमक्षरं सदसत्' 'वायुर्यमोऽग्निः' इत्यादिसर्वसामानाधिकरण्यनिर्देशस्यात्मतया व्याप्तिरेव हेतुरि-

ता॥'नमोनमस्तेऽस्तु' इत्यादिनोक्तनमने विश्वरूपप्रदर्शनप्रकटितपरत्वसौलभ्यानुभवजनितभयहर्षावेव हेतुरित्याभिप्रेयेणाह—अत्यद्भुताकारमिति ॥ ३९= ॥

अनन्तस्य वीर्यमिव वीर्यं यस्येत्यन्यथाप्रतिपत्तिवारणायाह—अपरिमितवीर्येति।अमितशब्दस्याप्रमितपरत्वे शास्त्रादिसिद्धिविरोधात्—अपरिमितपराक्रम इत्युक्तम्। 'सर्वं समाप्नोषि' इत्यत्राकाशादिवद्व्याप्तिव्युदासाय 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा'[1] इत्यादिश्रुत्युक्तात्मत्वपर्यवसितनियमनार्थव्याप्तिर्विवक्षितेत्यभिप्रयन्नाह—सर्वमात्मतयेति । 'पुरुष एवेदं सर्वम्'[2] 'आत्मैवेदं सर्वं'[3]

प्र-पा॥१. यजुरारण्यके. ३-प्रश्ने.चित्ति. ११-अनु. २१-पं ॥ २. पुरुषसूक्ते ॥

३. छा. ७-२५-२ ॥ 'अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति, अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति' ॥ नन्वहंबुद्धिशब्दयोर्जीवात्मविषययोः कथं भूमपर्यन्तत्वम् ?; अहमर्थे च परमात्मन्यहंग्रहोपासनस्य अयथार्थत्वमेव स्यादित्याशङ्क्य भूम्नः प्रत्यगात्मत्वं प्रत्यात्मत्वेन तद्विषयबुद्धिशब्दानां परमात्मपर्यन्तत्वमुपपद्यत इति दर्शयन् 'तरति शोकमात्मवित्' इति प्रक्रान्तमात्मोपदेशं भूम्नि समापयति—अथात आत्मादेश इति ॥ अत्र क्रियत इति शेषः । अथशब्दः प्रकृतविषयत्वद्योतनार्थः । आत्मादेशः-आत्मत्वोपदेश. क्रियत इत्यर्थः । आत्मैवाधस्तात्...आत्मैवेदं सर्वमिति—सर्वात्मतयोपदिश्यमानो भूमा स्वोपासकस्यात्मैवेत्यर्थः । ततश्च तत्राहंबुद्धिशब्दयोर्याथार्थ्यमेवेति

शं॥किञ्च—वायुः त्वं यमः च अग्निः वरुणः अपांपतिः शशाङ्कः चन्द्रमाः प्रजापतिः त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहः ब्रह्मणोऽपि पिता इत्यर्थः। नमो नमः ते तुभ्यम् अस्तु सहस्रकृत्वः । पुनश्च भूयोऽपि नमो नमः ते । बहुशो नमस्कारक्रियाभ्यावृत्तिगणनं कृत्वसुचा उच्यते । 'पुनश्च' 'भूयोऽपि' इति श्रद्धाभक्त्यतिशयात् अपरितोषम् आत्मनः दर्शयति ॥ ३९ ॥

तथा—नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यम्,अथ पृष्ठतः ते । अपि च नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व । अनन्तवीर्यामितविक्रमः अनन्तं वीर्यम् अस्य, अमितः विक्रमः अस्य। वीर्यं सामर्थ्यं, विक्रमः पराक्रमः। वीर्यवानपि कश्चित् शत्रुवधादिविषये न पराक्रमते, मन्दपराक्रमो वा । त्वं तु अनन्तवीर्यः अमितविक्रमश्च इति अनन्तवीर्यामितविक्रमः । सर्वं समस्तं जगत् समाप्नोषि सम्यक् एकेन आत्मना व्याप्नोषि

रा॥ति सुव्यक्तमुक्तं-'त्वया ततं विश्वमनन्तरूप' 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति च ॥

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेमं मया प्रमादात्प्रणयेन वापि ॥ ४१**
**यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२**

**तवानन्तवीर्यत्वामितविक्रमत्वसर्वान्तरात्मत्वस्रष्टृत्वादिको यो महिमा, तमिममजानता मया प्रमादान्मोहात्प्रणयेन चिरपरिचयेन वा सखेति मम वयस्य इति मत्वा हे**

---

ता॥'नारायण एवेदं सर्वम्' इत्यादिश्रुतिस्थसर्वशब्दसामानाधिकरण्योपबृंहणाय 'सर्वत एव सर्व' इति पूर्वोक्तसर्वशब्दसामानाधिकरण्यं न बाधार्थम्, अपि तु शरीरात्मभावनिबन्धनविशिष्टैक्यपरमित्युक्तमित्यभिप्रायेणाह—**यतस्त्वमित्यादि**। सकलवेदवेदान्ततदुपबृंहणेषु भगवद्वाचिशब्दानां सर्वचिदचिद्वस्तुवाचिसामान्यविशेषसकलशब्दसामानाधिकरण्यस्यापि शरीरात्मभाव एव निबन्धनमित्येतत्प्रघट्टफलितमित्यभिप्रायेणाह—**त्वमक्षरं सदसदित्यादि** ॥ ४० ॥

इदंशब्दविशेषितमहिमशब्दः प्रकृतमहिमानुवादीत्यभिप्रयन्नाह —**अनन्तवीर्यत्वामितविक्रमत्वेत्यादि**। प्रमादशब्दस्याज्ञानपरत्वे 'अजानता' इत्यनेन पौनरुक्त्यात्सजातीयत्वभ्रमपरत्वमभिप्रेत्य-**प्रमादान्मोहादित्युक्तम्**। सखेति बुद्धिहेतुत्वस्वारस्यात्प्रीतिवाचिनापि प्रणयशब्देन तदौपयिकचिरपरिचयोपचारो युक्त इत्याशयेनाह—**प्रणयेन चिरपरिचयेनेति** 'सयुजा सखाया' इति श्रुतिप्रतिपन्नसखित्वबुद्धेर्मोहादिजन्यत्वासम्भवेन 'सखेति मत्वा' इत्येतल्लौकिकवयस्यत्वबुद्धिपरमित्याशयेनाह—**मम वयस्य इति मत्वेति**।'हेकृष्ण' इत्यादिकं प्रसभोक्त्याकारसमर्पकमित्याशयेनान्वयं दर्शयन् प्रकृतोचितवि-

---

**प्र-पा॥**भावः। सवा एष ..आत्मानन्द इति—रतिः-स्रक्चन्दनादिजन्या प्रीतिः।क्रीडा-उद्यानादिजन्या।स्त्रीसंभवा प्रीतिर्मैथुनम् । विभूतिजन्या प्रीतिः-आनन्दः। आत्मैव रतिर्यस्य स तथोक्तः। एवमुत्तरत्रापि । श्रवणमनननिदिध्यासनैरुक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽप्यात्मसुखानुभवान्तर्गत इत्यर्थः । स स्वराड्भवतीति—स्वराट्-स्वयमेव राजा;अकर्मवश्यः, विधिनिषेधकिङ्करो न भवतीति यावत् । तस्य सर्वेषु लोकेषु कामचारो भवति—अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीत्यर्थः । अथ येऽन्यथातो ...लोकेष्वकामचारो भवति—ये उक्तप्रकारादन्येन प्रकारेणोपासते, ते अन्यराजानो भवन्ति-विधिनिषेधकिङ्करा भवन्ति, कर्मवश्या भवन्तीत्यर्थः । किंच ते क्षय्यलोका भवन्तीत्यन्वयः । अत्र क्षय्यलोका भवन्तीत्यनेन यथोक्तप्रकारेण परमात्मोपासकानामक्षय्यभगवल्लोकत्वमस्तीत्युक्तं भवति ॥ १. नारायणोपनिषदि ॥

२. मुण्ड-उप ३-१-१; श्वेता-च. ४-६; ऋग्वेदसं-च ॥ 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यो अभिचाकशीति॥' अस्यार्थः—द्वा-जीवेश्वरौ, सुपर्णा-शोभनशरीरौ, शोभनज्ञानाविति वा। 'द्वा सुपर्णा' इत्यत्र पर्णशब्देन अप्राकृतविग्रहो , ज्ञानं वाऽभिधीयते (३-२-१३) इत्यनुगृहीतं व्यासार्यैः । सम्यक्

---

**शं॥यतः, ततः तस्मात् असि भवसि सर्वः त्वं, त्वया विनाभूतं न किञ्चित् अस्ति इति अभिप्रायः ॥ ४० ॥**

**यतः अहं त्वन्माहात्म्यापरिज्ञानात् अपराद्धः, अतः—सखा समानवयाः इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभम् अभिभूय प्रसह्य यत् उक्तं हे कृष्ण ! हे यादव ! हे-**

रा॥कृष्ण हे यादव हे सखे इति त्वयि प्रसभं विनयापेतं यदुक्तम्, यच्च परिहासार्थं सर्वदैव सत्कारार्हस्त्वमसत्कृतोऽसि; विहारशय्यासनभोजनेषु च सहकृतेष्वेकान्ते वा समक्षं वा यदसत्कृतोऽसि ; तत्सर्वं त्वामप्रमेयमहं क्षामये ॥ ४१ ॥ ४२ ॥

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३**

ता॥नयाभावपरत्वमाह—हेकृष्णेत्यादि।'यच्च' इत्यत्र चशब्दाभिप्रेतासत्कारबहुत्वसिद्ध्यर्थं'यदसत्कृतोऽसि'इत्यस्यावृत्त्या वाक्यभेदमङ्गीकृत्य अर्थमाह—**यच्च परिहासार्थ**मित्यादिना।तत एव 'तत्सर्वम्'इति तस्य बहुत्वमुच्यते । परिहासार्थमप्यसत्कारो महद्विषयेऽपराध एवेत्यभिप्रायेण मध्यमपुरुषाक्षिप्तार्थमाह—**सर्वदैव सत्कारार्हस्त्व**मिति । एकशब्दफलितोक्तिः—**एकान्त** इति॥ ४१॥ ४२॥

त्वया क्षामणे कृतेऽपि क्षमेऽहमिति केन निश्चितम्, मदन्यः कश्चिदाश्रीयतामिति भगवदभिप्रायमुन्नीय तदुत्तरत्वेन हेतुफलभावेन प्रवृत्ते श्लोकद्वये प्रथमश्लोकस्यविशेषणान्यप्रतिमप्रभावत्वोपपाद-

प्र·पा॥ज्ञानरूपपक्षवन्तावित्यर्थः।शरीरपक्षे-जीवस्यापि मुक्ताविच्छोपात्तशरीरत्वात् सम्भवति।सयुजौ-समानापहतपाप्मत्वादिगुणकौ, सदृशशेषशेषित्वसम्बन्धौ वा । जीवः शेषत्वेन सम्बन्धार्हः,परः शेषित्वेन सम्बन्धार्ह इत्यर्थः;'स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम्' इतिवचनात्।सखायौ-शेषशेषित्वरूपबान्धवयुक्तौ।शेषिशेषिणावपि मित्रत्वेन वर्तमानौ वा।समानं वृक्षम्-एकं शरीरम्।परिषस्वजाते-'समानग्रामा वयम्'इतिवत्। तयोः-परजीवयोर्मध्ये, अन्यः-जीवः,स्वादु-परिपक्वं,पिप्पलं-कर्मफलम्,**अत्ति**-अश्नाति; अन्य.-परमात्मा, अनश्नन् अभिचाकशीति स्वयमनश्नत्वादाशयितृत्वाच्च भृशतरम्भातीत्यर्थः । श्रुतप्रकाशिकायामस्यार्थो (१-१-१, १-३-६)विस्तरेण प्रपञ्चितस्तत्र यथेष्टन्द्रष्टव्यः ॥

शं॥सखेति च अजानता अज्ञानिना मूढेन; किम् अजानता इति?आह—महिमानं माहात्म्यं तव इदम् ईश्वरस्य विश्वरूपम् । 'तव इदं महिमानं तम् अजानता' इति वैयधिकरण्येन सम्बन्धः । 'तवेमम्' इति पाठः यदि अस्ति,तदा सामानाधिकरण्यमेव । मया प्रमादात् विक्षिप्तचित्ततया, प्रणयेन वाऽपि प्रणयो नाम स्नेहनिमित्तः विस्रम्भः, तेनापि कारणेन यत् उक्तवान् अस्मि ॥ ४१ ॥

यच्च अपहासार्थं परिहासप्रयोजनाय असत्कृतः परिभूतः असि भवसि त्वम्; क्व ? —विहारशय्यासनभोजनेषु, विहरणं विहारः. शयनं शय्या, आसनम् आख्यायिका,भोजनम् अदनम्, इति एतेषु विहारशय्यासनभोजनेषु,एकः परोक्षः सन् असत्कृतः असि परिभूतः असि; अथवाऽपि हे अच्युत, तत् समक्षं—तच्छब्दः क्रियाविशेषणार्थः, प्रत्यक्षं वा असत्कृतः असि तत् सर्वम् अपराधजातं क्षामये क्षमां कारये त्वाम् अहम् अप्रमेयं प्रमाणातीतम् ॥ ४२ ॥

आ॥एकस्त्वमेव कारयिता नान्योऽस्त्यथापि ॥ ४२ ॥

ज॥एकः परोक्ष इति क्लिष्टं व्याख्यानमिति ज्ञापयितुं तदर्थमन्वयं च दर्शयति—एकइति। आद्याक्षरग्रहणेन एशब्दः एकस्य द्योतकः, कशब्दः कारयितृत्वद्योतकः,अन्तर्णीतण्यर्थात्करोतेर्डः। अथापि एवमसत्कारानर्होऽप्यसत्कृतोऽसि ॥ ४२ ॥

रा॥**अप्रतिमप्रभाव त्वमस्य सर्वस्य चराचरस्य लोकस्य पितासि ; अस्य लोकस्य गुरुश्चासि, अतस्त्वमस्य चराचरस्य लोकस्य गरीयान् पूज्यतमः ; न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽपि—त्वदन्यः कारुण्यादिना केनापि गुणेन न त्वत्समोऽस्ति, कुतो-**

ता॥कानीत्यभिप्रायेण—**अप्रतिमप्रभावे**ति प्रथममुक्तम्।पितृगुरुपूज्यशब्दानां सम्बन्धिसापेक्षत्वेन लोकशब्दस्य सर्वत्रान्वयमाह—**अस्य लोकस्य पितासी**त्यादिना । निरुपाधिकपितृत्वगुरुत्वे पूज्यतमत्वहेतुरित्यभिप्रायेणाह— **अत** इति । पूज्यत्वे गरीयस्त्वमनवच्छिन्नमिति ज्ञापनाय प्रवृत्तं 'न त्वत्समोऽस्ति ' इति वाक्यं व्याख्यास्यन् प्रयोजनातिशयसत्त्वाल्लोकत्रयशब्दस्यात्रान्वयमाह ---**लोकत्रयेऽपि त्वदन्य** इति । अत्र लोकत्रयशब्देन कृतकमकृतक कृतकाकृतकमित्युक्तलोकत्रयं वा, लोक्यतेऽनेन प्रमाणान्तराप्राप्तार्थ इति व्युत्पत्त्या वेदत्रय वा विवक्षितम्।साम्यस्य भेदघटितत्वात्'न त्वत्समोऽस्ति'इत्यनेनैव अन्यस्मिन्भगवत्साम्यनिषेधलाभादन्यपदानर्थक्यमित्याशङ्कापरिहाराय'अन्यस्त्वत्समो नास्ति, त्वमेव तव समः' इत्यर्थलाभार्थं 'त्वदन्यः'इत्युद्देश्यसमर्पकत्वेनान्यशब्दस्यान्वयउक्तः । तेन कार्यत्वकर्मवश्यत्वादिना भगवदन्यत्वेन प्रसिद्धाना विधिशिवादीनां ' हिरण्यगर्भस्समवर्तताग्रे '

**प्र·पा**॥१. यजुषि-४· का-१-प्रश्न· ३१-३४-वा। वाजसनेयसं च. २०-अध्या १० अनु-१० १४॥ " हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।य ईशे अस्य द्विपदश्चतुष्पद. कस्मै—॥ २ ॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै—॥३॥य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य च्छायामृतं यस्य मृत्युः कस्मै देवायहविषा विधेम॥' अस्य विवरणम्-अयं खल्वनुवाको भगवन्नारायणपरः । अस्य मन्त्रस्य नारायणपरतयापि पाद्मे गोवर्धनगिरियज्ञानन्तरमिन्द्रस्तवे उपबृंहितम्—'अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत । त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः । पृथिवीं द्यामिमान्देव त्वमेव धृतवान्प्रभो । आत्मदा बलदायश्च विश्वस्य जगदीश्वरः। उपास्यसे त्वं त्रिदशैः प्रशिषञ्जगताम्पते। अमृतञ्चैव मृत्युश्च तवच्छाये सनातने । तस्मै देवाय भवते विधेम हविषा वयम् ॥' इति । अत्र वक्तव्योऽर्थः-अन्यत्र विस्तृतः। हिरण्यगर्भः-नारायणः । योगरूढोऽयं शब्दो नारायणेऽपि । अत एव च सहस्रनामाध्याये ' हिरण्यगर्भो भूगर्भः ' 'हिरण्यगर्भः शत्रुघ्नः' इति पठितोऽयम् । ' यानि नामानि गौणानि ' इति तदध्यायारम्भगतश्लोके वक्ष्यमाणतदध्यायगतभगवन्नाम्नां 'गौणानि'इत्यनेन यौगिकत्वं. 'विख्यातानि'त्यनेन रूढत्वञ्च हि प्रतिपादितम् । हिरण्यस्य-वैष्णवस्य, परमपदस्य, गर्भः-गर्भभूतः । सर्वदैवाभिव्यक्तरूपेण तत्र वर्तिष्णुरिति यावत् । यद्वा, हिरण्यानि-असंख्येयदिव्यकल्याणगुणाः, गर्भे-यस्य सः-हिरण्यगर्भः-समस्तकल्याणगुणनिधिरिति यावत् । हितरमणीयं-हिरण्यमिति वैदिकनिरुक्तात्, सुवर्णवत् स्पृहणीयत्वाच्च हिरण्यशब्दो वैष्णव परन्धाम, कल्याणगुणजातञ्चाचष्टे । अत एव हि वैष्णवम्परमन्धाम हिरण्यरूपत्वेनैवोच्यते श्रुतिषु । यथोक्तम्मुण्डकोपनिषदि (२-१०)'हिरण्मये परे लोके' इति। उक्तञ्च तैत्तिरीयारण्यके( १-प्रपा· २७-अनु) 'देवानाम्पूरयोध्या । तस्यां हिरण्यः कोशः। स्वर्गो लोके ज्योतिषा वृतः' इति, 'विभ्राजमानां हरिणी यशसा सम्परीवृताम्।पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता' इति च। अत्र हि भगवल्लोकपुरकोशादीनां तेजोविशेषेण प्रकाशमानानां हिरण्यरूपत्वमेवाभिधीयते । अग्रे-सृष्टेः प्राक् महाप्रलयकालेऽपि, समव-

शं॥**यतः त्वम्—पिता असि जनयिता असि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य । न केवलं त्वम् अस्य जगतः पिता, पूज्यश्च पूजार्हः, यतः गुरुः गरीयान्**

प्र-पा॥र्तत-सम्यगवर्तत । पदार्थान्तरवत् विलयमप्राप्यैवयथावस्थितस्वरूपस्वभाव एवावर्ततेतियावत्। 'सदेव' इत्यादिश्रुत्यन्तरानुरोधेन महाप्रलयकालेपि अविनाशितयाऽवस्थानं परब्रह्मणोऽसाधारणोधर्मः। भूतस्य—कृत्स्नस्य भूतजातस्य, एकः पतिः जातः एकपतिभूतः, आसीत्-अस्ति । 'छन्दसि लुङ्लङ्लिटः'(पा-सू-३-४-६)इत्यनुशासनात् कालान्तरेपिलङ्। 'पतिं विश्वस्य' इति श्रुत्यन्तरानुरोधेन निखिलजगन्निरुपाधिकैकच्छत्राधिपत्यमपि तस्यैवासाधारणो धर्मः। सः-सएव परमात्मा,इमां-पृथिवीं द्यामुत-भूलोकं, द्युलोकञ्च,दाधार धारयति। 'तुजादीनान्दीर्घोऽभ्यासस्य' (६-१-७-)इत्यनुशासनात् तुजादेराकृतिगणत्वाच्चेहाभ्यासदीर्घः;लिटोलडर्थकत्वमप्युक्तानुशासनेन। 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत 'इत्यादिश्रुत्यन्तरानुरोधेनायमपि तस्यैवासाधारणो धर्मः। कस्मै देवाय-तापत्रयातुराणां सर्वेषामन्ते परमजिज्ञास्यपरब्रह्मभूताय श्रीमन्नारायणदेवाय, 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति श्रुत्या,'अथातो ब्रह्मजिज्ञासा' इति सूत्रेण, 'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ' इत्यादिभिः शास्त्रैश्च तापत्रयातुराणामन्ते परमजिज्ञास्यतया व्यवस्थितं वस्तु परब्रह्मभूतो नारायण एवेति प्रतिपाद्यते । अतएव नामपाठे 'एको नैकस्सवः कः किम्'इति किंशब्दोऽपि भगवन्नामसु पठितः । जिज्ञास्यविषयत्वेनास्य किंशब्दस्य सर्वनामसंज्ञत्वात् स्मायादेशः।अत एव चाय मनुवाको नारायणपरएव न चतुर्मुखपर इति सिध्यति । चतुर्मुखपरस्य कशब्दस्य सर्वनामसंज्ञाविरहेण स्मायादेशासंभवेन कायेत्येव रूपापत्तेः । हविषा - अन्नादिरूपेण नैवेद्येन, विधेम विशेषतः पोषयेम, नैवेद्यनिवेदनरूपेणोपचारेण परिचरेमेति यावत् । 'विध विधाने' इति विधतेर्धातोस्तौदादिकस्य विपूर्वकधाधातुना व्याख्यानात् धाधातोश्च धारणपोषणार्थकत्वात्, तृप्तिविशेषजनकक्रियारूपपोषणस्येह विवक्षितत्वे परिचरणमेव पर्यवस्यति । यद्यपि परिचरणपोषणार्थकस्य विधतेस्सकर्मकतया 'देवं परिचरेम' इत्यादिवत् 'देवं विधेम' इत्येव प्रयोगो न्याय्यः, ननु 'देवाय विधेम' इति ; तथापि कर्मण आधारत्वविवक्षया 'गण्डे प्रहृत्य' इतिवत् कर्मणस्सम्प्रदानतया धात्वर्थक्रियान्वयविवक्षायां चतुर्थ्यपि साधुरेव । अतोऽत्र देवार्था तृप्तिविशेषजनकक्रियेत्यन्वयविवक्षया'देवाय'इति स्यादेव चतुर्थी। यद्वा'नमस्कुर्मो नृसिंहाय'इत्यादिष्विव'देवाय विधेम'इत्यत्रापि देवमनुकूलयितुम्'इत्यर्थविवक्षायां 'क्रियार्थोपपदस्य कर्मणि स्थानिनः'(पा-सू-२-३-१४)इत्यनुशासनेन चतुर्थी सम्भवति;अतो न दोष इति॥ १॥ —यः,प्राणतः-जीवतः,निमिषतः-म्रियमाणस्यच, जगतः-कृत्स्नस्य भूतजातस्य, महित्वा-महिम्ना, महो-महत्व-सोऽस्यास्तीति-मही, तस्य भावो-महित्वम्। तदुपरि तृतीयायाः'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः'(७-१-३९)इत्यनुशासनात् आकारादेशे महित्वा'इतिच्छान्दसं रूपं भवति।एक इत्.स्वयमेक एव,राजा बभूव-नियन्तृभूतोस्ति, निखिलजगदुत्पत्तिस्थितिव्यापारेषु निरवधिकनियन्तृभावापन्न इति यावत् । यः-द्विपदश्चतुष्पदश्चास्य-प्राणिजातस्य,ईशे-ईष्टे । प्रजापतिपशुपतिसुरपतिलोकपालमनुनरपतिप्रमुखतत्तदर्वाचीन नियन्त्रन्तर्यामिभूतस्तत्तद्रूपेणापि स्वयमेव तांस्तान् नियच्छंस्तिष्ठतीत्यर्थः । तथाच-अद्वारकसद्वारकसर्वविधसर्वनियमनमूलकारणं य एवेति यावत् । 'लोपस्त आत्मनेपदेषु' (७-१-४१)इत्यनुशासनेन तकारलोपे ' ईशे ' इति छन्दसि रूप भवति । 'अधीगर्थदयेशां कर्मणि'(२-३-५२) इत्यनुशासनेन 'अस्य'इति कर्मणि षष्ठी। 'तस्मै' इति शेषः, यत्तदोर्नित्यसम्बन्धात्। 'कस्मैदेवाय'इत्यादिपूर्ववत्। अत्रापि प्रतिपाद्यमानमद्वारकसद्वारकसर्वजगन्निरवधिकसर्वविधनियमनमूलकारणत्वं परमात्मनो भगवतोनारायणस्यैवासाधारणधर्म इति॥२॥इमे-हिमवन्तः-हिमाचलप्रभृतयः पर्वताः,बहुवचनबलेन, च्छत्रिन्यायात्। यस्य-महित्वा-महिमा,यद्विभूतिभूता इत्यर्थः । पूर्ववत् । समुद्रं, रसया सह-भूम्या सह, यस्य, महित्वा - महिमानम्, आहुः-मनीषिण

रा॥ऽभ्यधिकः ॥ ४३ ॥

ता॥'अजस्य नाभावध्येकमर्पितं' 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः' इत्यादिषु तत्तद्वाचिशब्दश्रवणेन कारणत्वादिना भगवत्साम्यापातप्रतीतावपि 'आकाशस्तल्लिङ्गात्' स्यैवेति 'विष्णुना विधृते भूमी' इतिश्रुत्यन्तरसिद्धत्वात्, कारणप्रकरणस्थामृतमृत्युशब्दौ मुक्तबद्धपराविति बन्धमोक्षहेतुत्वञ्च तदसाधारणमिति 'नान्यः पन्थाः' 'मोक्षमिच्छेज्जनार्दनात्' इत्युक्तेश्च नारायणपर एवायम्मन्त्रः, न चतुर्मुखपर इति दिक् ॥

प्र-पा॥इतिशेषः।इमाः प्रदिशः-यस्य महित्वा-महिमानम्, आहुः। यस्य-बाहू महित्वा-महिमानम् आहुः-महिमस्वरूपौ बाहू इति यावत्। 'बाहुच्छायामवष्टभ्य'इत्याद्युक्तरीत्या बाहुबलादेव सर्वलोकसंरक्षणकरणाद्बाहू एवास्य लोकरक्षणप्रधानपरिकराविति भावः। तस्मै कस्मै देवाय हविषा विधेम।पूर्ववत्। अत्रापि महीमहीधरसमुद्रदिक्प्रभृतिकृत्स्नजगद्विभूतिमत्त्वं निखिललोकरक्षणपरिकरमहाबाहुत्वं चाभिधीयमानं तस्यैवासाधारणधर्मइति ॥ ३ ॥ —यः-आत्मदाः-आत्मानं ददातीति-आत्मदाः, स्वोपासकानामात्मानमेव ददातीत्यर्थः; बलदाः बलं ददातीति बलदाः, ज्ञानशक्त्यादिबलापेक्षिणां तदपि ददातीत्यर्थः; उपासनकरणोपयुक्तमनोदार्ढ्यरूपबलन्ददातीतिवार्थः, 'ददामि बुद्धियोगम्' इत्युक्तेः; विश्वे सर्वे मनुष्यादयः, यस्य प्रशिषम् प्रशासनम्, उपासते अनुतिष्ठन्ति; देवा यस्य प्रशिषमुपासते, अमृतं-मोक्षः, यस्य च्छाया-छायावदधीनमित्यर्थः; मृत्युः-संसारोऽपि, यस्य च्छाया बन्धमोक्षावुभावपि यदधीनस्थितिकावित्यर्थः। 'संसारबन्धस्थितिमोक्षहेतुः' इतिश्रुतेः; तस्मै इत्यादि पूर्ववत्; अत्रापि देवमनुष्यादिस्वेतरसर्वचेतनोपास्यप्रशासनत्वस्वाधीनबन्धमोक्षत्वादिकमभिधीयमानं तस्यैव असाधारणधर्म इति; 'अग्रे समवर्तत' इति कारणत्वश्रवणात् 'पतिरेकः' इति अनवच्छिन्नपतित्वश्रवणात्,द्युपृथिव्यादिधारणत्वंच त-

१. यजुषि. कां. ४-६-२ ॥ 'अजस्य नाभावध्येकमर्पितम्' इत्यत्र 'अर्पितम्'इति-आविर्भूतमित्यर्थः, 'एकम्' इति-पुष्करमुच्यते, 'अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम्। पुष्करम्पुष्कराक्षस्य तस्मै पद्मात्मने नमः' (भार. शा.४७-५८) इति महाभारते व्याख्यातत्वात्' इति भगवल्लोकाचार्यैः-तत्त्वशेखरे व्याख्यातम्। चतुर्मुखस्य नारायणजन्यत्वसंहार्यत्वकर्मवश्यत्वादिकथनात् कारणत्वं न सम्भवतीत्यभिप्रायः ॥

२. श्वे. ४-१८ ॥

३. शारी. १-१-२३. सूत्रार्थः-आकाशः'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यत्राकाशशब्दनिर्दिष्टम्परमेव ब्रह्म। कुतः?—तल्लिङ्गात्'ह्वै' इतिप्रसिद्धवन्निर्दिश्यमानात्, तदसाधारणजगत्कारणत्वादिलिङ्गादिति। अचेतनभूताकाशस्य जगत्कारणत्वादिकं न सम्भवति, अतः परमात्मन एवेति। 'आकाशते स्वस्मै प्रकाशते, आकाशयति अन्यम्प्रकाशयति स्वात्मने इति च व्युत्पत्त्या परमात्मपरोऽयमाकाशशब्द इति ॥

शं॥गुरुतरः। कस्मात् गुरुतरः त्वम् इति?आह—न त्वत्समः त्वत्तुल्यः अस्ति।न हि ईश्वरद्वयं संभवति, अनेकेश्वरत्वे व्यवहारानुपपत्तेः। त्वत्सम एव तावत् अन्यः न सम्भवति; कुत एव अन्यः अभ्यधिकः स्यात् लोकत्रयेऽपि सर्वस्मिन्? अप्रतिमप्रभाव! प्रतिमीयते यया सा प्रतिमा, न विद्यते प्रतिमा यस्य तव प्रभावस्य सः त्वम् अप्रतिमप्रभावः हे अप्रतिमप्रभाव! निरतिशयप्रभाव इत्यर्थः ॥ ४३ ॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४**

रा॥**यस्मात् त्वं सर्वस्य पिता,पूज्यतमो गुरुश्च, कारुण्यादिगुणैश्च सर्वाधिकोऽसि;त-**

**ता॥**' प्राणस्तथानुगमात् ' ' शास्त्रदृष्ट्या तूपदेशो वामदेववत् ' 'साक्षादप्यविरोधं जैमिनिः ' इत्यादिन्यायानुरोधेन ' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' ' एको हवै नारायण आसीन्न ब्रह्मा नेशानः ' इत्यादिश्रुतिसिद्धसर्वान्तरात्मत्वापहतपाप्मत्वादिविशिष्टभगवदसाधारणधर्मप्रतिपादकवाक्यस्थहिरण्यगर्भाजशिवादिशब्दानां भगवत्परतया न तेषां भगवत्साम्यगन्धोऽपीति लभ्यते। **केनापि गुणेनेति**—किमुत सकलकल्याणगुणैर्जगत्कारणत्वमोक्षप्रदत्वादिना चेति भावः । अनेन साम्यैक्योत्तीर्णव्यक्त्यन्तरत्वपक्षा निरस्ता वेदितव्याः ॥ ४३ ॥

' तस्मात् ' इति पूर्वश्लोकोक्तनिरुपाधिकपितृत्वपूज्यतमत्वगुरुत्वादिकं हेतुत्वेन परामृशतीत्यभिप्रायेणाह—**यस्मात्त्वं सर्वस्य पिते**त्यादिना।'प्रणम्य'इति प्रपदनमुच्यते; पूर्वोक्तपितृत्वादिपरामर्शिना

**प्र-पा॥**१. शारी. १-१-२९॥प्राणः-प्राणोऽस्मि प्रज्ञात्मा तम्मामायुरमृतमित्युपास्स्व' इत्युपास्यतयोपदिष्टमिन्द्रप्राणशब्दनिर्दिष्ट परमेव ब्रह्म , कुत·—तथानुगमात्—तथेति प्रकारवचनः , परब्रह्मप्रकारभूतेषु 'सएष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत: ' इति इन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्द - सामानाधिकरण्येनानुगमात्,तच्चपरमात्मनोऽसाधारणधर्म इति ; इन्द्रस्यापि जन्यत्वकर्मवश्यत्वादिश्रवणाजगत्कारणत्वं न सम्भवतीति भावः ; 'इदि परमैश्वर्ये' इति हि धातुः ; परमैश्वर्यञ्च परमात्मन एवेति ॥

२. शारी.१-१-३९॥ नामरूपव्याकरणादिशास्त्रात् सर्वशब्दै. परमात्मैवाभिधीयत इति दृष्ट्या तज्ज्ञापनायायमिन्द्रशब्देन परमात्मोपदेशः । शास्त्रस्थाहि वामदेवादयः तथैव वदन्ति 'तद्धैतत्पश्यन् ऋषिर्वामदेवः अहम्मनुरभवं सूर्यश्च' इति सूत्रार्थः ॥

३ शारी. १-१-२९॥ इदञ्च सूत्रं वैश्वानराधिकरणस्थम् । जैमिन्याचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मनएव साक्षात्-अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति—मन्यते । अयमभिप्रायः—यथा वैश्वानरशब्द: साधारणोऽपि परमात्मासाधारणधर्मविशेषित:'वैश्वानर: कस्मात् विश्वान्नरान् नयति,विश्व एनं नरा नयन्तीति वा विश्वानर:,विश्वानर एव वैश्वानर:, राक्षसो वायस इति वत् रक्ष एवहि राक्षस. वय एवहि वायस.' इति निरुक्त्यनुरोधेन विश्वेषा नराणां नेतृत्वादिगुणयोगेनपरमात्मानमेवाभिदधातीति निश्चीयते—एव मग्निशब्दोपि 'अग्नि: कस्मात् अग्रणीर्भवति, अग्रं नयति नमयति सन्नमनोक्तौ प्रसन्नो भवतीति स्थूलाद्दृष्टिविधि.' इत्युक्तप्रकारेणाऽग्रनयनादिना —येनैव गुणेन योगात् ज्वलने वर्तते—तद्गुणस्य निरुपाधिकस्य परमात्मनि सम्भवात् अस्मिन् प्रकरणे परमात्मासाधारणधर्मैर्विशेषित: परमात्मानमेवाभिधत्ते—इति ॥

४. सुबाल. ७. ख ॥

५. महोप-१-१ ॥ अत्रायम्भावः—सद्ब्रह्मात्मादिशब्देषु पूर्वं पूर्वं उत्तरोत्तरशब्दंप्रति सामान्यशब्दाः एवम्पूर्वपूर्वं प्रत्युत्तरोत्तरशब्दा विशेषशब्दाः। एवं नारयण शब्दम्प्रति प्रजापाति शम्भुशिवादयः मामान्यशब्दाः—शम्भुः स्वयम्भूर्द्रुहिणः' 'श्वश्श्रेयसं शिवम्भद्रम्' 'विश्वाक्षं विश्वशम्भुवम्' 'शाश्वतं शिवमच्युतम्' 'शिवः शिवानामशिवोऽशिवानाम्' इत्यादिष्वनेकार्थेषु प्रयोगदर्शनात् ,नारायणशब्दस्य तथाऽर्थान्तरे प्रयोगाभावाच्च । तस्मात्—'छागो वा मन्त्रवर्णात्' इति सूत्रन्यायात् सामान्यशब्दानां विशेषपर्यवसानात् ब्रह्मादिसामान्यशब्दानां नारायणविशेषपर्यवसायित्वं युक्तम्—इति ॥

रा॥स्मात् त्वामीशमीड्यं प्रणम्य प्रणिधाय च कायं प्रसादये;यथ कृतापराधस्यापि पुत्रस्य यथाच सख्युः प्रणामपूर्वं प्रार्थितः पिता वा प्रसीदति ; तथा त्वं परमकारुणिकः प्रियः प्रियाय मे सर्वं सोढुमर्हसि ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५

अदृष्टपूर्वमत्यद्भुतमत्युग्रं च तव रूपं दृष्ट्वा हृषितोऽस्मि प्रीतोऽस्मि ; भयेन प्रव्यथितं च मे मनः ; अतस्तदेव तव सुप्रसन्नं रूपं मे दर्शय ; प्रसीद देवेश जगन्निवास-मयि प्रसादं कुरु ; देवानां ब्रह्मादीनामपीश निखिलजगदाश्रयभूत ॥ ४५ ॥

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६

ता॥'तस्मात्'इत्यनेन'अहम्'इत्यनेन चानुकूल्यसंकल्पाद्यङ्गानि सूचितानि।'प्रणिधाय कायम्'इत्यनेन'यद्धि मनसा ध्यायति' इत्युक्तरीत्या करणपूर्तिस्सूचिता। प्रणम्य प्रसादये-प्रसादार्थं प्रणमामीत्यर्थः । 'प्रसादये' 'सोढुम्'इत्याभ्यामर्थसिद्धं वदन् दृष्टान्तदार्ष्टान्तिकयोस्साधर्म्यमुपपादयति—**यथाकृतापराधस्यापीत्यादिना** ॥ ४४ ॥

विचित्रस्याप्यदृष्टपूर्वस्यैवाश्चर्यविषयत्वदर्शनात्'अदृष्टपूर्वम्'इत्यनेन फलितमाह —**अत्यद्भुतमिति**। 'भयेन च प्रव्यथितं मनो मे' इत्यनेनाक्षिप्तम् 'आख्याहि मे को भवानुग्ररूपः' इत्यत्रोक्तं विशेषणमाह—**अत्युग्रंचेति** । 'भयेनच' इत्यत्र चशब्दस्य निष्प्रयोजनत्वादुक्तव्यथाहेत्वन्तरसमुच्चयार्थत्वमयुक्तमित्युक्तप्रीतिसमुच्चयार्थत्वमभिप्रेत्य व्यवहितान्वयमाह—**प्रव्यथितं च मे मन** इति । पूर्वार्धोक्तस्य व्यथासहितप्रीतिजनकत्वस्योत्तरार्धार्थहेतुत्वमभिप्रेत्याह—**अत**इति । तच्छब्दस्य पूर्वप्रसिद्धाकारपरामर्शित्वेन तदभिप्रेतमाकारमाह—**सुप्रसन्नमिति**। अनेन केवलप्रीतिहेतुत्वं सूचितम्। प्रपन्नस्य रक्षणमवश्यं कार्यमित्यभिप्रायेण—**मे दर्शयेत्युक्तम्**।'देव''देवेश'इति संबोधनद्वयेन'तमीश्वराणां परमं महेश्वरं तं दैवताना परमं च दैवतम्'इति श्रुत्यर्थोऽभिप्रेत इत्याशयेन - **देवानां ब्रह्मादीनामपीशेत्युक्तम्**।दृश्यमानरूपस्य 'तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा' इति जगदाश्रयत्वेन दृश्यमानत्वात्'जगन्निवास'इत्यनेन तदुच्यत इत्यभिप्रयन्नाह—**जगदाश्रयभूतेति** ॥ ४५ ॥

प्र-पा॥१. यजुषि कां-६-१-७॥ यद्धि मनसा चेतयते तद्वाचा वदति मनसीत्याह यद्धिमनसाभिगच्छति तत्करोति धीरसीत्याह यद्धि मनसा ध्यायति त द्वाचा वदति' ॥
२. श्वे. ६. ७ ॥
३. गी. ११. १३ ॥

शं॥यत एवम्— तस्मात् प्रणम्य नमस्कृत्य,'प्रणिधाय प्रकर्षेण नीचैः धृत्वा कायं शरीरं, प्रसादये प्रसादं कारये त्वाम् अहम् ईशम् ईशितारम्, ईड्यं स्तुत्यम्। त्वं पुनः पुत्रस्य अपराधं, पिता यथा क्षमेत सर्वं, सखा इव सख्युः अपराधं, यथा वा प्रियः प्रियायाः अपराधं क्षमते, एवम् अर्हसि हे देव सोढुं प्रसहितुं इत्यर्थः ॥ ४४ ॥

अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वम् इदं विश्वरूपं तव मया अन्यैर्वा, तत् अहं दृष्ट्वा हृषितः अस्मि । भयेन च प्रव्यथितं मनः मे । अतः तदेव मे मम दर्शय हे देव रूपं यत् मत्सखम् । प्रसीद देवेश जगन्निवास, जगतो निवासो जगन्निवासः, हे जगन्निवास! ॥

रा॥तथैव पूर्ववत् किरीटिनं गदिनं चक्रहस्तं त्वां द्रष्टुमिच्छामि, अतस्तेनैव पूर्वसिद्धेन चतुर्भुजेन रूपेण युक्तो भव, सहस्रबाहो विश्वमूर्ते—इदानीं सहस्रबाहुत्वेन विश्वशरीरत्वेन दृश्यमानरूपस्त्वं तेनैव रूपेण युक्तो भवेत्यर्थः ॥ ४६ ॥

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७

यन्मे तेजोमयं तेजसां राशिं विश्वं विश्वात्मभूतम् अनन्तम् अन्तरहितं प्रदर्शनार्थमिदम्; आदिमध्यान्तरहितम्, आद्यं-मद्व्यतिरिक्तस्य कृत्स्नस्यादिभूतं त्वदन्येन केनापि न दृष्टपूर्वं रूपं तदिदं प्रसन्नेन मया मद्भक्ताय ते दर्शितम्, आत्मयोगात्-आत्मनस्सत्यसंकल्पत्वयोगात् ॥ ४७ ॥

अनन्यभक्तिव्यतिरिक्तैस्सर्वैरप्युपायैर्यथावदवस्थितोऽहं द्रष्टुं न शक्य इत्याह—

---

ता॥'तथैव' इत्यस्य पूर्वं जगदाश्रयमत्यद्भुतं रूपं द्रष्टुमिच्छन् तथैव पूर्वरूपं द्रष्टुमिच्छामीत्यर्थभ्रमं व्युदस्यन् अतीतावस्थाविशिष्टस्य कथं प्रदर्शनमिति शङ्कां चार्थात्परिहरन् अन्वयभेदेन तद्व्याचष्टे—**तथैव पूर्ववत्किरीटिन**मिति। पूर्वदृष्टसजातीयमेव द्रष्टुमिच्छामीत्यर्थः। 'रूपेण' इत्यत्र तृतीयायाः करणार्थत्वासंभवात्—**रूपेण युक्तो** भवेत्युक्तम्। सहस्रबाहूदरविश्वमूर्तिविशिष्टस्य चतुर्भुजरूपयुक्तत्वासंभवं कालभेदेन परिहरति—**इदानी**मिति ॥ ४६ ॥

'तेजोमयम्' इत्यत्र मयटः प्राचुर्यार्थत्वमभिप्रेत्याह—**तेजसां राशि**मिति। **विश्वात्मभूत**मिति विश्वव्यापकमित्यर्थः। अचेतनस्य हि नात्मत्वं संभवति। 'अनादिमध्यान्तम्' इति पूर्वमुक्तत्वात् 'अनन्तम्' इत्येतदितरोपलक्षणमित्याह—**प्रदर्शनार्थमिद**मिति। 'आद्यम्' इत्यत्र प्रतिसंबन्धिविशेषानिर्देशात् **कृत्स्नस्यादिभूत**मित्युक्तम्। 'त्वदन्येन' इत्यनेनार्थसिद्धमाह—**केनापी**ति। प्रसादस्य निर्हेतुकत्वे वैषम्यनैर्घृण्यप्रसङ्गात् 'ते' इत्यनेनाभिप्रेतं प्रसादहेतुमाह—**मद्भक्ताय त** इति। योगशब्दस्य ध्यानपरत्वभ्रमव्युदासाय व्याचष्टे—**आत्मनस्सत्यसङ्कल्पत्वयोगा**दिति ॥ ४७ ॥

कथमेतद्रूपस्य मदन्येन केनाप्यदृष्टपूर्वत्वम्? येनकेनचिदुपायेनान्यैरपि दर्शनसम्भवादित्यत्र एतदुपपादकत्वेनोत्तरश्लोकमवतारयति—**अनन्यभक्तिव्यतिरिक्तै**रित्यादिना। 'एवंरूपः' इत्यस्याप्रा-

---

शं॥किरीटिनं किरीटवन्तं, तथा गदिनं गदावन्तं, चक्रहस्तम् इच्छामि त्वां प्रार्थये त्वां द्रष्टुम् अहं तथैव, पूर्ववत् इत्यर्थः। यतः एवं तस्मात् तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो—वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते उपसंहृत्य विश्वरूपं, तेनैव रूपेण भव इत्यर्थः ॥ ४६ ॥

अर्जुनं भीतम् उपलभ्य, उपसंहृत्य विश्वरूपं, प्रियवचनेन आश्वासयन् श्रीभगवान् उवाच—मया प्रसन्नेन, प्रसादो नाम त्वयि अनुग्रहबुद्धिः, तद्वता प्रसन्नेन मया तव हे अर्जुन! इदं परं रूपं विश्वरूपं दर्शितम् आत्मयोगात् आत्मनः ऐश्वर्यस्य सामर्थ्यात् तेजोमयं तेजःप्रायं विश्वं समस्तम् अनन्तम् अन्तरहितम् आदौ भवम् आद्यं यत् रूपं मे मम त्वदन्येन त्वत्तः अन्येन केनचित् न दृष्टपूर्वम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।
एवं रूपश्शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८

रा॥एवंरूपो यथावदवस्थितोऽहं मयि भक्तिमतस्त्वत्तोऽन्येन *एकान्तभक्तिरहितेन केनापि पुरुषेण वेदयज्ञादिभिः केवलैर्द्रष्टुं न शक्यं ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ४९

ईदृशघोररूपदर्शनेन ते या व्यथा यश्च विमूढभावो वर्तते, तदुभयं माभूत् त्वया-

ता॥कृतरूपविशिष्टपरत्वे कृष्णावताररूपस्य सर्वैर्दृश्यमानत्वानुपपत्त्या मनुष्यादिविसजातीयत्वाप्राकृतत्वारूपपरत्वमभिप्रेत्याह—**यथावस्थितोऽहमिति** । एकान्तभक्तिरहितानामवताररूपदर्शनं तु मनुष्यादिसजातीयत्वप्राकृतत्वादिरूपेणायथावस्थितदर्शनमेवेति भावः। 'त्वत्'इत्येतत्पृथक्पदं भक्तिमत्परं चेत्यभिप्रयन्नाह - **मयि भक्तिमतस्त्वत्तोऽन्येनेति** । अत्रान्यपदेन अर्जुनान्यत्वविवक्षायां 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुंच तत्त्वेन' इत्युत्तरग्रन्थविरोधापत्त्या भक्तिमदन्यत्वमात्रं विवक्षितमित्याह—**एकान्तभक्तिरहितेनकेनापीति**। वेदशब्दोऽर्थवत्तया श्रुतवेदपरः। तेन 'श्रोतव्यः' इत्युक्तश्रवणं लभ्यत इत्यध्ययनस्य पृथगुक्तत्वात्क्रियाशब्देन गोबलीवर्दनयाद्यज्ञाध्ययनादिव्यतिरिक्तहोमादिक्रिया उच्यन्त इत्यभिप्रेत्य—**वेदयज्ञादिभिरित्युक्तम्** । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुत्या वेदयज्ञादीनां भक्तिद्वारा दर्शनसाधनत्वप्रतीतेः कथमयं निषेध इति शङ्कावारणाय—**केवलैरित्युक्तम्** ॥ ४८ ॥

'दृष्ट्वा रूपं' 'मा ते व्यथा माच विमूढभावः'इत्यत्र क्रियापदविशेषाश्रवणादेतद्रूपदर्शनेन व्यथा, तेन, नच विमूढभाव इति प्रतीतिस्स्यात् ; अभूदित्यध्याहारेऽपि एतद्रूपदर्शनस्य व्यथाद्यभावहेतुत्वप्रतीतिस्स्यात्; तद्वारणाय व्याचष्टे—**ईदृशघोररूपदर्शनेनेत्यादिना** । तदेवेदं मे रूपं पुनः पश्येत्यु-

प्र-पा॥*ऐकान्तिकात्यान्तिक.पा॥ १.गी.११.५४॥ २. बृ-उप-६-४-२२॥ तम् 'एषसर्वेश्वरः एष भूतपालः एष सेतुर्विधरणः एषां लोकाना मसम्भेदाय' इत्यत्रोक्तं सर्वेश्वरत्व सर्वभूतपतित्व सर्व रक्षकत्व सर्वविधरणत्वादियुक्तपरमात्मानम्, वेदानुवचनेन वेदाध्ययनेन, यज्ञेन, दानेन, अनाशकेन अनशनलक्षणेन तपसा, विविदिषन्ति—ज्ञातुमिच्छन्ति । आशः अशनम् , भावेघञन्तः । अनाशः अनशनम् । स्वार्थेकः । तच्चाऽनशनम् कामानशनात्मकम् । नतु सर्वात्मनानशनम् । देहपात प्रसंगात् । यद्वा न विद्यते-आशा-फलेषु-यस्य-तत्-अनाशम् । स्वार्थेकप्रत्ययः । अनाशकं-तादृशेन तपसा फलाभिसंधिरहितेनेति यावत्। इति-श्रुतेरर्थः ॥

शं॥मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्तः इति तत् स्तौति—न वेदयज्ञाध्ययनैः चतुर्णामपि वेदानाम् अध्ययनैः यथावत् यज्ञाध्ययनैश्च । वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथक् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थं, तथा न दानैः न च क्रियाभिः अग्निहोत्रादिश्रौतादिभिः, न अपि तपोभिः उग्रैः चान्द्रायणादिभिः, घोरैः, एवंरूपः यथादर्शितविश्वरूपः न शक्यः अहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तः अन्येन कुरुप्रवीरः ॥ ४८ ॥

मा ते व्यथा, माभूत् ते भयम् , मा च विमूढभावः विमूढचित्तता दृष्ट्वा उपलभ्य

रा॥भ्यस्तपूर्वमेव सौम्यरूपं दर्शयामि तदेवेदं मम रूपं प्रपश्य ॥ ४९ ॥
सञ्जय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं भूत्वा पुनस्सौम्यवपुर्महात्मा ॥ ५०

एवं पाण्डुतनयं भगवान् वसुदेवसूनुरुक्त्वा भूयः स्वकीयमेव चतुर्भुजं रूपं दर्शयामास अपरिचितस्वरूपदर्शनेन भीतमेनं पुनरपि परिचितसौम्यवपुर्भूत्वा आश्वासयामस च महात्मा— सत्यसंकल्पः। अस्य सर्वेश्वरस्य परमपुरुषस्य परस्य ब्रह्मणो जगदुपकृतिमर्त्यस्य वसुदेवसूनोश्चतुर्भुजमेव स्वकीयं रूपम्; कंसाद्भीतवसुदेवप्रार्थनेन आकंसवधाद्भुजद्वयमुपसंहृतं पश्चादाविष्कृतंच 'जातोऽसि देव देवेश शङ्खचक्रगदाधर। दिव्यं रूपमिदं देव प्रसादेनोपसंहर *'उपसंहर विश्वात्मन् रूपमेतच्चतुर्भुजम्' इतिहि प्रार्थितम्; शिशुपालस्यापि द्विषतोऽनवरतभावनाविषयश्चतुर्भुजमेव वसुदेवसूनोरूपम् †'उदारपीवरचतुर्बाहुं शङ्खचक्रगदाधरम्' इति। अतः पार्थेनात्र 'तेनैव रूपेण चतुर्भुजेन' इत्युच्यते॥

ता॥क्त्या भीत्यादिहेतुभूतमेवेदं पुनः पश्येत्यर्थभ्रमस्स्यात्; अतस्तच्छब्दमन्यथा व्याचष्टे—**अभ्यस्तपूर्वमेव सौम्यं रूपमिति**। वर्तमानत्वात्तदेवेदंशब्देन रूपद्वयस्यैककालीनत्वभ्रमव्युदासाय वर्तमानसामीप्यपरं तदित्यभिप्रायेण— **दर्शयामी**त्यध्याहृतम्। तथाचेदंशब्दः प्रदर्श्यमानपर इति भावः॥

सहजप्रीतिद्योतनायाह—**एवं पाण्डुतनयं वसुदेवसूनु**रिति। 'स्वकम्' इत्यत्र स्वपदं कृष्णावतारपरमित्यभिप्रेत्य—**स्वकीयमेव चतुर्भुजं** रूपमित्युक्तम्। 'भीतमेनम्' इत्यत्र इदानीं प्रदर्शितचतुर्भुजरूपदर्शनेन भीतत्वभ्रमव्युदासायाह— **अपरिचितस्वरूपदर्शनेने**ति। कथमस्य इच्छामात्रेण नानारूपपरिग्रहादिकमित्यतस्तदुपपादकत्वेनोक्तं 'महात्मा' इत्येतत्प्रकृतोपयोगितया व्याचष्टे—**सत्यसंकल्प** इति। अप्रतिहतसंकल्पत्वात्सर्वमुपपन्नमिति भावः। कृष्णस्य द्विभुजतया नन्दव्रजे अवस्थानाच्चतुर्भुजं रूपं कथमेतस्य स्वकीयमित्यतस्तत्प्रमाणं तदुपपादयति—**अस्य सर्वेश्वरस्ये**त्यादिना। समाश्रयणीयतौपयिकपरत्वसौलभ्यव्यञ्जनाय—**अस्य सर्वेश्वरस्ये**त्यादिविशेषणानि। स्वकीयं रूपमिति कृष्णावतारस्य सहजं रूपमित्यर्थः॥ ५०॥

प्र-पा॥ *वि-पु-५ ३-१३॥ 'जानातु माऽवतारन्ते कंसोऽयं दितिजन्मजः' इत्युत्तरार्धम्। दितिजन्मजः-दितिजन्मा-दैत्यः-तस्माज्जातः; द्रुमिडाख्येन दैत्येनोग्रसेनस्य वेषधरेण तद्भार्यायां चौर्येणोत्पादितः कंस इति हरिवंशोक्तेः' इति श्रीविष्णुचित्तीये॥ †वि पु ४-१५ १३॥

शं॥रूपम् ईदृक् यथादर्शितं मम इदम्। व्यपेतभीः विगतभीः विगतभयः, प्रीतमनाः च सन् पुनः भूयः तं तदेव चतुर्भुजं रूपं शङ्खचक्रगदाधरं तव इष्टं रूपम् इदं प्रपश्य॥ ४९॥

इति एवम् अर्जुनं वासुदेवः तथाभूतं वचनम् उक्त्वा, स्वकं वसुदेवस्य गृहे जातं

आ॥स्वकं रूपं तु भ्रान्तप्रतीत्या। अन्यथा तदपि स्वकमेव। प्रमाणानि तूक्तानि पुरस्तात्॥ ५०॥

जा॥स्वकं रूपं दर्शयामासेति कृष्णरूपस्य स्वकत्वविशेषणात् विश्वरूपं न स्वकमिति प्रतीतिः स्यादत आह—**स्वकमिति**। कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रान्तप्रतीत्यनुवादेनोच्यत इत्यर्थः। कुत एतदित्यत आह —**अन्यथेति**। प्रमाणप्रतीत्येत्यर्थः। कानि तानि प्रमाणानीत्यत आह—**प्रमाणानी**ति। द्वितीयान्ते॥ ५०॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तस्सचेताः प्रकृतिं गतः ॥ ५१

रा॥अनवधिकातिशयसौन्दर्यसौकुमार्यलावण्यादियुक्तं तवैवासाधारणं मनुष्यत्वसंस्थानसंस्थितमतिसौम्यमिदं तव रूपं दृष्ट्वा इदानीं सचेतास्संवृत्तोऽस्मि प्रकृतिं गतश्च ॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२

ममेदं सर्वस्य प्रशासनेऽवस्थितं सर्वाश्रयं सर्वकारणभूतं रूपं यद्दृष्टवानसि ; तत्सुदुर्दर्शं न केनापि द्रष्टुं शक्यम्; अस्य रूपस्य देवा अपि नित्यं दर्शनकाङ्क्षिणः,नतु दृष्टवन्तः ॥ ५२ ॥

कुत इत्यत्राह—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३
भक्त्या त्वदनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४

वेदैरध्यापनप्रवचनाध्ययनश्रवणजपविषयैर्यागदानहोमतपोभिश्च,मद्भक्तिविरहितैः

ता॥'मानुषं रूपम्' इत्यस्य कर्मजन्यप्राकृतरूपपरत्वभ्रमव्युदासायेदंशब्दाभिप्रेतं वदंस्तद्व्याचष्टे —अनवधिकातिशयसौन्दर्येत्यादिना ॥ ५१ ॥

यच्छब्दस्य प्रसिद्धपरामर्शित्वेन प्रसिद्धाकारानाह—सर्वस्य प्रशासनेऽवस्थितमित्यादिना । 'नित्यम्' इत्यस्य पदार्थैकदेशदर्शनान्वयस्यागतिकस्य आश्रयणमनुचितमित्यभिप्रेत्याकाङ्क्षाया नित्यत्वं दर्शनाभावमवगमयतीत्याशयेनाह—न तु दृष्टवन्तइति ॥५२॥

उत्तरश्लोकस्यैतदुपपादकतया न पौनरुक्त्यमित्याशयेन तमवतारयति --कुतइत्यत्राहेति । वेदानां स्वरूपेण साधनत्वाप्रसक्त्या तन्निषेधोऽनुपपन्न इत्यतस्तदभिप्रेतमाह—वेदैरध्यापनप्रवचनेति। दानेज्याकथनं होमस्याप्युपलक्षणमित्यभिप्रयन्नाह— यागदानहोमतपोभिश्चेति । भक्तिद्वारा साधनत्वस्य 'तमेतं वेदानुवचनेन'इत्यादिश्रुत्यवगतत्वात्—मद्भक्तिविरहितैरित्युक्तम्।एवंविधशब्दो मानुष-

प्र-पा ॥ १. बृ. उप. ६-४-२२ ॥ ६४६-पुटे. व्याख्यातम् ॥

शं॥रूपं दर्शयामास दर्शितवान् भूयः पुनः आश्वासयामास च आश्वासितवान् भीतम् एनं, भूत्वा पुनः सौम्यवपुः प्रसन्नदेहः महात्मा ॥ ५० ॥

दृष्ट्वा इदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन, इदानीं अधुना अस्मि संवृत्तः सञ्जातः—किं ? —सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतः च अस्मि॥ ५१॥

सुदुर्दर्शं सुष्ठु दुःखेन दर्शनम् अस्य इति सुदुर्दर्शम् इदं रूपं दृष्टवान् असि यत् मम, देवाः अपि अस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणः; दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तः, न द्रक्ष्यन्ति च इति अभिप्रायः ॥ ५२ ॥

रा॥केवलैः यथावदवस्थितोऽहं द्रष्टुमशक्यः; अनन्यया तु भक्त्या तत्त्वतश्शास्त्रैर्ज्ञातुं तत्त्वतस्साक्षात्कर्तुं तत्त्वतः प्रवेष्टुं च शक्यः। तथाच श्रुतिः—*'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति ॥ ५३ ॥ ५४ ॥

---

ता॥त्वादिभ्रमानर्हत्वाप्राकृतत्वादिपर इत्याह—**यथावदवस्थितोहमिति** । न केवलं साक्षात्कारमात्रे साधनत्वेन भक्तिरपेक्षिता; किंतु '¹शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इत्यादिवच्छास्त्रतोऽर्थनिर्णये साक्षात्कारानन्तरभाविन्यां प्राप्तावपीत्यभिप्रायेण'ज्ञातुं' 'प्रवेष्टुम्' इत्युभयं पूर्वश्लोकाप्रसक्तमिह प्रसञ्जितम्।'तत्त्वतः' इत्येतत्त्रिष्वप्यविशेषादपेक्षितत्वाचान्वितम्। तत्त्वतः प्रवेशः परिपूर्णप्राप्तिः,यथावस्थितसर्वाकारेणानुभव इत्यर्थः । तेन व्यूहविभवादिमात्रप्राप्तिव्यवच्छेदः । स्मर्यन्ते च साक्षान्मुक्तैरर्वाञ्चः प्राप्तिपर्वभेदाः—'²लोकेषु विष्णोर्निवसन्ति केचित्समीपमृच्छन्ति च केचिदन्ये । अन्येतु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः'इति।'³एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्' इत्यस्य व्याख्याने यादवप्रकाशैश्चोक्तम्।'इदमल्पीयसीं योगसिद्धिं गतस्य मृतस्य फलं,यदि प्रथमां योगसिद्धिं गतो म्रियते, त्यजति वा योगं,श्वेतद्वीपे जायते;भगवत्सालोक्यं वा याति;यदि ततोऽप्यधिकां योगसिद्धिं गतो म्रियते; विष्णुपार्षदो भवति; यदि ततोऽप्यधिकां, पार्षदेश्वरो भवति; यदि ततोऽप्यधिकां. द्वारपालो भवति; यदिततोऽप्यधिकां, भगवतोऽङ्गसंवाहको भवति ; यदि ततोऽप्यधिकां मन्त्रिस्थानीयः पृथगैश्वर्ययुक्तो भवति;यदि पूर्णां योगसिद्धिं गतो म्रियते,भगवत्सायुज्यं गतो मुक्तः परमैश्वर्ययुक्तो भवति'इति वैष्णवेषु योगशास्त्रेषु मर्यादा।तदेतत्सर्वमिह सूचितं भगवता 'अथ वा योगिनाम्' इत्यादीनीति । ज्ञानदर्शनप्राप्तिहेतुत्वे भक्तेः पर्वभेदान्नान्योन्याश्रयणादिदोषः। पूर्वजन्मसुकृतमूलसात्त्विकजनसंवादादिजनितं यथावच्छ्रवणानुगुणं किञ्चिदानुकूल्यरूपं भक्तिमात्रं शास्त्रजन्यज्ञानोत्पत्तौ सहकारि भवति । उत्कटदिदृक्षागर्भा तु परभक्तिस्साक्षात्कारहेतुः; साक्षात्कृते तु परिपूर्णानुभवाभिनिवेशलक्षणा परमभक्तिः प्रवेशहेतुरिति। अत्र 'अनन्यया'इति पदं प्रागुक्तप्रक्रियया अनन्यप्रयोजनयेति भाव्यम्। अनन्यदेवताकयेत्येके। ऐक्यानुसन्धानविवक्षा तु प्रागेव दूषिता; प्रत्यक्षादिविरुद्धाच। तदेतदखिलमभिप्रेत्य संगृहीतम् 'एकादशे स्वमाहात्म्यसाक्षात्कारावलोकनम् । दत्तमुक्तं विदिप्राप्त्योर्भक्त्येकोपायता तथा' इति।भक्तिप्रशंसापरत्वशङ्कामपाकरोति—**तथाचेति**। 'नायमात्मा' इत्यादौ '⁴न पृथिव्यामग्निश्चेतव्यः' इत्यादाविव केवलानां निषेधः । यच्छब्दानूदितो वरणीयताहेतुगुणविशेषो भक्तिरेवेत्यर्थस्वभावादुपबृंहणबलाच सिद्धम् । अत्र तनुशब्दस्य विग्रहपरत्वे स्वरूपादिकं तत्परत्वे च विग्रहादिकमर्थलब्धम् ॥ ५३ ॥ ५४ ॥

---

प्र-पा॥ *कठो. १-२-२३. मु. ३-२-३ ॥
१. भारते. उद्यो. ६८-५ ॥　२ ॥
३. गी ६-४२ ॥
४. यजु. कां. ५-२-७-२ ॥

---

शं॥न अहं वेदैः न तपसा न दानेन न च इज्यया शक्यः एवंविधः यथादर्शितप्रकारः द्रष्टुं; दृष्टवान् असि मां यथा ॥ ५३ ॥

कथं पुनः शक्यः इति? उच्यते—भक्त्या तु । किंविशिष्टया इति? आह—अनन्यया अपृथग्भूतया—भगवतः अन्यत्र पृथक् न कदाचिदपि भवति। सर्वैरपि करणैः वासुदेवादन्यत् न उपलभ्यते यथा, सा अनन्या भक्तिः, तया अनन्यया भक्त्या शक्यः अहम् एवंविधः विश्वरूपप्रकारः हे अर्जुन! ज्ञातुं शास्त्रतः—न केवलं ज्ञातुं, शास्त्रतः द्रष्टुं च साक्षात्कर्तुं, तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं, परन्तप! ॥ ५४ ॥

**मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।**
**निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव ॥** ५५

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विश्वरूपसन्दर्शनयोगो नाम एकादशोऽध्यायः ॥ ११ ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

रा॥वेदाध्ययनादीनि सर्वाणि कर्माणि मदाराधनरूपाणीति यः करोति,स मत्कुर्मकृत्, मत्परमः-सर्वेषामारम्भाणामहमेव परमोद्देश्यो यस्य स मत्परमः; मद्भक्तः-अत्यर्थमत्प्रियत्वेन मत्कीर्तनस्तुतिध्यानार्चनप्रणामादिभिर्विना आत्मधारणमलभमानो मदेकप्रयोजनतया यस्सततं तानि करोति,स मद्भक्तः; सङ्गवर्जितः मदेकप्रियत्वेनेतरसङ्गमसहमानः; निर्वैरस्सर्वभूतेषु मत्संश्लेषवियोगैकसुखदुःखस्वभावत्वात्स्वदुःखस्य स्वापराधनिमित्तत्वानुसंधानाच्च सर्वभूतानां परमपुरुषपरतन्त्रत्वानुसंधानाच्च सर्वभूतेषु वैरनिमित्ताभावात्तेषु निर्वैरः य ; एवं भूतस्स मामेति - मां यथावदवस्थितं प्राप्नोति ;

---

ता॥'नाहं वेदैः'इत्यादेः'वेदानुवचनेन'इत्यादिश्रुतिविरोधपरिहाराय भक्त्यङ्गभावेन वेदानुवचनादीनामुपयोगं वदन् 'प्रवेष्टुम्' इत्युक्तं प्राप्तिहेतुं भक्त्यवस्थाविशेषं विविनक्ति—**मत्कर्मकृदिति** । **'नाहं वेदैः'** इत्यादिनोक्तान्येव कर्माणि भगवति समर्पणान्मत्कर्मशब्देनोच्यन्ते, कीर्तनादीनि तु प्रागुक्तानि भक्त्यन्तर्गतत्वान्मद्भक्तशब्देऽनुप्रवेशमर्हन्तीत्यभिप्रायेणाह—**वेदाध्ययनेति** । कर्मप्रसङ्गात्तत्साध्यतया बुद्धिस्थं फलमिह मत्परमशब्देनोच्यत इत्याह—**सर्वेषामिति**। लौकिकानामन्नपानादिस्थानेऽस्य कीर्तनादिकमित्यभिप्रायेणाह—**आत्मधारणमलभमानइति** । भक्तेः काष्ठाप्राप्तिदशायां यादृशी निस्सङ्गता, ता सहेतुकां दर्शयति—**मदेकप्रियत्वेनेति** । तृषितस्यामृतधारायां तृणादिनिरोधवन्मन्यमानं सङ्गमेवैनं यथा स्वयं विरक्तो वर्जयति, तथा स्वय सङ्गे जातोद्वेग इत्यभिप्रायेण—**इतरसङ्गमसहमान** इत्युक्तम् । तादृश्यां भक्तिकाष्ठायां न केवल शास्त्रवश्यत्वेन निर्वैरता; अपितु कारणाभावात् कार्याभाव इत्याह—**मत्संश्लेषेति** । परमात्मनि रक्ततया तदितरविरक्तस्य सांसारिकक्षुद्रसुखदुःखयोरुपेक्षकत्वात्तन्निवर्तकेषु तत्प्रवर्तकेषु च नास्य वैरसभवः। नच स्वापराधं जानतः परो द्वेषविषयः; नच कशादिवत्परतन्त्रतयावगताय कश्चिदनुन्मत्तः कुप्येत्;आत्मन इव परेषामपि विश्वरूपभगवद्रूपत्वानुसन्धाने कथं वैरावकाश इति भावः। **एवंभूतः**—एवंविधः।' प्रवेष्टुम्'इति प्रागुक्तानुसन्धानेनाह—**मां यथावदवस्थितमिति**।प्रवेशप्राप्त्यादिशब्दानामन्यार्थतां कुदृष्टयभिमतां निराकर्तुं परमनिश्श्रेयसरूपायाः प्राप्तेस्स्वरूपं

---

शं॥अधुना सर्वस्य गीताशास्त्रस्य सारभूतः अर्थः निश्श्रेयसार्थः अनुष्ठेयत्वेन समुच्चित्य उच्यते—मत्कर्मकृत् मदर्थं कर्म मत्कर्म, तत् करोतीति मत्कर्मकृत् । मत्परमः—करोति भृत्यः स्वामिकर्म, न तु आत्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते; अयं तु मत्कर्मकृत् मामेव परमां गतिं प्रतिपद्यते इति मत्परमः, अहं परमः परा गतिः यस्य सः अयं मत्परमः । तथा मद्भक्तः मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन च भजते इति मद्भक्तः । सङ्गवर्जितः धनपुत्रमित्रकलत्रबन्धुभोगेषु सङ्गवर्जितः प्रीतिस्नेहवर्जितः । निर्वैरः निर्गतवैरः सर्वभूतेषु शत्रुभावरहितः आत्मनः अत्यन्तापकारप्रवृ-

रा॥**निरस्ताविद्याद्यशेषदोषगन्धो मदेकानुभवो भवतीत्यर्थः** ॥ ५५ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये एकादशोऽध्यायः ॥ ११ ॥

श्रीमते रामानुजाय नमः.

---

**ता॥शोधयति-निरस्तेति।**निरस्तत्वमपुनरङ्कुरविनष्टत्वम्। अविद्या-अज्ञानान्यथाज्ञानतत्कारणकर्मादिरूपा। पूर्वावस्थायामपि कतिपयाविद्यादिनिवृत्तिरस्तीति तद्व्यवच्छेदायाशेषपदम् । सवासननिरासद्योतनाय गन्धशब्दः । **मदेकानुभव** इति—'सर्वं ह पश्यः पश्यति' इत्युक्तं सर्वमपि सर्वशरीरोऽहमेव । तथाच श्रुत्यन्तरं '[2]ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाविशन्ति' इति—इति भावः ॥ ५५ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य

कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायाम्

एकादशोऽध्यायः ॥ ११ ॥

---

**प्र-पा॥** १ छा-उप-७-२६-२।।'नपश्योमृत्युम्पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः'।। अस्यार्थः-पश्यः-ब्रह्म दर्शी, मृत्युः मरणम् , रोगम्-दुःखसाधनं जगति प्रतिकूलतां नपश्यति, सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण संकल्पितानर्थान् सर्वस्मिन् काले प्राप्नोतीत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवतीति पर्यवसितोऽर्थः—इति ॥

२. मुण्ड-उप-३-२-७ ॥ संप्राप्यैनदमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं .विशन्ति । ऋषयः तत्त्वदर्शिनः, एनं परमात्मानम् , सम्प्राप्य-जीवद्दशायामेवानुभूय, ज्ञानेन तेनानुभवेन, तृप्ताः- सन्तुष्टाः, कृतात्मानः लब्धात्मसत्ताकाः, अपगतविषयाशाः,अतएव प्रशान्ताः-निगृहीतेन्द्रियाश्च ये सन्ति, ते सर्वदेशावच्छेदेन अन्तर्बहिश्च सर्ववस्तुगतं परमात्मानं देशविशेषविविष्टम्प्राप्य , युक्तात्मानः - आविर्भूतब्राह्मरूपविशिष्टात्मानः, धर्मभूतज्ञानेन सर्वं वस्तुगत्या प्राप्नुवन्ति सर्वमनुभवन्तीत्यर्थः ॥

---

**शं॥त्वेष्वपि । यः ईदृशः सः माम् एति,अहमेव तस्य परा गतिः,न अन्या काचित् भवति । अयं तव उपदेशः मया उपदिष्टः हे पाण्डव इति** ॥ ५५ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ

श्रीमद्गीताभाष्ये एकादशोऽध्यायः ॥ ११ ॥

---

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये एकादशोऽध्यायः ॥ ११ ॥

---

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां

जयतीर्थमुनिविरचितायाम् एकादशोऽध्यायः ॥ ११ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

एकादशे * स्वयाथात्म्यसक्षात्कारावलोकनम् ।
दत्तमुक्तं विदिप्राप्त्योर्भक्त्येकोपायता तथा ॥ १५ ॥

श्रीमद्यामुनमुनये नमः ॥

---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

साक्षात्कारहेतुभूतमवलोकनं **साक्षात्कारावलोकनम्**। अवलोक्यतेऽनेनेति अवलोकनमिह दिव्यं चक्षुः। **विदिप्राप्त्योरि**ति दर्शनस्याप्युपलक्षणम् । तथाहि गीयते—'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप'इति। अयन्तु सङ्ग्रहो द्वादशारम्भे सङ्गतिं विवक्षद्भिर्व्याख्यातः—'भक्तियोगनिष्ठानां प्राप्यभूतस्य परस्य ब्रह्मणो भगवतो नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामायार्जुनायानवधिकातिशयकारुण्यौदार्यसौशील्यादिगुणसागरेण सत्यसङ्कल्पेन भगवता स्वैश्वर्यं यथावस्थितं दर्शितम् । उक्तं च 'तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्येकलभ्यत्वम्'—इति ॥ १५ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

* स्वमाहात्म्य. पा ॥

# श्रीमद्भगवद्गीता

## द्वादशोऽध्यायः.

अर्जुन उवाच—

रा॥भक्तियोगनिष्ठानां प्राप्यभूतस्य परस्य ब्रह्मणो भगवतो नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामायार्जुनायानवधिकातिशयकारुण्यौदार्यसौशील्यादिगुणसागरेण सत्यसंकल्पेन भगवता स्वैश्वर्यं यथावदवस्थितं दर्शितम्; उक्तं च तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्येकलभ्यत्वम्। अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनात् भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुसुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्ते । भगवदुपासनस्य प्राप्यभूतोपास्यश्रैष्ठ्यात् श्रैष्ठ्यं तु 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' इत्यत्रोक्तम्—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १

ता॥प्रसक्ताया भक्तेश्श्रैष्ठ्यादिकमुच्यत इति द्वादशाध्यायार्थसङ्गतिं वक्तुं पूर्वोक्तमनुवदन् भक्तियोगप्रकरणे वैश्वरूप्यप्रदर्शनसङ्गतिमप्यर्थाद्विविनक्ति—**भक्तियोगनिष्ठानामि**ति। साक्षात्कृते हि पूर्णोपासनं शक्यम्, उपास्यत्वफलत्वोपयुक्ताकारेण तत्प्रकाशनं च युक्तमिति भावः । प्रस्तुतसाक्षात्कारादिकारणप्रधानसङ्गतिस्थलमाह—**उक्तंचे**ति । स्वप्रकाशनहेतुः कारुण्यादिकम् । तदैव कार्यसिद्ध्यर्थं सत्यसङ्कल्पत्वोक्तिः । उपायफलनिर्देशानन्तरं फलाविलम्बाद्युक्तिरिति सङ्गतिमाह—**अनन्तर**मिति । एतेन 'भक्तिशैघ्र्यमुपायोक्तिरशक्तस्यात्मनिष्ठता । तत्प्रकारास्त्वतिप्रीतिर्भक्तेर्द्वादश उच्यते' इति सङ्ग्रहश्लोकोऽपि व्याख्यातः । 'अतिप्रीतिः'इत्यादिना संगृहीतस्य द्वादशाध्यायान्तिमश्लोकार्थस्य भाष्ये चकारेण सङ्ग्रहः । उपक्रान्तोपसंहारमात्ररूपत्वात्तस्य पृथगनुक्तिः। अस्मिन्नध्याये योगवित्तमयुक्ततमादिशब्दैः प्रश्नोत्तरगतैस्तारतम्यमात्रमुच्यते । तच्चोपास्यप्रकर्षहेतुकफलतारतम्यनिबन्धनं किं न स्यादित्यत्राह—**भगवदुपासनस्ये**ति । सम्प्रतिपन्नांशे पुनः प्रश्नो न युक्त इति भावः । अव्यवहितवाक्यसङ्ग-

प्र-पा ॥ १. गी. सं ॥

शं॥द्वितीयाध्यायप्रभृतिषु विभूत्यन्तेषु अध्यायेषु परमात्मनः ब्रह्मणः अक्षरस्य विध्वस्तसर्वोपाधिविशेषस्य उपासनम् उक्तं; सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपेतस्य वि-

आ॥ॐ॥अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्या-

ज॥एतदध्यायप्रतिपाद्यमर्थमाह—**अव्यक्ते**ति । अव्यक्तं श्रीः तदुपायं भगवदुपासनोपायम् । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यसमर्थनार्थमित्येकार्थता । षट्कान्तर्भावश्च । अर्जुनस्य प्रश्नसङ्गति-

रा॥एवं-'मत्कर्मकृत्'इत्यादिनोक्तेन प्रकारेण,सततयुक्ताः-भगवन्तं त्वामेव परं प्राप्यं मन्वानाः,ये भक्ताः, त्वां-सकलविभूतियुक्तमनवधिकातिशयसौन्दर्यसौशील्यसार्वज्ञसत्यसं-

ता॥ तिव्यञ्जनार्थमासक्तिवशादौचित्याच्चैवंशब्दानूदितमाह - मत्कर्मकृदित्यादिनोक्तेनप्रकारेणेति। सततयुक्तशब्दोऽत्र सततयोगाशंसापर इत्यभिप्रायेणाह—भगवन्तं त्वामेव परं प्राप्यंमन्वाना इति। 'मत्परमः' इति हि पूर्वश्लोकोक्तम्। सुग्रहत्वानुगुणाकारसूचनार्थं सकलेत्यादिना 'त्वाम्' इति निर्दे-

शं॥श्वेश्वरस्य तव च उपासनं तत्रतत्र उक्तम्।विश्वरूपाध्याये तु,ऐश्वरम् आद्यं,समस्तजगदात्मस्वरूपं त्वदीयं दर्शितम् उपासनार्थमेव त्वया। तच्च दर्शयित्वा उक्तवानसि 'मत्कर्मकृत्' इत्यादि। अतः अहम् अनयोः उभयोः पक्षयोः विशिष्टतरबुभुत्सया त्वां पृ-

आ॥ये। तदुपासनमपि मोक्षसाधनं प्रतीयते। 'श्रियं वसाना अमृतत्वमायान्भवन्ति सत्या समिथा मितद्रौ' इति। 'अनाद्यन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति च। अव्यक्तं च महतः परम्। 'महतः परमव्यक्तम्' इत्युक्तपरामर्शोपपत्तेः। 'उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः' इति सामवेदे अग्निवेश्यशाखायाम्। महच्च माहात्म्यं तस्या वेदेषूच्यते। 'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते।तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्''चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते' इतिच। 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः' इत्यारभ्य 'अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञिया-

ज॥प्रदर्शनेनैवानन्तर्यलक्षणाऽपि सङ्गतिर्दर्श्यते।ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात्, तदा तत्साधकाधिक्यविषयः संशयः स्यात्। तदेव कुतः? तथाच कथमयं संशयमूलोऽर्जुनस्य प्रश्नः? नहि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते। किं तु साध्यनिर्धारणार्थ एव। नच तथा प्रकृते 'यावानार्थः' इत्यादिना निरस्तत्वादित्यत आह—तदुपासनमपीति। श्रियं प्रति वसाना वसन्तः तामाच्छाद्य स्थिता उपासीना इति यावत्। तेषां समिथा समीहितानि सत्यानि भवन्ति। मितद्रौ समुद्रे क्षीराब्धौ। श्रीशब्दस्यान्यत्रापि प्रवृत्तेः अव्यक्तविषयामेव श्रुतिं पठति —अनादीति। निचाय्य संपूज्य निशाम्य वा। अत्रापि नाव्यक्तं श्रूयत इत्यत आह—अव्यक्तंचेति। चोऽवधारणे। कुत एतत्? परमात्मनोऽपि तत्संभवादित्यत आह—महतइति। अत्र हि तं महतः परमिति परामर्शो दृश्यते। स चोक्तस्यैव भवति। अव्यक्तमेव च 'महतः परमव्यक्तम्' इति महतः परत्वेनोक्तम्। अतोऽत्राप्यव्यक्तग्रहणे तमित्ययं 'महतः परमव्यक्तम्' इत्युक्तस्य परामर्श इत्युपपद्यते। अन्यथाऽनुक्तपरामर्शः प्रसज्यते।परमात्मा तु न महतः पर इत्युक्तः;किं तु 'अव्यक्तात्पुरुषः परः'इत्येवेत्यर्थः। श्रुतिद्वयार्थसङ्ग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति—उपास्येति। नन्वेवं प्रतीयमानमपि अव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव। 'अन्तवत्तु फलं तेषाम्' इत्युक्तन्यायात्। अतो नास्य सन्देहहेतुत्वमित्यत आह—महच्चेति। तस्याः श्रियः। युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायाम् उपचरितत्वकल्पनं, तेषां जननमरणादिमत्त्वेनासंभवात्। श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वादसंभवाभावात्। वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः। सुपेशा सुरूपा। घृतप्रतीका दीप्ताङ्गी वयुनानि ज्ञानानि वस्ते आच्छादयति। ज्ञानालङ्कृतेति यावत्। सुपर्णा सुष्ठु परमानन्दौ। वृषणा सेचकौ द्विरूपो भगवानेव यत्र यस्यां विषये। अत्र नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वं च प्रतीयते। एवमुत्तरत्र। रुद्राद्यैः परिवृता। राष्ट्री राज्ञी यज्ञियानां यज्ञार्हाणां वसूनां पदार्थानां देवानां वा सङ्गमनी सङ्गमयित्री। प्रथमा

रा॥कल्पत्वाद्यनन्तगुणसागरं परिपूर्णमुपासते; येचाप्यक्षरं प्रत्यगात्मस्वरूपं तदेव चाव्यक्तं

ता॥ग्रस्य प्रागुपदेशादिव्यचक्षुर्भ्यां प्रतिपन्नविभूत्यादिवैशिष्ट्यपरत्वं दर्शितम्। यद्वा 'पर्युपासते', इत्यत्रोपसर्गाभिप्रेतोक्तिरियम्। तदाह—परिपूर्णमिति। अक्षरशब्दस्य प्रकृतावीश्वरे च प्रयोगादिह तद्व्यावृत्यर्थमाह—प्रत्यगात्मस्वरूपमिति। अव्यक्तशब्दस्याक्षरशब्दसमभिव्याहृताचिद्विशेषपरत्वव्युदासायाह—तदेवचाव्यक्तमिति। यच्छब्दत्रयाभावादुत्तरे च विशेषणविशेष्यव्यक्तेरत्रोपास्यत्रयपरत्वमनु-

शं॥च्छामि इति अर्जुनः उवाच—'एवम्' इति अतीतानन्तरश्लोकेन उक्तम् अर्थं परामृशति मत्कर्मकृत्' इत्यादिना—एवं सततयुक्ताः इति॥ नैरन्तर्येण भगवत्कर्मादौ यथोक्ते अर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः। ये भक्ताः अनन्यशरणाः सन्तः त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति; ये चापि त्यक्तसर्वैषणः संन्यस्तसर्वकर्माणः यथाविशे-

आ॥नाम्। तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्। मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्। अन्तवो मां त उपाक्षयन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वाअन्तस्समुद्रे। परो दिवा पर एना पृथिव्यै तावती महिना संभूव' इत्यादि च' त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया, इति च। इति शङ्का कस्य चिद्भवति अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति। एवमिति। एवंशब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्' इत्यादिप्रकारश्च परामृश्यते। अव्यक्तं प्रकृतिः। 'महतः परमव्यक्तम्' इति

ज॥चिकितुषी—अनादितः सर्वत्र कृतनिवासा। पुरुत्रा पुरुस्थानेषु। व्यदधुः कृतवन्तः।पूजार्थे प्रतिष्ठापितवन्तः। भूरिस्थात्रां स्वतोभूरिस्थानेषु स्थिताम्। भूरिस्थानेषु देवानावेशयन्तीम्। 'योऽन्नमत्ति समयैवात्ति' इत्यादि। ये अमन्तवो निरपराधास्ते मामुपक्षियन्ति मत्समीपे वसन्ति। श्रुधि शृणु। श्रुतं प्रसिद्धं। श्रद्धिवं श्रद्धेयम्। यमुग्रं रुद्रं कर्तुं कामये तंतमुग्रं कृणोमि करोमीत्यादि। सुमेधां सुमेधसम्। रुद्रायेत्यादि चतुर्थी द्वितीयार्थे। ब्रह्मद्विषे संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम्। यद्वा ब्रह्मद्विषां शरवे हिंसकं हन्तवा उ हन्तुमेव। अस्य जगतः पितरं हिरण्यगर्भं मूर्धनि सर्वाधिक्ये। योनिः कारणम् दिवेत्यादितृतीया पञ्चम्यर्थे। एना एतस्याः। महिना महिम्नाऽहमेतावतो संबभूवेत्यादिनोच्यते। भवत्वेवं ततः किम् असदिग्धतया भगवन्तमेवोपासीनस्यार्जुनस्य कथमयं संशयो येनैवं पृच्छतीत्यत आह—इतीति। यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति, तस्मान्मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति साधकबाधकप्रमाणाभावेन शङ्का संशयः कस्यचिदविदिततत्त्वस्य भवति। अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः। अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह—सूक्ष्मेति। योग्यतावशादेवंभूतं त्वामेवं प्रकारेणोपासत इत्युभयत्रैवं शब्दस्यान्वय इत्याशयवानाह—एवमिति। दृष्टं श्रुतं च रूपं यस्य ब्रह्मणस्तत्तथा। अव्यक्ताक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह—अव्यक्तमिति। प्रकृतिश्चेतना। त्रिगुणं त्रिगुणाभिमानित्वात्। सदसदात्मकं कार्यकारणाभिमानित्वात्। अविशेषम् अकार्यं ततः प्रधानं प्राहुः विशेषवत् कार्यवत्। ततः प्रकृतिं प्राहुः तत्प्रकृत्याख्यं तत्त्वम्। परतः परोऽस्त्युत्तमः। अत्राव्यक्तमिति विशेष्यवाची। अक्षरमिति विशेषणवाची 'अव्यक्तासक्तचेतसाम्' 'अव्यक्ता हि गतिः' इत्यादिवचनात्।अतो व्युत्क्रमेण व्याख्यानम् विशेषणोपादानं च देवतान्तरवैल-

रा॥चक्षुरादिकरणानभिव्यक्तस्वरूपमुपासते; तेषामुभयेषां के योगवित्तमाः - के स्वसाध्यं

---

ता॥च्चितमिति भावः।'पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः।एतज्ज्ञात्वा विमुच्यन्ते यतयश्शान्तबुद्धयः' इति यमस्मृतिवचनेऽपि पुरुषोत्तमादर्वाचीन एवाव्यक्तशब्दः। अत्र योगवित्तमशब्दाभिप्रेतमाधिक्यं दर्शयति—के स्वसाध्यमिति। प्रश्नस्योपास्याधिक्यादिपरत्वं मा भूत्; उक्तार्थपरत्वे किं प्रमाणमित्य-

---

प्र-पा ॥ १ ॥

---

शं॥षितं ब्रह्म अक्षरं,निरस्तसर्वोपाधित्वात् अव्यक्तम् अकरणगोचरम्, यत् हि करणगो-

---

आ॥प्रयोगात्। 'यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्। प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' इति च भागवते। अक्षरं च तत्। 'अक्षरात्परतः परः' इति श्रुतेः। परं तु ब्रह्म न हि भगवतोऽन्यत्। 'आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे' इति भागवते। रूपं चेदृशं साधितं पुरस्तात्। उपासनं च तथैव कार्यम्। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'इत्यारभ्य 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति साभ्यासा। आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः। तथा च सामवेदे सौकरायणश्रुतिः 'स्थाणुर्ह वै प्राजापत्यः स प्रजापतिं पितरमेत्योवाच। मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम्। ध्यानंच तस्याप्तरुचेः कथं

---

ज॥क्षण्यप्रदर्शनेन प्रश्नसंभावनार्थम्। एतदेव भाष्यकृता महच्चेत्यादिना प्रपञ्चितम्।अन्ये तु ये त्वां भगवन्तं वासुदेवमुपासते, येचाप्यक्षरमव्यक्तं परं ब्रह्म, तेषां के योगवित्तमा इति व्याचक्षते; तदसदित्याह—परंत्विति। आनन्दमित्यादेः पूर्वेणोत्तरेण चान्वयो द्रष्टव्यः। तथा च ये त्वां पर्युपासते, ये च त्वामित्युक्तं स्यात्, तथाचोन्मत्तप्रलापत्वप्रसङ्ग इति भावः। ननु भगवान्करचरणादिमद्रूपवान् परं ब्रह्म तु नेदृशरूपवत्, 'अशब्दमस्पर्शमरूपम्' इत्यादिश्रुतेः। अतः कथमेतदित्यत आह—रूपंचेति। पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः। अस्तु भगवानेव परं ब्रह्म, किं तु ये त्वामेवं साकारमुपासते, ये चाव्यक्तं निराकारं; तेषां के योगवित्तमा इति प्रश्नार्थ इत्यत आह—उपासनंचेति। तथैव रूपवत्तयैव स्यादयं प्रश्नार्थो यदि रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात्, नत्वेतदस्ति, किं तु रूपवत्तयैवान्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादिति भावः। कुत एतदित्यत आह—सहस्रेति। आरभ्येत्यनेन 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादेः, 'आदित्यवर्णं तमसस्तुपारे' इत्यादेश्च ग्रहणम्। अभ्यासशब्देन तत्फलनियमो लक्ष्यते। श्रुतिः साकारोपासनं मोक्षसाधनमाहेति शेषः। नन्वत्रोच्यमान आदित्यवर्णत्वादिराकार अतमस्कत्वादिसादृश्यादुपचरित एवेत्यत आह—आदित्येति। वृथा बाधकेन विना उपचर्यत इत्युपचारः। केचित्'सहस्रशीर्ष' इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते।अतस्तद्विधूय ईश्वरविषयतया स्वमतं ग्रहीतुम्' आदित्येत्यादीत्युक्तम्। उपचारानर्हां चाल श्रुतिमाह—तथाचेति।स्थाणुः रुद्रः प्राजापत्यः प्रजापतेरपत्यम् साधुभिः साधकैः तारक संसारस्य। तारः ओङ्कारः आप्तरुचेर्व्याप्ततेजसः। लोमेतिकेशवचनम् लोमपादेति द्वन्द्वः। न विद्यन्ते लोमान्तपादाद्यवयवा यस्यासावलोमपादः तं स्थाणुमुवाच प्रजापतिः। सुवर्णः सुवर्णवर्णः। अत्र मुमुक्षुभिः को ध्येय इत्येकः प्रश्नः तारवाच्यं तारकं वस्तु किमिति द्वितीयः। तस्य ध्यानं कथं स्यात्, किं साकारतया, उत निराकारत्वेन; नाद्यः, अलोमपादो ह्यसावुच्यते। न द्वितीयः, बुद्धावनारोहात् इति तृतीयः। तत्राद्यद्वितीययोरर्थतो न भेदः। तारकस्यैव मुमुक्षुध्येयत्वादित्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह। यस्त्वया मुमुक्षुध्येयः तारकः

रा॥प्रति शीघ्रगामिन इत्यर्थः।'भवामि न चिरत्पार्थ'इत्युत्तरत्र योगवित्तमत्वं शैघ्र्यविषयमिति हि व्यञ्जयिष्यते ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २

अत्यर्थमतिप्रियत्वेन मनो मय्यावेश्य श्रद्धया परयोपेताः नित्ययुक्ताः-नित्य*योगं काङ्क्षमाणाः ये मामुपासते-प्राप्यविषयं मनो मय्यावेश्य ये मामुपासत इत्यर्थः;ते युक्ततमाः मे मताः—मां सुखेनाचिरात्प्राप्नुवन्तीत्यर्थः ॥ २ ॥

ता॥लाह—भवामीति।प्रश्नान्यथानुपपत्त्यैव पारिशेष्यादयमर्थस्सिद्धः;उत्तरवाक्ये तु स्पष्टः।'क्लेशोऽधिकतरस्तेषाम्' इति चाक्षरनिष्ठात्प्रकर्ष उच्यत इति भावः ॥ १ ॥

'मय्यावेश्य' इत्यत्रोपासनान्यथानुपपत्तिलभ्यविषयीकरणमात्रपरत्वे निष्प्रयोजनत्वादक्षरनिष्ठस्याप्युपायतया भगवति चित्तावेशसाम्यात्तद्व्यवच्छेदार्थमाह—प्राप्यविषयमिति ॥ २ ॥

प्र-पा ॥ *योगमांकाङ्क्ष. पा ॥

शां॥चरं तत् व्यक्तम् उच्यते,व्यञ्जेः धातोः तत्कर्मकत्वात्,इदं तु अक्षरं तद्विपरीतम्,विशिष्टैश्च उच्यमानैः विशेषणैः विशिष्टम्, तत् ये चापि पर्युपासते, तेषाम् उभयेषां मध्ये के योगवित्तमाः, के अतिशयेन योगविदः ? इत्यर्थः ॥ १ ॥

श्रीभगवान् उवाच। ये तु अक्षरोपासकाः सम्यग्दर्शिनः निवृत्तैषणाः, ते तावत् तिष्ठन्तु ; तान् प्रति यत् वक्तव्यं तत् उपरिष्टात् वक्ष्यामः। ये तु इतरे—मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनः ये भक्ताः सन्तः मां सर्वयोगेश्वराणाम् अधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ताः अतीतानन्तराध्यायान्ते उक्तश्लोकार्थन्यायेन सततयुक्ताः सन्तः उपासते श्रद्धया परया प्रकृष्टया उपेताः ये, ते मे मम युक्ततमाः मताः अभिमताः युक्ततमाः इति। नैरन्तर्येण हि ते मच्चित्ततया अहोरात्राणि अतिवाह-

आ॥स्याद्ध्येयश्च कः पुरुषोऽलोमपादः' इति। 'तं होवाचैष वै विष्णुस्तारकोऽलोमपादो ध्यानं च तस्याप्तरुचेर्वदामि' 'सोऽनन्तशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः।श्यामोऽथ वा हृदये सोऽष्टबाहुरनन्तवीर्योऽनन्तबलः पुराणः' इति। अरूपत्वादेस्तु गतिरुक्ता।पुरुषभेदश्च प्रश्नादौ प्रतीयते। त्वां पर्युपासते'ये चाप्यक्षरमव्यक्तम्'इत्यादौ॥

ज॥पृष्टः,एष विष्णुरिति।यद्यप्यसावलोमपाद उच्यते,तथाऽपि तस्य साकारतयैव ध्यानं वदामीति तृतीयस्य यदि ब्रह्म साकारमेव; तद्ध्यानं च तथैव कार्यम् । तर्हि 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादेः का गतिरित्यत आह—अरूपत्वादेस्त्विति। लौकिकरूपाद्यभावरूपा।एतेन'अलोमपादः' इत्यस्याभिप्रायोऽप्युक्तो भवति । इतोऽपि न परोक्तः प्रश्नार्थ इत्याह—पुरुषेति । एवं हि व्याख्याने ध्येयस्यैव ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयौ पुरुषौ द्वौ प्रतीयेते । अतश्च नैवमित्यर्थः । प्रश्नस्यैकध्येयविषयतया कथंचिद्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेनादिग्रहणं कृतम् । किं च साकारोपासनेन विशुद्धाशये निराकारमुपास्त इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धान्तः । अत्र तूपासकपुरुषभेदः प्रतीयते । ततोऽपि नान्योऽर्थ इत्याह—पुरुषेति। उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ॥ १ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५

रा॥ये त्वक्षरं प्रत्यगात्मस्वरूपम् अनिर्देश्यं देहादन्यतया देवादिशब्दानिर्देश्यम् * तत एव चक्षुरादिकरणानभिव्यक्तं, सर्वत्रगमचिन्त्यंच-सर्वत्र—देवादिदेहेषु वर्तमानमपि तद्विसजातीयतया तेनतेन रूपेण चिन्तयितुमनर्हं, तत एव कूटस्थं·सर्वसाधारणं, तत्तद्देवाद्यसाधारणाकारासंबद्धमित्यर्थः; अपरिणामित्वेन स्वासाधारणाकाराच्च चलति न

ता॥अक्षरनिष्ठस्यापकर्षमाह—'ये त्वक्षरम्' इत्यादिश्लोकत्रयेण। सर्वप्रकारनिर्देशनिषेधस्य स्ववचनविरोधादिदुष्टत्वाद्यथावस्थितस्वरूपे निषेध्यतया विवक्षितं निर्देशविशेषं सहेतुकमाह—देहादन्यतयेति। यद्यपि देहादन्यस्मिन्नपि देहिनि देहद्वारा देवादिशब्दाः प्रवर्तन्ते; तथापि विविच्य निर्देष्टव्ये प्रकृतिसंबन्धरहिते चापवृक्तात्मस्वरूपे तावत्ताद्दशवृत्तिरपि न संभवतीत्यभिप्रायः।तत एव—देहादन्यतयैवेत्यर्थः। अत्यन्तानभिव्यक्तत्वविवक्षायाम् 'उपासते' इति स्ववाक्येनापि विरोध इत्यभिप्रायेणाह—चक्षुरादिकरणानभिव्यक्तमिति । 'सर्वत्रगम्' इत्यत्राणुत्वश्रुतिविरोधपरिहारायाह—देवादिदेहेष्विति । यद्वा निषेध्यस्य चिन्त्यत्वस्य प्रसङ्गार्थं 'सर्वत्रगम्' इत्युक्तमित्याह—देवादिदेहेषुवर्तमानमपीति। तेनतेन रूपेणेति—आत्मचिन्ताविधिविरोधाच्चिन्त्यत्वमात्रनिषेधो न शक्यत इति भावः । तत एव कूटस्थमिति—तत्तद्विलक्षणत्वादित्यर्थः । अनेकेषां संतन्यमानानां पुरुषाणां साधारणो हि पूर्वः पुरुषः कूटस्थः; अत्र तु साधारण्यमात्रं लक्ष्यत इत्याह—सर्वसाधारणमिति । एतेन कूटशब्दनिर्दिष्टमायाध्यक्षत्वं वा राशिवत्स्थितत्वं वा वदन्तः प्रसिद्धार्थपरित्यागादिभिर्निरस्ताः । अतः कूट इव निश्चलं वृद्धिक्षयादिरहितमित्यप्यत्र मन्दम्। नन्वेकदा सर्वसाधारणत्वमसिद्धं, कालभेदेन सर्वजातीयशरीरपरिग्रहेऽपि सर्वव्यक्तिपरिग्रहो नास्ति, अतः कथं सर्वसाधारणत्वमित्यत आह—देवादीति। नह्यसाधारणा देवत्वादय आत्मन्यव्यवधानेन संबध्यन्त इति भावः । उत्क्रान्त्यादिमतो जीवस्य स्पन्दनिषेधादेरनुपपन्नत्वादचलशब्दविवक्षितमाह—अपरिणामित्वेनेति । अनित्यत्वं हि परिणामेन व्याप्तम् । ततश्च व्याप-

प्र-पा॥ *अंत एव-पा ॥

शा॥यन्ति, अहोरात्रम् अतिमात्रं मां ध्यायन्ति। अतः युक्तं तान् प्रति युक्ततमाः इति वक्तुम्॥
किम् इतरे युक्ततमाः न भवन्ति ? न ; किंतु तान् प्रति यत् वक्तव्यं तत् शृणु—ये

आ॥भवन्तु त्वदुपासका एवोत्तमाः, इतरेषां तु किं फलमित्यत आह—येत्वित्यादिना।

ज॥एवं तर्हि 'मय्यावेश्य' इत्यनेनैव मदुपासका एवोत्तमा इति प्रश्नस्योत्तरं जातं, किमुत्तरेण वाक्येनेत्यत आह—भवन्त्विति । आक्षेपगर्भोऽयमभ्युपगमः । न युक्त त्वदुपासकानामेवोत्तमत्वमिति भावः । तदुपपादनाय पृच्छति—इतरेषामिति । अव्यक्तोपासकानां किं फलं? मोक्षोऽस्ति न वा ; न चेदुदाहृतवाक्यविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वं? फलसाम्यादिति भावः । नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासंभवात् कथमितरेषां किं फलमित्यस्योत्तरत्वेन एतदवतार इत्यतोऽक्षराव्यक्तत्वयो·

रा॥च्यवत इत्यचलं,तत एव ध्रुवं-नित्यं,सन्नियम्येन्द्रियग्रामं-चक्षुरादिकमिन्द्रियग्रामं सर्वे

ता॥काभावाद्व्याप्त्याभावो विवक्षित इत्यपुनरुक्तिरित्याह—ततएवध्रुवमिति।'उपासते'इत्यनेनैव मनो

शं॥तु अक्षरम् अनिर्देश्यम् अव्यक्तम्,अव्यक्तत्वात् अशब्दगोचरम् इति न निर्देष्टुं शक्यते, अतः अनिर्देश्यम् अव्यक्तं पर्युपासते परि समन्तात् उपासते। उपासनं नाम यथाशास्त्रम् उपास्यस्य अर्थस्य विषयीकरणेन सामीप्यम् उपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यत् आसनं तत् उपासनम् आचक्षते। अक्षरस्य विशेषणम् आह उपास्यस्य —सर्वत्रगं व्योमवत् व्याप्तं तम् अचिन्त्यं च यद्धि करणगोचरं तत् मनसाऽपि चिन्त्यं, तद्विपरीतत्वात् अचिन्त्यम्; अक्षरं-कूटस्थं, दृश्यमानगुणकम् अन्तर्दोषं वस्तु कूटम्। 'कूटरूपकं' 'कूटसाक्ष्यम्' इत्यादौ कूटशब्दः प्रसिद्धः लोके। तथा च अविद्याद्यनेकसंसारबीजम् अन्तर्दोषवत् मायाऽव्याकृताद्यनेकशब्दवाच्यतया'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत् तत् कूटं.

आ॥अनिर्देश्यत्वं चोक्तं भागवते मायायाः—'अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः' इति। ईश्वरस्तु दैवशब्देनोक्तः, 'दैवमन्ये परे'इत्यत्र। उक्तं च सामवेदे काषायणश्रुतौ' —'नासदासीन्नो सदासीत्तदानीम्' इति। 'न महाभूतं नोपभूतं तदासीत्' इत्याद्यारभ्य 'तम आसीत्तमसा गूढमग्रे' इति। 'तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः' इति। सर्वगाचिन्त्यादिलक्षणा हि सा। तथाहि मोक्षधर्मे—'नारायणगुणाश्रयादजरादतीन्द्रियादग्राह्यादसंभवतः।असत्यादहिंस्राल्ललामात् द्वितीयप्रवृत्तिविशेषाद्वैरादक्षयादमरादक्षरादमूर्तितः। सर्वस्याः सर्वकर्त्तुः शाश्वततमसः' इति।'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' इति मानवे।'कूटस्थोऽक्षर उच्यते' इति वक्ष्यति। कूटे आकाशे स्थिता कूटस्था। 'आकाशे संस्थिता त्वेषा

ज॥र्मायायामुपपादितत्वात् तदन्यानि तत्रोपपादयन्ननिर्देश्यत्वं तावदुपपादयति—अनिर्देश्यत्वंचेति शब्दागोचरत्वम्। धर्मस्य मम पादभङ्ग इत्यन्वयः। नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह—ईश्वरस्त्विति। दैवं पादभङ्गकारणमाहुः। तथा च पुनरुक्तिः स्यादिति भावः। न च दैवशब्दोऽदृष्टवाची, तस्य'अपरे कर्म'इति पृथगुक्तत्वात्।मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह—उक्तंचेति। महाभूतमाकाशवायुरूपम्। उपभूतं तेजोब्भूलक्षणम्। तदा प्रलये। अजरमित्यादिकं प्रलयेऽवस्थानस्योपपादकम् नन्वैतद्ब्रह्मेति प्रदर्शनाय'एषा ह्येव प्रकृतिः'इत्युदाहृतम्।इदानीं'सर्वत्रगम्'इत्यादिकं मायायामुपपादयितुमाह—सर्वगेति। भावप्रधानो निर्देशः। स्वरूपवाची वा लक्षणशब्दः। नारायणगुणस्तदिच्छादिलक्षण आश्रयो यस्य तत्तथोक्तम्। अनेन ब्रह्मणो व्यावृत्तिः। 'अजरादमरात् इति जडप्रधानादेः, तस्य तत्प्राप्त्यभावात्। 'अग्राह्यान्मनसोऽप्यगोचरात्'इत्यनेनाचिन्त्यमिति सिद्ध्यति।असंभवतोऽक्षयादक्षरादिति ध्रुवत्वसिद्धिः। असति प्रलये भवम् असत्यम्। ललामं प्रधानम्। द्वितीया भगवदेकाधीना प्रवृत्तिविशेषो यस्य तत्तथा। अमूर्तितः प्राकृतदेहरहितात्। सर्वस्याः सर्वगाया इति च्छान्दसो लिङ्गव्यत्ययः। अनाद्यविद्याभिमानित्वात् शाश्वततमसः पुरुषोऽभूदित्यन्वयः। इदं प्रसिद्धं तमो मायाख्यं प्रलये सर्वतः प्रसुप्तमिव निर्व्यापारमासीत्। अभूतमजातम्। अप्रज्ञातमित्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते। अवेद्यलक्षणत्वादप्रतर्क्यम्। अनेन 'सर्वत्रगमचिन्त्यं ध्रुवम्' इति सिद्ध्यति। गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत्, ध्रुवमिति पुनरुक्तिः; कूटमनृतं तिष्ठत्यस्मिन्नित्यसंभवीत्यत आह—कूट

**रा॥स्वव्यापारेभ्यस्सम्यङ्नियम्य,सर्वत्र समबुद्धयः—सर्वत्र देवादिविषमाकारेषु देहेष्ववस्थितेष्वात्मसु ज्ञानैकाकारतया समबुद्धयः,तत एव सर्वभूतहिते रताः-सर्वभूताहितरतित्वान्निवृत्ताः,सर्वभूताहितरतित्वं ह्यात्मनो देवादिविषमाकाराभिमाननिमित्तम् ;य एवमक्षरमुपासते, तेऽपि मां प्राप्नुवन्त्येव—मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येव-**

**ता॥**नियमनस्य सिद्धत्वात्तदुपयुक्तबाह्येन्द्रियव्यापारनियमनपरतया व्याचष्टे—**सम्यङ्नियम्येति**।'अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहः' इत्यादिकमभिप्रेत्योक्तं—**सर्वत्रेति**।'शुनि चैव श्वपाके च पण्डितास्समदर्शिनः' इत्यादिकमभिप्रेत्य—**आत्मसु ज्ञानैकाकारतया समबुद्धय** इत्युक्तम्। **तत एव**—समबुद्धित्वादेव । **यएवमक्षरमुपासते**—अक्षरशब्दवाच्यं प्रत्यगात्मानं प्राप्यतया निश्चित्य परमात्मानं तत्प्रापकतयोपासते।**तेऽपीति**--मद्व्यतिरिक्तप्राप्यान्तरनिश्चयवन्तोऽपीत्यर्थः।**मां प्राप्नुवन्त्येव**—"विष्णुशक्तिः परा प्रोक्ता' इत्युक्तप्रकारेण 'अविभागेन दृष्टत्वात्' इत्यपृथक्सिद्धविशेषणभूतं मुक्तस्वरूपं मत्समानाकारं प्राप्नुवन्तीत्यर्थ इत्यर्थः। प्रमेयशरीरं साधीयः, यदि प्रमाणमुपलभामह इत्याशङ्क्य सोपबृं-

**प्र-पा॥**१.वि.ध.१०४-३॥'यमास्त कथिता भूप नियमानपि मे श्रृणु' इत्युत्तरार्धम् बृहन्नारदीयपु.३१-७६.'अक्रोधश्चानसूयाचप्रोक्ताः सङ्क्षेपतो यमः।'इत्युत्तरार्धम्। अयं श्लोक स्तत्रैव व्याख्यातः—'सर्वेषामेव भूतानामक्लेशजनन हि यत्। अहिंसा कथिता सद्भिर्योगसिद्धिप्रदायिनी ॥ ७७ ॥ यथार्थकथनं यत्तु धर्माधर्मविवेकतः। सत्यम्प्राहुर्मुनिश्रेष्ठा अस्तेयं श्रृणुताधुना ॥ ७८ ॥ चौर्येण वा बलेनापि परस्वहरणं हि यत्। स्तेयमित्युच्यते सद्भिरस्तेयन्तद्विपर्ययः ॥ ७९॥ सर्वत्र मैथुनत्यागो ब्रह्मचर्यम्प्रकीर्तितम्। ब्रह्मचर्यपरित्यागी ज्ञानवानपि पातकी ॥ ८० ॥ सर्वसङ्गपरित्यागी मैथुने यस्तु वर्तते। स चण्डालसमो ज्ञेयः सर्ववर्णबहिष्कृतः ॥ ८१ ॥ यस्तु योगरतो विप्रो विषयेषु स्पृहान्वितः। तत्सम्भाषणमात्रेण ब्रह्महत्याभवेन्नृणाम् ॥ ८२ ॥ सर्वसङ्गपरित्यागी पुनस्सङ्गीभवेद्यदि। तत्सङ्गसङ्गिनः सङ्गात् महापातकदोषभाक्॥ ८३ ॥ अनादान हि द्रव्याणामापद्यपि मुनीश्वराः। अपरिग्रह इत्युक्तो योगसिद्धिप्रदायकः ॥ ८४ ॥ आत्मनस्तु समुत्कर्षं कुर्वन्निष्ठुरभाषणम्। क्रोधमाहुर्धर्मविदो ह्यक्रोधस्तद्विवर्जनम् ॥ ८५ ॥ धनाद्यैरधिकन्दृष्ट्वा भृशं मनसि तापनम्। असूया कीर्तिता सद्भिस्तद्योगोऽनसूयता ॥ ८६ ॥ एवं सङ्क्षेपतः प्रोक्ता यमाश्च बुधसत्तमाः'—इति ॥

२. गी. ५-१८ ॥

३. वि. पु. ६-७-६१ ॥

४. शारी. ४-४-४ ॥

**शं॥तस्मिन् कूटे स्थितं कूटस्थं तदध्यक्षतया। अथवा—राशिमिव स्थितं कूटस्थम्। अत एव अचलम्। यस्मात् अचलं, तस्मात् ध्रुवं, नित्यम् इत्यर्थः ॥ ३ ॥**

**आ॥ततः कूटस्थिता मता'इति ऋग्वेदखिलेषु।'सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्का' इति सामवेदे गौपवनशाखायाम् ॥ ३ ॥**

**कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह—क्लेश इति। अव्यक्ता गतिर्दुःखं**

**अ॥**इति। कूटशब्दस्याकाशवाचित्वेऽभिधानं प्राक् पठितम्। तथाऽपि दाढर्याय श्रुत्युदाहरणम्। श्रुत्यनुसारेण स्त्रीलिङ्गम्। 'सा सर्वगा' इत्युक्तार्थे स्पष्टं प्रमाणम्। निश्चला स्वपदादभ्रष्टा। विश्वं गतमाश्रितमस्यामिति विश्वगा। एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वाङ्गीकारसमर्थनार्थानीति ज्ञेयम्॥

ननु'इतरेषां किं फलम्'इत्यस्य प्रश्नस्य 'ते प्राप्नुवन्ति मामेव' इत्युत्तरं दत्तम्; तत्किमुत्तरेणेत्यत आह—**कथमिति**। पूर्ववाक्ये पक्षग्रहणमात्रं कृतम्; न तु तत्राभिप्रेतस्य दोषस्य परिहारः; अतः पूर्वपक्षिणाऽभिप्रायोद्घाटने कृते तत्समाधानमाहेति भावः। तर्हि-उभयेषां फलसाम्ये। यद्यप्येषा शङ्का पूर्ववाक्ये परिहृता, पर्यादिपदप्रयोगात्। तथा च वक्ष्यति। तथाऽपि साध्यस्यानुक्तत्वाद्धेतुवचनं स्वरूप-

रा॥त्यर्थः;*'मम साधर्म्यमागताः'इति हि वक्ष्यते।श्रूयते च†'निरञ्जनः परमं साम्यमुपैति' इति।तथा अक्षरशब्दनिर्दिष्टात्कूटस्थादन्यत्वं परस्य ब्रह्मणो वक्ष्यते ‡'कूटस्थोऽक्षर उच्यते।

ता॥हणश्रुतिमुदाहरति-परमं साम्यमुपैतीति।ननु'अथ परा यया तदक्षरमधिगम्यते' 'अक्षरमम्बरान्तधृतेः' इत्यादिषु परब्रह्मसाधारणतया प्रयुज्यमानमक्षरपदं कथं जीवात्मवाचकम्?उच्यते—'अमृताक्षरं हरः' 'कूटस्थोऽक्षर उच्यते'इत्यादिषूक्तत्वादित्याह—तथाक्षरशब्दनिर्दिष्टादित्यादिना। 'पञ्चविंश-

प्र-पा॥ * गी. १४-२ ॥
† मु. ३-१-३ ॥
१. मु. १-१-५ ॥ २. शारी १-३ ९ ॥
३. श्वे. १ ९ ॥
‡४. गी. १५-१६ ॥
५ यमस्मृतौ ॥

शं॥संनियम्य सम्यक् नियम्य उपसंहृत्य इन्द्रियग्रामम् इन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिः येषाम् इष्टानिष्टप्राप्तौ ते समबुद्धयः।ते ये एवंविधाः ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। किमु तेषां वक्तव्यं 'मां ते प्राप्नुवन्ति' इति ; 'ज्ञानी त्वात्मैव मे मतम्' इति हि उक्तम् । न हि भगवत्स्वरूपाणां सतां युक्ततमत्वं वाच्यम् ॥ ४ ॥

किन्तु—क्लेशः अधिकतरः, यद्यपि मत्कर्मादिपराणाम् अधिकः एव क्लेशः;

आ॥ह्यवाप्यते। गतिर्मार्गः। अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखमवाप्यत इत्यर्थः। अतिशयेनोपासनं सर्वेन्द्रियातिनियमनसर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठाचारसम्यग्विष्णुभक्त्यादिसाधनसंदर्भभृते नाव्यक्तापरोक्षम् । तद्वते च न विष्णुप्रसादः। सत्यपि तस्मिन्न सम्यग्भगवदुपासनभृते। नर्ते च तं मोक्षः। विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्ठोऽयं मार्ग इति भावः। तथाप्यपरोक्षि[illegible]नां सुकरं भगवदुपासनमित्येव प्रयोजनम्। तत्रापि योऽव्यक्तापरोक्षे प्रयासस्तावता प्र-

ज॥कथनं मन्यमानस्य भवत्येव पुनः शङ्का। उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह—अव्यक्तेति। अनेन दुःखमित्यस्य क्रियाविशेषणत्वमुक्तम्। गतिशब्दस्याकर्तरि कारके भावे च प्रयोगादत्र विवक्षितमर्थमाह—गतिरिति। गम्यतेऽनेनेति व्युत्पादनादुपायो गतिरित्यर्थः। ननु मार्गस्याव्यक्तत्वं कथमुच्यते? कुतश्च गम्यार्थता गतिशब्दस्य त्यज्यत इत्यत आह—अव्यक्तेति। अव्यक्तोपासनं द्वारम् उपायो यस्यासौ तथोक्तः। अव्यक्तोपासनानन्तरभावि यद्भगवदुपासनं तदेवमुच्यते; अनेनाव्यक्तशब्दस्तदुपासनं लक्षयति;तेन च तद्द्वारकत्वं लक्ष्यते; गत्यर्थतायां च गतिशब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात्; न च तद्युक्तम्, 'ते प्राप्नुवन्ति मामेव' इति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति। अत्र पूर्वार्धेऽस्य मार्गस्याधिकतरक्लेशवत्त्व प्रतिज्ञाय कथमित्यतस्तत्प्रसिद्धमित्युत्तरार्धेनोक्तम्। तत्प्रसिद्धं विवृणोति—अतिशयेति। षष्ठोक्तप्रकारेण सर्वसमबुद्धिः। ततः किमित्यत आह—तद्वते चेति। अयोगव्यवच्छेद एवायमुक्तो न तु तावन्मात्रेणेत्याह—सत्यपीति। तस्मिन्नव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते। ततोऽपि किमित्यत आह—नर्ते चेति। तं विष्णुप्रसादम्। अस्त्वेवमव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः; तथाऽपि कथमत्राधिकतरः क्लेश इत्यत आह—विनेति। अव्यक्तोपासनमार्गम्। अयमव्यक्तोपासनद्वारकः। एवं तर्हि किमिति प्रवृत्तो येनार्जुनेनाशङ्कित इत्यत आह—तथाऽपीति। एवं तर्हि मार्गयोः साम्यमेव। अनेन प्रयोजनेन क्लेशस्य समाधानादित्यत आह—तत्रापीति। अव्यक्तोपासनद्वारके मार्गेऽपि द्वितीयं भगवदुपासने दुःखम्;पाक्षिकमेतत्, ऊनेन वे-

रा॥उत्तमः पुरुषस्त्वन्यः'इति।*'अथ परा यया तदक्षरमधिगम्यते'इत्यक्षरविद्यायां तु अ-क्षरशब्दनिर्दिष्टं परमेव ब्रह्म,भूतयोनित्वादेः। तेषामव्यक्तासक्तचेतसां क्लेशस्त्वधिकतरः;

ता॥कमव्यक्तं षड्विंशः पुरुषोत्तमः।एतज्ज्ञात्वा विमुच्यन्ते यतयश्शान्तबुद्धयः'इत्युक्तप्रकारेणाव्यक्तजीवा-त्मासक्तचेतसां क्लेशस्त्वधिकतरः, मय्यावेशितचेतस्त्वाभावात्। अव्यक्तविषया मनोवृत्तिस्सर्वेन्द्रियोपर.

प्र-पा॥ * मु १-१-५ ॥

शं॥अधिकतरस्तु अक्षरात्मनां परमात्मदर्शिनां देहाभिमानपरित्यागनिमित्तः;अव्यक्तास-क्तचेतसाम्-अव्यक्ते आसक्तं चेतः येषां ते अव्यक्तासक्तचेतसः तेषाम् अव्यक्तासक्तचेत-साम् । अव्यक्ता हि यस्मात् गतिः अक्षरात्मिका दुःखं देहवद्भिः देहाभिमानवद्भिः

आ॥यासेन यदि भगवन्तम् उपास्ते,ऊनेन वा,तदा भगवदपरोक्षमेव भवतीति द्वितीयम धिकम्। इन्द्रियसंयमाद्यूनभावे अत्युपासकस्यापि देवी नातिप्रसादमेति। देवस्तु तानि साधनानि भक्तिमतः स्वयमेव प्रयत्नेन ददातीति सौकर्यमिति भक्तानां भगवदुपासने। इतरत्र च क्लेशोऽधिकतरः। तदेतत्सर्वं 'पर्युपासते' 'सन्नियम्य' 'अधिकतरः' इति प-रिसंतरपूशब्दैः प्रतीयते। सामवेदे माधुच्छन्दशाखायां चोक्तं—'भक्ताश्च येऽतीव वि-ष्णावतीव जितेन्द्रियाः सम्यगाचारयुक्ताः। उपासते तां समबुद्धयश्च तेषां देवी दृश्य-ते नेतरेषाम्। दृष्टा च सा भक्तिमतीव विष्णौ दत्त्वोपास्ते सर्वविघ्नांश्छिनत्ति। उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेति'इति। उक्तं च सामवेदे अयास्यशाखा-यां—'प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु। यावता तत्प्रसादो हि तावतैव न संशयः। न तत्प्रसादमात्रेण प्रीयते स महेश्वरः। तस्मिन्प्रीते तु सर्वस्य प्रीतिस्तु भव-ति ध्रुवम्। यद्यप्युपासनाधिक्यं तथापि गुणदो हि सः। मुक्तिदश्च स एवैको नाव्य-क्तादिस्तु कश्चन' इति।'ममात्मभावमिच्छन्तो यतन्ते परमात्मने'इति। मोक्षधर्मे श्रीवच-नं—'धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि। प्रश्रिते दानशीले च सदैव निवसा-

ज॥त्युक्तत्वात्। इतश्चाव्यक्तोपासनद्वारके मार्गे भगवदुपासनात्क्लेशोऽधिकतर इत्याह—इन्द्रियेति।ना-ति प्रसादमेतीत्यतः परमेक इतिशब्दः। द्वावपि हेतौ प्रकारार्थौ वा। कुतोऽयं भगवतो भाव इत्यत आह—तदेतदिति। उपलक्षणमेतत्; 'सर्वत्र समबुद्धयः' इत्यादिनेत्यपि द्रष्टव्यम्। तत्र परीत्यने-नोपासकस्यातिशयः। समित्यनेनेन्द्रियनियमस्यातिशयः। सर्वत्रेत्यादिना सर्वेत्यादिकम्। तर-पाऽतिशुद्धाचारादिकम्। 'अव्यक्ता गतिः' इत्यनेन तद्दते चेत्यादिव्यवधानम्। मामेवेत्यवधारणेन तथापीत्यादिकम्;प्राप्नुवन्तीति स्वातन्त्र्योक्त्येन्द्रियसंयमादीति देवतासहायाभावः।भगवदुपासने त्वेतद-भावो यथा गीतोक्तस्तदुत्तरत्र प्रदर्शयिष्यते। आगमान्तरसिद्धत्वाचायं भवति भगवदभिप्राय इत्या-ह—सामवेदइति। तेषामित्यादिषष्ठी तृतीयार्थे। विदित्वा साक्षात्कृत्य। ततो वेदनात्प्रसन्नात् ततो वा-सुदेवात्।यावता प्रयासेन।तत्प्रसादः-अव्यक्तप्रसादः। सर्वस्यापीति द्वितीयस्तुशब्दोऽपिशब्दार्थे। आधि-क्यशब्देन न्यूनत्वमप्युपलक्ष्यते, न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात्। नाव्यक्तादेरिति पाठे मध्ये इत्युपस्कारः। ममोपासनेनात्मभावं कैवल्यम्। परमात्मने तमुद्दिश्य। अस्य वाक्यस्य कथं प्रकृतोपयोग इत्यत उक्तं—श्रीवचनमिति। नित्ये नियते, ब्रह्मण्ये ब्रह्माणि साधौ, निवसामि प्रसन्ना भवामीति व श्रीवचनमिति सम्बन्धः। पूर्वं शङ्काहेतुत्वेन 'श्रियं वसाना' इत्यादीनि वाक्यान्युदाहृतानि;

रा॥अव्यक्ता हि गतिः - अव्यक्तविषया मनोवृत्तिः, देहवद्भिः-देहात्माभिमानयुक्तैः, दुःखेनावाप्यते; देहवन्तो हि देहमेवात्मानं *मन्यन्ते ॥ ३ ॥ ५ ॥

भगवन्तमुपासीनानां युक्ततमत्वं सुव्यक्तमाह—

ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७

ये तु लौकिकानि देहयात्राशेषभूतानि देहधारणार्थानि चाशनादीनि कर्माणि, वैदिकानि च यागदानहोमतपःप्रभृतीनि सर्वाणि सकारणानि सोद्देश्यान्यध्यात्मचेतसा

ता॥तिरूपा। ननु देहवत्त्वं सनकादीनामपि सम्भवतीत्याशङ्क्य —देहात्माभिमानयुक्तैरित्युक्तम्॥ ५॥
'ये तु सर्वाणि' इति।देहयात्राशेषभूतानि कृष्यादीनि-सकारणानि,संध्यावन्दनसहितानि-सोद्देश्यानि-स्वर्गाद्युद्देशेन चोदितानि । अध्यात्मचेतसा-आत्मनि परमात्मनि यच्चेतः, तदध्यात्मम्; तेन

प्र-पा ॥ *मन्वते. पा ॥

शां॥अवाप्यते, अतः क्लेशः अधिकतरः ॥ ५ ॥

अक्षरोपासकानां यत् वर्तनं तत् उपरिष्टात् वक्ष्यामः—ये तु सर्वाणि कर्माणि मयि

आ॥म्यहम्' इति च ।महतः परं तु ब्रह्मैव।तथाहि भगवता सयुक्तिकमभिहितम्—'ॐ-वदतीति चेन्न प्राज्ञो हिॐ' 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इत्यादि। तमिति पुल्लिङ्गाच्चैतत्सिद्धिः। महतः परत्वं तु अव्यक्तपरस्य भवत्येव । तथा चाग्निवेश्यशाखायाम्—'अनाद्यनन्तं महतः परं ध्रुवम्'इति। 'परो हि देवः पुरुहूतो महत्तः' इति। नचाव्यक्तरूपं भगवता निषिद्धं भारतादौ साधितत्वात् । 'शरीररूपकविन्यस्तगृहीतेः' इत्यादौ तु सांख्यप्रसिद्धं प्रधानं निषिध्य वैदिकमव्यक्तमेवोक्तम्। तथा च सौकरायणश्रुतिः 'शरीररूपिका अशरीरस्य विष्णोर्यतः प्रिया सा जगतः प्रसूतिः' इति । सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी न देव इति विशेषः । 'सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजडां च बुद्ध्वा । सैवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देवः' इति ऋग्वेदखिलेषु ॥ ५ ॥

ज॥तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह —महतइति। 'अनाद्यनन्तं महतः परम्' इति वाक्यप्रतिपाद्यमिति यावत्।अत्राभ्युच्चययुक्तिं चाह—तमिति।ननु'उक्तपरामर्शोपपत्तेः' इति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धेत्याह—महतइति । तथाचोक्तवक्ष्यमाणवलात् 'अव्यक्तात्पुरुषः परः' इत्युक्तस्यायं परामर्श इति भावः । श्रुत्यन्तरेणैवं व्याख्या।तत्त्वाचैतद्वाक्यं तत्परमित्याह—तथाचेति। पुरुभिर्हूतः पुरुहूतः। नन्वव्यक्तं नाम तत्त्वमेव नास्तीति सूत्रकृतोक्तम्; ततस्तदभिमानिन्यव्यक्ताख्या देवताऽपि नास्ति; तत्कथं तद्विषयतया व्याख्यानमित्यत आह—नचेति । तर्हि कथं तत्सूत्रमित्यत आह—शरीरेति। साङ्ख्यप्रसिद्धं प्रधानमिति स्वतन्त्रं मुख्यतः शब्दवाच्यमित्यर्थः। वैदिकमिति भगवदधीनं तत्सम्बन्धेन शब्दवाच्यमित्यर्थः । अत्र श्रुतिं चाह—तथाचेति। प्राक् 'तयाऽप्यपरोक्षीकृताव्यक्तानाम्' इत्यादिनैकं प्रयोजनमुक्तम् अपरं च सप्रमाणकमाह—सुव्रतानामिति ।बुद्ध्वेत्युक्तप्रकारेणोपासीना य इति शेषः। एतत्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम् ॥ ५ ॥

रा॥मयि संन्यस्य,मत्पराः-मदेकप्राप्याः अनन्येनैव योगेन अनन्यप्रयोजनेन योगेन मां ध्यायन्त उपासते-ध्यानार्चनप्रणामस्तुतिकीर्तनादीनि स्वयमेवात्यर्थप्रियाणि प्राप्यसमानि कुर्वन्तो मामुपासत इत्यर्थः; तेषां मत्प्राप्तिविरोधितया मृत्युभूतात्संसाराख्यात्सागरादहमचिरेणैव कालेन समुद्धर्ता भवामि ॥ ६ ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८

अतोऽतिशयितपुरुषार्थत्वात्सुलभत्वादचिरलभ्यत्वाच्च मय्येव मन आधत्स्व-

ता॥चेतसा।मत्पराः अहं परः परमप्राप्यं येषां ते मत्परा इति हृदि निधाय—मदेकप्राप्याइत्युक्तम्।अनन्यप्रयोजनेनेति —उपलक्षणं भगवद्ध्यानं 'सततं कीर्तयन्तः'इत्याद्युक्तानाम्।भगवत्प्राप्त्युपाये प्रयोजनत्वधीर्भवति; तद्बुद्धेर्विधिरिति भावः। स्वयमेवेति—न तु फलापेक्षयेत्यर्थः। मृत्युभूतात्संसाराख्यादिति—निषादस्थपतिन्यायात्समानाधिकरणसमास उचितः। हेयत्वार्थे च विशेषणमत्रोपयुक्तमिति भावः। मत्प्राप्तिविरोधितयेति —मृत्युत्वोपचारनिमित्तम्। सत्यां हि भगवत्प्राप्तौ अमृतत्वम्। 'न' इत्यस्य व्यस्ततया क्रियान्वयभ्रमव्युदासाय अचिरेणैव कालेन समुद्धर्तेत्यन्वय उक्तः ॥ ६ ॥ ७ ॥

सामान्येनोक्तं कर्तव्यमर्थं 'मय्येव' इत्यादिना श्रोतर्यर्जुने निवेशयतीति सङ्गतिप्रदर्शनायाह—अत इति। प्रागुक्तमत्रत्यं च समुच्चित्य हेतुत्रयमुक्तम् —अतिशयितपुरुषार्थत्वादित्यादिना। समाध्युपक्रम-

शं॥ईश्वरे संन्यस्य मत्पराः अहं परः येषां ते मत्पराः सन्तः अनन्येनैव अविद्यमानम् अन्यत् आलम्बनं विश्वरूपं देवम् आत्मानं मुक्त्वा यस्य सः अनन्यः तेन अनन्येनैव, केन ? योगेन समाधिना मां ध्यायन्तः उपासते ॥ ६ ॥

तेषां किम् ?—तेषां मदुपासनैकपराणाम् अहम् ईश्वरः समुद्धर्ता—कुतः इति? आह—मृत्युसंसारसागरात् मृत्युयुक्तः संसारः मृत्युसंसारः, स एव सागर इव सागरः, दुस्तरत्वात्, तस्मात् मृत्युसंसारसागरात् अहं तेषां समुद्धर्ता भवामि न चिरात्। किं तर्हि?—क्षिप्रमेव हे पार्थ मयि आवेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं चेतः येषां ते मय्यावेशितचेतसः तेषाम् ॥ ७ ॥

यतः एवं, तस्मात्—मयि एव विश्वरूपे ईश्वरे मनः सङ्कल्पविकल्पात्मकं समा-

आ॥मदुपासकानां भक्तानां न कश्चित्क्लेश इति दर्शयति—ये त्वित्यादिना। उक्तं च सौकरायणश्रुतौ—'उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किन्तु तेषाम्' इति। 'तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः। अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्' इति च मोक्षधर्मे ॥ ६ ॥

ज॥नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते, भगवदुपासकानां तु तदभावो न प्रतीयते, अतस्तदेतत्सर्वमिति कथमुक्तमित्यत आह—मदुपासकानामिति। भक्तानामित्यनेन नान्यत्रात्यन्तसमादर इति सूचयति।अत्रानन्येनैव योगेनेत्यादिना 'विनाऽव्यक्तोपासनम्' इत्येतत्प्रतीयते। उपासत इत्येवोक्त्याऽतिशयोपासनाद्यभावः। नचिरादित्यनेन तत्रापीत्यादिकं 'तेषामहं समुद्धर्ता भवामि' इत्यनेन देवस्त्वित्यादिकम् आगामिगीतावाक्यमपेक्ष्य प्राग्बुद्ध्यारोहाय तदुक्तमिति। अत्र श्रुत्यादिसंमतिं चाह—उक्तंचेति। तेषामार्तादीनां मध्ये गतिसाधनादिसंपादकः ॥ ६ ॥

रा॥मयि मनस्समाधानं कुरु; मयि बुद्धिं निवेशय-अहमेव परमप्राप्य इत्यध्यवसायं कुरु; अत ऊर्ध्वं मय्येव निवसिष्यसि-अहमेव परमप्राप्य इत्यध्यवसायपूर्वकमनोनिवेशानानन्तरमेव मयि निवसिष्यसीत्यर्थः ॥ ८ ॥

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥** ९

**अथ सहसैव मयि स्थिरं चित्तं समाधातुं न शक्नोषि, ततोऽभ्यासयोगेन मामाप्तुमिच्छ — स्वाभाविकानवधिकातिशयसौन्दर्यसौशील्यसौहार्दवात्सल्यकारुण्यमाधुर्यगाम्भीर्यौदार्यशौर्यवीर्यपराक्रमसार्वज्ञसत्यकामत्वसत्यसंकल्पत्वसर्वेश्वरत्वसकलकारणत्वाद्यसंख्येयगुणसागरे निखिलहेयप्रत्यनीके मयि निरतिशयप्रेमगर्भस्मृत्यभ्यासयोगेन**

---

ता॥परत्वव्यक्त्यर्थं—**मयि मनस्समाधानं कुर्वि**त्युक्तम्। उपायभूतमनस्समाधानेन पुनरुक्तिपरिहाराय बुद्धिशब्दार्थं प्राप्यभूतं तद्विषयविशेषं चाह—**अहमेवे**ति। 'अत ऊर्ध्वम्' इत्युपदेशकालानन्तर्यपरत्वव्युदासायाह --**अध्यवसायपूर्वकमनोनिवेशानानन्तर**मिति। अव्यवधानविषयेण 'अत ऊर्ध्वम्' इत्यनेन अवधारण फलितमिति वा तत्रैवकारस्यान्वयमभिप्रेत्य वा —**अनन्तरमेवे**त्युक्तम्।**मयि निवसिष्यसि**-निवत्स्यसीति यावत्। अत्राधारत्वमात्रं सर्वदास्ति, तद्बुद्धिश्च श्रवणत एव जातेति न तत्परत्वमत्रोचितम्; अतो मनोनिवेशानानन्तरमेव मुक्तवद्भविष्यसीत्यर्थः । यद्वा दृष्टादृष्टसर्वप्रकाररक्षके मयि, आचार्ये शिष्यवत् पितरि पुत्रवदवस्थित इति निर्भयो भवेत्यभिप्रायः।भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुसुखोपादानत्वाच्च श्रैष्ठ्यमुक्तम्। तस्मिन्मय्यध्यवसायं कुरुष्वेति चार्जुनं प्रत्यनुशिष्टम् ॥ ८ ॥

अथ शब्दादिविषयवासनाकृष्टचेतसोऽत्यन्तादृष्टपूर्वे त्वयि कथं स्थिरं चित्तसमाधानं शक्यमित्यर्जुनाशयमुन्नीय तदुपायमुपदिशति --**अथ चित्त**मिति। कदाचिदप्यशक्यत्वेऽप्यनुपदेश्यत्वस्यैव, तदुपायोपदेशश्च व्यर्थस्यादित्यत्राह—**सहसैवे**ति । **स्थिर**मिति क्रियाविशेषणम्; मनसश्चलस्वभावत्वान्न तद्विशेषणत्वमुचितम् । **अथे**ति प्रश्नार्थः; यद्यर्थविश्रान्तो वा । **तत**इति—साक्षाच्चित्तसमाधानाशक्तत्वादित्यर्थः । एवमुत्तरत्राप्यथततश्शब्दयोरर्थो ग्राह्यः । किंविषयोऽभ्यासः; कथंच तस्यापि शक्यत्वं ?; कथं वा तेन त्वत्प्राप्तिरित्यत्राह—**स्वाभाविके**ति । इतरपरिहारहेतुभूतगुणवति तु विशेषेण सजन्त इत्यभिप्रायेण गुणगणग्रहणम् । अयमेवाभिप्रायो 'मद्गुणानुसन्धानकृत' इत्यत्र व्यक्तो भविष्यति। तत्तद्गुणानां प्रत्येकं चित्ताकर्षकत्वप्रकारो यथासम्भवमनुसन्धेयः। सकलकारणत्ववचनं पितृत्वेन प्रीत्यर्थमाश्चर्यत्वार्थं च। गुणवत्यपि यत्किंचिद्दोषदर्शनेऽपि मात्रया विरज्येरन्निति तत्परिहाराय निखिलहेयप्रत्यनीकत्वोक्तिः । हिरण्यादिवद्विपरीताभ्यासपरिहाराय --**निरतिशयप्रेमगर्भे**त्युक्तम् । आलम्बने पुनःपुनस्स्थापनमभ्यासः; स एव योगः । अभ्यासवैराग्याभ्यां चित्तनिरोधश्च योगानुशासनेऽस्मिन्नपि शास्त्रे

---

**श॥धत्स्व स्थापय । मयि अध्यवसायं कुर्वतीं बुद्धिं च आधत्स्व निवेशय । ततः ते किं स्यात् इति ? शृणु—निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि वासं करिष्यसि एव अतः शरीरपातात् ऊर्ध्वम् । न संशयः संशयः अत्र न कर्तव्यः ॥ ८ ॥**

**अथ त्वं यथा अवोचं तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरम् अचलं न शक्नोषि चेत्? ततः पश्चात् अभ्यासयोगेन, चित्तस्य एकस्मिन् आलम्बने सर्वतः समाहृत्य**

रा॥ स्थिरं चित्तसमाधानं लब्ध्वा मां प्राप्तुमिच्छ ॥ ९ ॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥** १०

अथैवंविधस्मृत्यभ्यासेऽप्यसमर्थोऽसि, मत्कर्मपरमो भव-मदीयानि कर्माण्यालयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पाहरणपूजाप्रवर्तननामसंकीर्तनप्रदक्षिणस्तुतिनमस्कारादीनि, तान्यत्यर्थप्रियत्वेनाचर ; अत्यर्थप्रियत्वेन मदर्थं कर्माणि कुर्वन्नपि अचिरादभ्यासयोगपूर्विकां मयि स्थिरां चित्तस्थितिं लब्ध्वा मत्प्राप्तिरूपां सिद्धिमवाप्स्यसि ॥ १० ॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥** ११

अथ मद्योगमाश्रित्यैतदपि कर्तुं न शक्नोषि - मद्गुणानुसन्धानकृतमदेकप्रियत्वा-

---

ता॥पूर्वमेवोक्तः।अभ्यासमात्रस्याव्यवधानेन प्राप्तिहेतुत्वव्युदासाय—**स्थिरं चित्तसमाधानं लब्ध्वेत्यु**क्तम् ॥ ९ ॥

चिराभ्यस्तेषु प्रत्यक्षेषु शीघ्रलभ्येषु भोग्येषु प्रसक्तस्य मनसो दुर्निग्रहत्वाद्गुणवति विशुद्धेऽपि त्वय्यभ्यासो न शक्यः; कर्मस्वेव हि तेषुतेषु वासना; ततः कर्मस्वेव मनः प्रवर्ततेत्यर्जुनाभिप्रायमुन्नीय शीलितसजातीयमभ्यासोपायमुपदिशति 'अभ्यासेऽपि' इति । अथशब्दोऽत्रानुषक्तः । एवंविधत्वं निरतिशयप्रेमगर्भत्वम् । 'सर्वकर्म' इति परस्ताद्यज्ञादिकर्मणां पर्वान्तरत्वेन वक्ष्यमाणत्वादत्र च 'मत्कर्म' इति विशेषतो निर्देशाच्च भगवदसाधारण भक्त्यन्तरङ्गं 'सततं कीर्तयन्तो माम्' इत्यादिभिः प्राक्प्रपञ्चितमितिहासपुराणभगवच्छास्त्रादिप्रसिद्धं कर्मात्र विवक्षितमित्यभिप्रायेण—**आलयनिर्माणेत्यादिकमु**क्तम्। परमशब्दाभिप्रेतमाह—**तान्यत्यर्थप्रियत्वेनाचरे**ति। 'मामिच्छाप्तुम्' इति पूर्वश्लोकोक्ता प्राप्तिरेवात्रापि सिद्धिशब्देन विवक्षितेति तत्स्थानप्राप्त्या प्रतीयते । तत्र पूर्वप्रक्रियया परंपरयैवास्यापि कर्मणस्साधकत्वमित्यपिशब्देन द्योत्यत इति ज्ञापनायाह—**अभ्यासयोगपूर्विका**मिति । तत्तत्कर्मणामतिपवित्रत्वात्प्रतिकर्म तच्चिन्तनाच्च तत्स्मृत्यभ्यासोऽचिरात्सिध्यतीत्यर्थसिद्धमित्यभिप्रायेण—**अचिरादि**त्युक्तम् ॥ १० ॥

स्वार्थेष्वेव कर्मसु निबद्धचित्तस्य कथं त्वदर्थेषु कर्मस्वत्यर्थप्रियत्वेन प्रवृत्तिस्संभवेदित्यत्र तदुपायपरंपराकाष्ठाभूतं कर्मयोगं प्रत्यभिज्ञापयति—**अथैतदि**ति । 'मद्योगमाश्रितः' इत्यस्याक्षरयोगविषयेणोत्तरार्धेन अन्वयव्युदासाय पूर्वार्धान्वयमाह—**अथ मद्योग**मिति। तस्याशक्यत्वज्ञापनायाह **मद्गुणे**ति।

---

शं॥पुनःपुनः स्थापनम् अभ्यासः,तत्पूर्वकेन समाधानलक्षणेन योगेन मां विश्वरूपम् इच्छ प्रार्थयस्व आप्तुं हे धनञ्जय ॥ ९ ॥

अभ्यासे अपि असमर्थः असि अशक्तः असि यदि, मत्कर्मपरमः भव, मदर्थं कर्म मत्कर्म, तत्परमः मत्कर्मपरमः, मत्कर्मप्रधान इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेण अवाप्स्यसि ॥ १० ॥

अथ पुनः एतदपि यत् उक्तं मत्कर्मपरमत्वं तत् कर्तुम् अशक्तः असि मद्योगम्

रा॥कारं भक्तियोगमाश्रित्य भक्तियोगाङ्कुररूपमेतन्मत्कर्मापि कर्तुं न शक्नोषि, ततोऽक्षरयोगमात्मस्वभावानुसन्धानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु; मत्प्रियत्वेन मदेकप्राप्यताबुद्धिर्हि प्रक्षीणाशेषपापस्यैव जायते; यतात्मवान् - यतमनस्कः; ततोऽनभिसंहितफलेन मदाराधनरूपेणानुष्ठितेन कर्मणा सिद्धेनात्मध्यानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते; तथाच वक्ष्यते *'स्वकर्मणा तमभ्यर्च्य सिद्धिं

ता॥भक्तियोगावस्थाविशेषेष्वतः पूर्वावस्था नास्तीति व्यञ्जनाय—भक्तियोगाङ्कुररूपमित्युक्तम्। 'मद्योगम्' इत्यनेन जीवात्मयोगव्यवच्छेदः। ततश्च मद्योगमाश्रित्य तदङ्कुरे कर्मण्यसमर्थश्चेज्जीवात्मयोगमाश्रित्य तदङ्कुरे कर्मयोगे प्रवर्तस्वेति वाक्यार्थः। तदेतदभिप्रेत्याह—ततोऽक्षरेति। अक्षरयोगस्याप्यव्यवधानेन मोक्षोपायत्वव्युदासाय—परभक्तिजननमित्युक्तम्। सप्रकाराक्षरयोगप्रत्यभिज्ञापनार्थं, मध्यमषट्कोदिताक्षरयोगव्यवच्छेदार्थं च—पूर्वषट्कोदितमित्युक्तम्। सर्वकर्मफलत्यागस्याव्यवधानेन भक्तियोगजनकत्वव्युदासाय—तदुपायतयेत्युक्तम्। कर्मयोगपूर्वकात्मसाक्षात्कारस्य भक्त्युत्पत्त्युपयोगित्वप्रकारं प्रकरणान्तरोक्तं दर्शयति—मत्प्रियत्वेनेति। 'मय्येव मन आधत्स्व' इति पूर्वं परमात्मनि मनस्समाधानं विहितम्; तदशक्तं प्रत्युपदिश्यमानाक्षरयोगाङ्कुररूपे कर्मणि प्रवृत्तस्य तु पूर्वषट्कप्रपञ्चितैर्हेतुभिः मनोनियमनशक्यत्वं 'यतात्मवान्' इत्युक्तमित्यभिप्रायेण—यतमनस्क इत्युक्तम्। कर्मयोगस्यानन्तरश्लोकेऽभिधास्यमानक्रमेण परम्परया भक्तियोगजनकत्वप्रकारमाह—ततोऽनभिसंहितेति। 'फलत्यागं कुरु' इति साध्यांशत्यागवचनेन तत्पूर्वकसाधनानुष्ठानं विवक्षितमिति ज्ञापनाय—अनभिसंहितफलेनेत्यादिकमुक्तम्। अनन्तराभिधास्यमानमनश्शान्तिद्वारात्मध्यानसिद्धिः। अविद्या-संसारकारणं कर्म, 'अविद्या कर्मसंज्ञा' इत्युपक्रम्य 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता' इति वचनात्। आदिशब्देन 'अनात्मन्यात्मबुद्धिर्या' इत्याद्युक्तसङ्ग्रहः। यद्वात्र अविद्या देहात्मभ्रमादिः; आदिशब्देन कर्मवासनादिसङ्ग्रहः। परभक्तिजनकत्वसिद्ध्यर्थमुक्तं—मच्छेषतैकस्वरूप इति। यथा बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद्भ्रष्टस्य व्याधगृहीतस्य पक्कणे वर्तमानस्य राजकुमारस्याप्तोपदेशात्स्वात्मनस्तथात्वं मत्वा विमृशतस्स्वात्मनि राजसाम्यमङ्गप्रत्यङ्गादिषु पश्यतस्तस्मिन् यथा पितृत्वप्रीतिर्निरतिशया जायते; एवमस्यापि यथोपदेशं भगवच्छेषभूते स्वात्मनि तत्साम्याकारेण साक्षात्कृते भक्तिसिद्ध्यर्थे न किञ्चित्कर्तव्यमस्तीत्यभिप्रायेण—मयि परा भक्तिस्स्वयमेवोत्पद्यत इत्युक्तम्। एतेनाध्यायारम्भे '[3]ये चाप्यक्षरमव्यक्तम्' इत्युक्ताक्षरयोगोऽप्यक्षरसाक्षात्कारद्वारा परभक्तिमुत्पाद्य परमात्मप्राप्तौ विश्राम्यतीति सिद्धम्। स एव ह्यत्रापि प्रथमषट्कोक्तोऽक्षरयोगः प्रस्पष्टमुच्यते। ननु यदशक्तं प्रति यदुपदिश्यते, तत्तत्तुल्यफलमशक्ताधिकारं साधनान्तरं दृष्टम्; यथावगाहनाशक्तस्य स्नानान्तराणि। उच्यते चान्यत्र क्रियायोगस्य साक्षान्मोक्षसाधनत्वं—'[4]मोक्षकारणमव्यक्तमचिन्त्यमपरिग्रहम्। तमाराध्य जगन्नाथं क्रियायोगेन मुच्यते' इति। तथात्रापि

प्र-पा॥ *गी. १८-४६॥
१. वि. पु. ६-७-६१॥
२. वि पु. ६-७-११॥ 'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसम्भूतिबीजमेतद्द्विधा स्थितम्॥
३. गी. १२-१॥ ४॥

अ॥आश्रितः; मयि क्रियमाणानि कर्माणि संन्यस्य यत् करणं तेषाम् अनुष्ठानं सः मद्योगः,

रा॥विन्दति मानवः'इत्यारभ्य*'विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते।ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति ॥ ११ ॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥** १२

अत्यर्थप्रीतिविरहितात्कर्कशरूपात् स्मृत्यभ्यासादक्षरयाथात्म्यानुसन्धानपूर्वकं तदापरोक्ष्यज्ञानमेवात्महितत्वे विशिष्यते ; आत्मापरोक्ष्यज्ञानादप्यनिष्पन्नरूपात्तदुपा-

ता॥किं न स्यादिति शङ्कायां कर्मयोगस्य भक्तियोगसाधनत्वम् अष्टादशाध्याये वक्ष्यमाणं दर्शयति —तथाचेति। अन्यत्रचाप्ययं क्रमस्स्फुटः —'तत्र चित्तं समावेष्टुं न शक्नोति भवान्यदि । तदभ्यासपरस्तस्मिन् कुरु योगं दिवानिशम् । तत्राप्यसामर्थ्यवतः क्रियायोगो महात्मनः । ब्रह्मणा यस्समाख्यातस्तत्परस्सततं भव । करोषि यानि कर्माणि देवदेवे जगत्पतौ । समर्पयस्व भद्रं ते ततः कर्म प्रहास्यसि । प्रधानं कारणं योगो विमुक्तेर्दितिजेश्वर । क्रियायोगश्च योगस्य परमं तस्य साधनम्' इति । 'मद्भक्तिं लभते पराम्' इति वक्ष्यमाणफलस्य कर्मयोगहेतुकत्वं प्रकरणसिद्धमिति ज्ञापनाय —'**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यारभ्ये**त्युक्तम् ॥ ११ ॥

अथाव्यवहितोपायानधिकारनिमित्तखेदनिवृत्त्यर्थं रजनीकरबिम्बलिप्सोदस्तहस्तस्तनन्धयवदशक्ये प्रवृत्तिपरिहारार्थं च व्यवहितानेवोपायान्यथाधिकारं सौकर्यातिशयेन प्रशंसन्नुक्तमुपपादयति—'श्रेयो-हि'इति। यथावस्थितवेषेणाभ्यासात्तदुपायस्य श्रेयस्त्वं वक्तुमयुक्तं, वैपरीत्यात् ; अतोऽनधिकारिणा क्रियमाणो भगवदभ्यासः परिपक्वफलरसलोलुपवड्करमृदितशलाटुवन्नीरस एव स्यादिति तदपेक्षया यथावस्थितसरसाभ्यासहेतोश्श्रेयस्त्वमुचितमेव भवेदित्यभिप्रायेण —**अत्यर्थप्रीतिरहिता**दित्युक्तम् । तत एव च पित्तोपहतपयःपानवदक्षीणपापस्य दुष्करतामाह—**कर्कशरूपा**दिति । अत्र परमात्माभ्यासोपायत्वेन विहितं ज्ञानं जीवात्मविषयमेव युक्तम् ; तच्च ध्यानसाध्यत्वेन विवक्षितत्वादपरोक्षाकारमित्यभिप्रायेण —**अक्षरयाथात्म्यानुसन्धानपूर्वकं तदापरोक्ष्यज्ञान**मित्युक्तम् । 'श्रेयः' इत्यस्य 'विशिष्यते' इत्यस्य च समानार्थत्वज्ञापनाय —**हितत्वे विशिष्यत** इत्युक्तम् । व्यवहितोपायस्यापि सौकर्यातिशयलक्षणमत्र हितत्वम्; न तु मुख्यत्वादिरूपम्।**अनिष्पन्नरूपा**दित्यस्यापि पूर्ववदभिप्रायः।

प्र-पा ॥ *गी. १४ २६ ॥ १ ॥ २. गी. १८-५४ ॥

शं॥तम् आश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततः अनन्तरं कुरु यतात्मवान् संयतचित्तः सन् इत्यर्थः ॥ ११ ॥

इदानीं सर्वकर्मफलत्यागं स्तौति—श्रेयः हि प्रशस्यतरं ज्ञानं, कस्मात्? विवेकपूर्वकात् अभ्यासात् । तस्मादपि ज्ञानात् ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो

आ॥अज्ञानपूर्वादभ्यासाज्ज्ञानमेव विशिष्यते। ज्ञानमात्रात् सज्ञानं ध्यानम् । तथा च सामवेदे अनभिम्लानशाखायाम्—'अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः । ध्यानं

ज॥ननु ज्ञानमभ्यासस्य साधनम्, तत्कथं ततः श्रेय इत्यत आह —अज्ञानेति।एवेति केवलम्।'ज्ञानाद्ध्यानं विशिष्यते' इत्यसत् , सध्यानस्यापि ज्ञानस्य संभवात्, अज्ञानपूर्वस्य ध्यानस्य संभवाच्चेत्यत आह—ज्ञानमात्रादिति । उपपत्तिलब्धमर्थं श्रुत्याऽपि द्रढयति--तथाचेति । तत्सहितं ज्ञानसहितं ध्यानम् । ततो ज्ञानमात्रादधिकम् । ध्यानात्कर्मफलत्यागो विशिष्यत इत्येतदन्यथाप्रतीतिनिरासाय व्याख्याति—ध्यानादिति । त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते, न प्रतीतार्थे तात्पर्यमित्यर्थः । कुत इ-

रा॥यभूतात्मध्यानमेवात्महितत्वे विशिष्यते; तद्ध्यानादप्यनिष्पन्नरूपात्तदुपायभूतं फलत्यागेनानुष्ठितं कर्मैव विशिष्यते;अनभिसंहितफलादनुष्ठितात् कर्मणोऽनन्तरमेव निरस्तपापतया मनसश्शान्तिर्भविष्यति ; शान्ते मनसि आत्मध्यानं सम्पत्स्यते , ध्यानाच्च त-

ता॥कर्मणो रजस्तमोमूलरागद्वेषादिनिवृत्तिरूपशान्तिजनकत्वेऽवान्तरव्यापारमाह—निरस्तपापतयेति। ननु 'त्यागाच्छान्तिः' इत्यत्रापि पूर्ववच्छ्रेयस्त्वविधानमेवोचितम्, अन्यथा रीतिभङ्गप्रसङ्गात् , ध्यानस्य कर्मसाध्यतया विवक्षितत्वेन ततोऽन्यस्य कर्मसाध्यत्वनिर्देशायोगात् शान्तिव्यवहितस्य च कथं वैशिष्ट्यमित्यत्राह—शान्ते मनसीति। अयमभिप्रायः—'अनन्तरम्' इति निर्देशेनैव रीतिस्त्यक्तेति प्रतीयते; यतश्च यदनन्तरं यद्दृश्यते, तस्य तत्कार्यत्वमेव व्यक्तम् ; ध्यानं प्रति शान्तेर्हेतुतया ध्यानस्य कर्मसाध्यत्वात्तद्वैशिष्ट्याभिप्रायानुरूपमेव चेदम्' इति । अत्र 'त्यागाच्छान्तिरनन्तरम्' इति हेतुकार्यभावनिर्देश उपलक्षणतया ध्यानादिष्वप्यभिमत इति ज्ञापनाय—ध्यानाच्चेत्यादिकमुक्तम् । ननु 'श्रेयो हि

शं॥ध्यानात् अपि कर्मफलत्यागः,'विशिष्यते' इति अनुषज्यते।एवं कर्मफलत्यागात् पूर्वोक्तविशेषणवतः शान्तिः उपशमः सहेतुकस्य संसारस्य अनन्तरम् एव स्यात्, न तु कालान्तरम् अपेक्षते ॥

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयस्साधनम् इति उपदिष्टं, न प्रथममेव। अतश्च 'श्रेयो हि ज्ञानम्' इत्याद्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते, सम्पन्नसाधनानुष्ठानाशक्तौ अनुष्ठेयत्वेन श्रुतत्वात्। केन धर्मेण स्तुतित्वं 'यदा सर्वे प्रमुच्यन्ते' इति सर्वकामप्रहाणात् अमृतत्वम् उक्तं तत् प्रसिद्धं च । कामाश्च सर्वे श्रौतस्मार्तकर्मणां फलानि । तत्त्यागेन च विदुषः ध्याननिष्ठस्य अनन्तरैव शान्तिः। इति सर्वकामत्यागसामान्यम् अज्ञकर्मफलत्यागस्य अपि

आ॥ततश्चापरोक्षं ततः शान्तिर्भविष्यति' इति।'ध्यानात्कर्मफलत्यागः' इति तु स्तुतिः।अन्यथा कथमसमर्थोऽसीत्युच्यते।'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इतिचोक्तम्। 'सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन्।कर्माफलाकाङ्क्षमथो विरागस्त्यागश्च न ज्ञानकलाफलार्हाश्च' इति च काषायणशाखायाम् । वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभाव इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता। केवलध्यानात्फलत्यागयुक्तं ध्यानमधिकम् ।

ज॥त्यत आह—अन्यथेति।'अथैतदप्यशक्तोऽसि कर्तुम्' इति ध्यानात्प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा ध्यानादाधिक्ये सत्युपदिश्येतेत्यर्थः । कर्मसंन्यासात्कर्मफलरागसंन्यासात् कर्मयोगोऽपि विशिष्यते, किमुत ध्यानयोगः, वक्ष्यमाणकर्मादिसर्वाधिकम् । परात्मन् परमात्मविषये । विरागः शोभनाध्यासाभावः । ननु तयोस्त्विति सर्वाधिकमिति चेत्तयोरपि वाक्यत्वात्कथं तद्विरोधेन ध्यानादितिवाक्यस्य स्वार्थे तात्पर्याभावो व्याख्यात इत्यत आह—वाक्येति । वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः। इतरत्र ध्यानादिति वाक्यस्य प्रतीतेऽर्थे युक्त्यन्तरं चाह—ध्यानादीति । त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन 'परीक्ष्य लोकान्' इत्यादौ उच्यते । न च फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः। अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति। प्रकारान्तरेण व्याख्याति—केवलेति । त्यागरहितात् ध्यानात् । ननु कुतो ध्यानादिति केवलस्य निर्धारणं, कुतश्च कर्मफलत्याग इति तत्सहितध्यानलक्षणात्त्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वक-

रा॥दापरोक्ष्यम्; तदापरोक्ष्यात्परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्यात्मनिष्ठैव श्रेयसी; आत्मनिष्ठस्याप्यशान्तमनसो निष्ठाप्राप्तयेऽन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थः ॥ १२ ॥

अनभिसंहितफलकर्मनिष्ठस्योपादेयान् गुणानाह—

ता॥ज्ञानमभ्यासात्' इत्यत्र स्वारस्येन अभ्यासप्रभृत्युत्तरोत्तरमन्तरङ्गत्वाकारेण प्रकृष्टं ज्ञानादिकमिति किं नाङ्गीक्रियत इत्यत्र पिण्डितार्थं वदन् व्यवहितनिष्ठाश्रैष्ठ्यं निगमयति—इति भक्तियोगाभ्यासाशक्तस्येति। अयमभिप्रायः—'अथ चित्तं समाधातुं न शक्नोषि' इति ह्युपक्रान्तम्; 'अथैतदप्यशक्तोऽसि' इत्यनेन च भक्तियोगाङ्कुरेऽप्यशक्तस्य कर्मफलत्यागो विहितः; सचात्र 'ध्यानात्कर्मफलत्यागः' इति प्रत्यभिज्ञायते; ततश्चाभ्यासापेक्षया तस्याशक्तविषयत्वे सिद्धे तदुभयमध्यगतयोरपि ज्ञानध्यानयोरभ्यासात्पूर्वभावित्वेन कर्मणः परत्वेन च प्रतीयमानयोस्तत्तदशक्ताधिकारिविशेषविषयत्वं सिद्धम्—इति ॥

एवं 'भक्तेश्श्रैष्ठ्यमुपायोक्तिरशक्तस्यात्मनिष्ठता' इत्येतावदुक्तम्; 'तत्प्रकारास्त्वतिप्रीतिर्भक्ते द्वादश उच्यते' इत्युक्तमुभयमवशिष्टम्; तत्रापि 'ये तु धर्म्यामृतम्' इत्यध्यायान्तिमश्लोकेनातिप्रीतिरुच्यते, ततः पूर्वैः 'अद्वेष्टा' इत्यादिभिस्सप्तभिश्श्लोकैरात्मनिष्ठाप्रकारा उच्यन्त इत्याह—अनभिसंहितेति। 'तत्प्रकाराः' इत्यनेनेतिकर्तव्यताविशेषरूपाः प्रकारा विवक्षिता इति ज्ञापनायोक्तम्—उपादेयान् गुणानाहेति। ननु 'कर्मनिष्ठस्योपादेयान् गुणानाह' इति कथं संगच्छते, येषु हि श्लोकेषु 'मय्यर्पितमनो-

प्र-पा॥ १. गी. सं. १६. भक्तिशैघ्र्यं. पा ॥ २. गी. १२-१४ ॥

शं॥अस्ति इति तत्सामान्यात् सर्वकर्मफलत्यागस्तुतिः इयं प्ररोचनार्था। यथा अगस्त्येन ब्राह्मणेन समुद्रः पीतः इति इदानीन्तनाः अपि ब्राह्मणाः ब्राह्मणत्वसामान्यात् स्तूयन्ते। एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयस्साधनत्वम् अभिहितम् ॥ १२ ॥

आ॥ध्यानयुक्तत्याग एव चात्रोक्तः। अन्यथा कथं 'त्यागाच्छान्तिरनन्तरम्' इत्युच्यते। कथं च ध्यानादाधिक्यम्। तथा च गौपवनशाखायां—'ध्यानात्तु केवलात्त्यागयुक्तं तदधिकं भवेत्' इति। न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति। भवति च ध्यानयुक्तात्। केवलत्यागस्तुतिरेवमपि भवति। यथाऽनेन युक्तो जेता नान्यथेत्युक्ते ॥ १२ ॥

ज॥माह—ध्यानेति। त्यागयुक्तं ध्यानं, ध्यानयुक्तः त्याग इति द्विविधोक्त्योक्तं प्रकारद्वयं सूचयति। अन्यथा केवलत्यागाङ्गीकारे। कथं चेत्यत्राप्यन्यथेति वर्तते। न केवलमन्यथानुपपत्त्याऽयमर्थः सिद्धः, किं तर्हि? श्रुत्यापीत्याह—तथाचेति। आद्यामन्यथानुपपत्तिमुपपादयति—नहीति। ततश्चापरोक्ष्यमित्युक्तश्रुतिविरोधादिति भावः। उक्ताङ्गीकारे कथमेतदनुपपत्त्यभाव इत्यत आह—भवतिचेति। त्यागादिति संबन्धः। ज्ञानमात्रव्यवधानेनेति भावः। द्वितीयानुपपत्तिस्तु तयोस्त्वित्युपपादितैव। ननु 'अथैतदप्यशक्तोऽसि' इत्यनेन केवलत्यागो विहितः। तत्प्ररोचनाय 'श्रेयोहि' इति तस्य स्तुतिरुपक्रान्ता। नच केवलध्यानात् तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते, किंतु तद्युक्तस्य ध्यानस्यैव; अतः पूर्वसङ्गतत्वात्पूर्वमेव व्याख्यानं युक्तम्; ननु द्वितीयम्, असङ्गतेरित्यत आह—केवलेति। यथाऽनेन भृत्येन युक्तो राजा रिपूणां जेता नाऽन्यथेत्युक्ते भृत्यस्य स्तुतिर्लभ्यते; तथैवमप्यस्मिन्नपि व्याख्याने केवलत्यागस्तुतिर्युक्ता; ध्यानस्य ध्यानान्तराधिक्ये तत्साहाय्यस्य हेतुत्वेनोक्तत्वादित्यर्थः ॥ १२ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारस्समदुःखसुखः क्षमी ॥ १३
सन्तुष्टस्सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तस्स मे प्रियः ॥ १४

रा॥अद्वेष्टा सर्वभूतानां-विद्विषतामपकुर्वतामपि सर्वेषां भूतानामद्वेष्टा - मदपराधानु-

ता॥बुद्धिर्यो मद्भक्तस्स मे प्रियः'' 'सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः'' 'शुभाशुभपरित्यागी भक्तिमान्यस्स मे प्रियः' 'अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः' इति भक्तिनिष्ठ एव प्रियत्वेन पुनःपुनरुच्यते। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमोक्त एव ज्ञानी प्रियशब्देन प्रत्यभिज्ञायते; तत्समानाधिकरणानां च 'अद्वेष्टा' इत्यादीनां तदुपायभक्त्यङ्गपरत्वं युक्तमिति । अत्रोच्यते— 'ध्यानात्कर्मफलत्यागः' इति कर्मप्रसङ्गानन्तरमेव पठितानां तदङ्गत्वं प्रतीयते । अङ्गभूतानां चैषामुपकारः 'त्यागाच्छान्तिरनन्तरम्' इत्युक्तः। प्रागपि कर्मयोगाङ्गतया चैते प्रतिपादिताः । या तु स्ववाक्ये 'मद्भक्तः' इत्यादिभिः प्रतीता भक्तिः,सा कर्मयोगान्तर्भूतभक्तिरेवेति तत्रतत्र श्लोके व्याख्यास्यति। नहि भक्तिगन्धरहितौ कर्मज्ञानयोगौ; यथोक्तं—'त्रयाणामपि योगानां त्रिभिरन्योन्यसंगमः' इति । साक्षाद्भक्तिनिष्ठास्तु 'येतु' इति श्लोकेन वक्ष्यन्ते। तत्रहि तुशब्देन 'मत्परमा भक्ताः' इति मत्परमशब्दविशेषणेन'अतीव मे प्रियाः'इति प्रियत्वातिशयवर्णनेन च भक्तान्तरप्रतिपत्तिर्दृढतरा जायते। ततश्च तत्पूर्वं प्रियत्वमात्रेण निर्दिष्टास्त्ववर्वाचीना एव भक्ता इति संग्रहविस्तरकृतोराशयः । प्रसक्तप्रतिषेधाय 'सर्वभूतानाम्'इति सविशेषणनिर्देशाभिप्रेतमाह— **विद्विषतामपकुर्वतामपीति**।विशेषणे तात्पर्यमिति ज्ञापनाय— **सर्वेषामिति** व्यासः । **विद्विषतामिति** मानसः, **अपकुर्वतामिति** वाचिकः कायिकश्च व्यापारः। न केवलं तेष्वद्वेषमात्रम् , अपितु मैत्री चेत्याह— **मैत्रइति** । मैत्रीहेतुं दर्शयति— **मदपरा**

प्र-पा॥१. गी. १२-१६ ॥ २. गी. १२-१७ ॥ ३. गी. १२-१९ ॥ ४. गी. ७-१७ ॥ ५ गी सं. २४ ॥

शं॥अत्र च आत्मेश्वरभेदम् आश्रित्य विश्वरूपे ईश्वरे चेतस्समाधानलक्षणः योगः उक्तः, ईश्वरार्थं कर्मानुष्ठानादि च, 'अथैतदप्यशक्तोऽसि' इति अज्ञानकार्यसूचनात्। न अभेददर्शिनः अक्षरोपासकस्य कर्मयोगः उपपद्यते इति दर्शयति । तथा कर्मयोगिनः अक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव' इति । अक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यम् उक्त्वा, इतरेषां पारतन्त्र्यात् ईश्वराधीनतां दर्शितवान् 'तेषामहं समुद्धर्ता' इति । यदि हि ईश्वरस्य आत्मभूताः ते मताः, अभेददर्शित्वात् अक्षरस्वरूपाः एव ते इति समुद्धरणकर्मविषयवचनं तान् प्रति अपेशलं स्यात् । यस्माच्च अर्जुनस्य अत्यन्तमेव हितैषी भगवान् तस्य सम्यग्दर्शनानागन्धितं कर्मयोगं भेददृष्टिमन्तमेव उपदिशति।न च आत्मानम् ईश्वरं प्रमाणतः बुद्ध्वा कस्यचित् गुणभावं जिगमिषति कश्चित्, विरोधात् । तस्मात् अक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षात् अमृतत्वकारणं वक्ष्यामीति प्रवर्तते—अद्वेष्टा सर्वभूतानां सर्वेषां भूतानां न द्वेष्टा, आत्मनः दुःखहेतुमपि न किंचित् द्वेष्टि, सर्वाणि भूतानि आत्मत्वेन पश्यति । मैत्रं मित्रभावः, मैत्रः मित्रतया वर्तते इति सः मैत्रः ।

रा॥गुणमीश्वरप्रेरितान्येतानि भूतानि द्विषन्त्यपकुर्वन्ति चेत्यनुसन्दधानः, तेषु द्विषत्स्वपकुर्वत्सु च सर्वभूतेषु मैत्रीं मतिं कुर्वन् मैत्रः, तेष्वेव दुःखितेषु करुणां कुर्वन् करुणः, निर्ममः-देहेन्द्रियेषु तत्सम्बन्धिषु च निर्ममः, निरहङ्कारः - देहात्माभिमानरहितः, तत एव समदुःखसुखः - सुखदुःखागमयोः साङ्कल्पिकयोः हर्षोद्वेगरहितः, क्षमी - स्पर्शप्रभवयोरवर्जनीययोरपि तयोर्विकाररहितः, सन्तुष्टः - यदृच्छोपनतेन येनकेनापि देहधारणद्रव्येण सन्तुष्टः, सततं योगी सततं प्रकृतिवियुक्तात्मानुसन्धानपरः, यतात्मा-नियमितमनोवृत्तिः, दृढनिश्चयः-अध्यात्मशास्त्रोदितेष्वर्थेषु दृढनिश्चयः, मय्य-

ता॥र्घेति। अयमेवाद्वेषस्यापि हेतुः। **मैत्रीं मतिं कुर्वन्निति**—सामान्यविषये तद्धिताभिप्रेतविशेषोक्तिः। **मैत्रीं** हितैषिणीमित्यर्थः। करुणाया निरुपाधिकत्वायाह—**तेष्वेव दुःखितेष्विति** । **करुणां कुर्वन्निति** करुणशब्दनिर्वचनम्। नामधातोः क्विबन्तात्पचादित्वादच्प्रत्ययः, अर्शआदित्वाद्वा मत्वर्थीयः। एवं मैत्रशब्दे । द्विषत्स्वपकुर्वत्स्वेवेति चैवकाराभिप्रायः । निरहङ्कारत्वं निर्ममत्वे हेतुः । ममकारप्रसङ्गस्थले हि निर्ममत्वं विधेयमित्यभिप्रायेणाह – **देहेन्द्रियेषु तत्सम्बन्धिषुचेति**। अनात्मन्यात्मबुद्धिरेवात्र निषेध्योऽहंकार इत्यभिप्रायेणाह—**देहात्माभिमानरहित**इति। एतेन 'निर्गताहंप्रत्ययः' इति परव्याख्या दूषिता, अहमर्थस्यैवात्मत्वसमर्थनात् । **ततएवेति**—निर्ममत्वनिरहंकारत्वाभ्यामित्यर्थः। **क्षमीति**—नापकर्तृषु क्षमा विवक्षिता, 'अद्वेष्टा' इत्यादिना गतार्थत्वात्। ततश्च 'तांस्तितिक्षस्व' इति प्रागुक्तावर्जनीयसांस्पर्शिकद्वन्द्वतितिक्षा स्मार्यते । तत्पौनरुक्त्यपरिहाराय 'समदुःखसुखः' इत्येतदाभिमानिकविषयम् । तथा सति निर्ममत्वनिरहंकारत्वानन्तरोक्तिश्च सगच्छत इत्यभिप्रायेण—**सांकल्पिकयोरित्युक्तम्** । अहङ्कारममकारप्रयुक्तयोरित्यर्थः, 'सन्तुष्टो येनकेनचित्' इति वक्ष्यमाणत्वात्, 'यदृच्छालाभसन्तुष्टः' इति प्रागुक्तत्वाच्च । स एव सन्तोषोऽत्राप्यादरार्थं सङ्क्षेपेणोक्त इत्यभिप्रायेणाह—**यदृच्छोपनतेन येनकेनापीति**। अन्यत्रापि ह्युच्यते—'येनकेनचिदाच्छन्नो येनकेनचिदाशितः।यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः' इति । शास्त्रीयेष्वयत्नोपनतेषु प्रभूताल्पसरसविरसादिवैषम्यं नानुसन्धेयमिति भावः । यथोक्तमजगरेण—'न सन्निपतितं धर्म्यमुपभोगं यदृच्छया। प्रत्याचक्षे न चाप्येनमनुरुन्धे सुदुर्लभम्' इति । **सततमिति**—योगकालोपकारकवासनास्थैर्यार्थम् । योगशब्दश्चात्र योगदर्शनानुग्राहकप्राचीनानुसन्धानपरः, साक्षाद्योगस्य सर्वदा कर्तुमशक्यत्वादित्यभिप्रायेणाह—**सततं प्रकृतिवियुक्तेति** । सततमात्मचिन्तनवदनात्मचिन्तननिवृत्तिरपि योगान्तरङ्गमिति यतात्मशब्देनोच्यत इत्याह—**नियमितमनोवृत्तिरिति** । अन्येषां यत्र सन्देहप्रसङ्गः,तत्र ह्यस्य निश्चयो वाच्यः ; स चात्रानुष्ठानोपकारक एव ग्राह्यः ; तदाह—**अध्यात्मशास्त्रेति** । 'मयि' इत्यनेन 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तमाराध्यत्वं फलप्रदत्वं चात्र कर्मयोगनिष्ठस्य मनोबुद्ध्यर्पणार्थम् अपेक्षितमाभिसंहितमित्यभिप्रायेणाह—**भगवानिति**। भगवच्छब्देन सकलफलप्रदत्वौपयिकोभयलिङ्ग-

प्र-पा ॥ १. गी. १२-१९ ॥ २. गी ४-१२ ॥ ३. भारते. शान्तिपर्वणि. मोक्षपर्वणि २५१-१२॥ ४. भारते. आरण्यपर्वणि. अजगरपर्वणि ॥ ५. गी. ९-२४ ॥

शं॥करुणः एव च,करुणा कृपा दुःखितेषु दया,तद्वान् करुणः,सर्वभूताभयप्रदः,संन्यासी इत्यर्थः । निर्ममः ममप्रत्ययवर्जितः । निरहङ्कारः निर्गताहंप्रत्ययः । समदुःखसुखः, समे दुःखसुखे द्वेषरागयोः अप्रवर्तके यस्य सः समदुःखसुखः । क्षमी क्षमावान्, आक्रुष्टः अभिहतो वा अविक्रियः एव आस्ते ॥ १३ ॥

सन्तुष्टः सततं नित्यं, देहस्थितिकारणस्य लाभे अलाभे च उत्पन्नालंप्रत्ययः ।

रा॥र्पितमनोबुद्धिः-भगवान् वासुदेव एवानभिसंहितफलेनानुष्ठितेन कर्मणा आराध्यते, आराधितश्च ममात्मापरोक्ष्यं साधयिष्यतीति मय्यर्पितमनोबुद्धिः, य एवंभूतो मद्भक्तः- एवं कर्मयोगेन मां भजमानो यः, स मे प्रियः ॥ १३ ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥ १५

यस्मात् कर्मनिष्ठात् पुरुषान्निमित्तभूताल्लोको नोद्विजते-यो लोकोद्वेगकरं कर्म किञ्चिदपि न करोतीत्यर्थः. लोकाच्च निमित्तभूताद्यो नोद्विजते - यमुद्दिश्य सर्वलोको नो-

ता॥त्योक्तिः। वासुदेवशब्देन सर्वकर्माराध्यत्वौपयिकसर्वदेवतान्तर्यामित्वोक्तिः।वक्तृरूपविवक्षा वा। आराध्यत्वेन चिन्तनमत्र मनसोऽर्पणम्। फलप्रदत्वाध्यवसायो बुद्ध्यर्पणम्। यद्वा द्वयोरपि चिन्ताध्यवसायौ भाव्यौ। मनसाध्यवसायो वा मनोबुद्धिः। उद्देश्यांशं निष्कर्षति—**य एवंभूतो मद्भक्त** इति। अशक्तस्य शक्यनिष्ठाप्रतिपादनप्रकरणत्वात्साक्षाद्भक्तियोगनिष्ठाव्यवच्छिन्दन् श्लोकद्वयस्य पिण्डितार्थमाह—**एवं कर्मयोगेने**ति। उद्देश्यविशेषणेष्वपि तात्पर्यं मीमांसकैरेवाङ्गीकृतम्, यत्र विशेषणप्रयोगस्य गत्यन्तरं नोपलब्धमिति भावः।प्रियः प्रीतिविषयः,प्रीतोऽहं तदभिलषितं ददामीति भावः॥१३॥१४॥

अथ निर्ममत्वादिफलभूतं लोकोद्वेगकरकर्मत्यागरूपं गुणं विदधत्तत्फलयोगं च दर्शयति—'यस्मात्' इति श्लोकेन। यच्छब्दावृत्तिमात्रेणाधिकार्यन्तरत्वशङ्कानिवृत्त्यर्थं—**यस्मात्कर्मनिष्ठादि**त्युक्तम्। लोकगताया उद्वेगनिवृत्तेः कर्मनिष्ठं प्रति विधातुमशक्यत्वादुद्वेगकारणभूतकर्मनिवृत्तिर्विधेयत्वेन विवक्षितेति दर्शयति—**यो लोकोद्वेगकर**मिति। अपकाररूपत्वाभावेऽप्यश्लीलभाषणादिमात्रेणापि हि लोकोद्वेगो जायत इत्यभिप्रायेण—**किञ्चिदपी**त्युक्तम्। एतेन 'अद्वेष्टा' इत्यादिना पूर्वोक्तात्, 'समदुःखसुखः[1] च' इत्यादिना वक्ष्यमाणाच्च वैषम्यं सिद्धम्। 'लोकान्नोद्विजते च यः' इत्यत्रापि हेत्वभावे तात्पर्यम्, अन्यथा पूर्वोत्तरपौनरुक्त्यप्रसङ्गात्, अस्मिन्नपि श्लोके 'हर्षामर्षभयोद्वेगैर्मुक्तः' इत्युद्वेगाभावस्य विहितत्वात्, 'यस्मान्नोद्विजते' इत्यनेन भिन्नरीतित्वप्रसङ्गाच्चेत्यभिप्रायेणाह—**यमुद्दिश्ये**ति। लोकगतोद्वेगकरकर्मनिवृत्तिरपि नास्य विधेयेति विधेयं दर्शयितुं लोकस्य तथाविधकर्माकरणे हेतुमाह—**सर्वे**ति। यथा सर्वाविरोधित्वेन कर्मनिष्ठं लोको निश्चिनुयात्, तथासौ कर्मनिष्ठो वर्तेतेत्युक्तं भवति। 'यो न हृष्यति न द्वेष्टि'[2] इति वक्ष्यमाणादत्र हर्षादेर्विषयभेदेन निवर्तकभेदेनच

प्र-पा॥ १. गी. १२ १८॥ | २. गी. १२-१७॥

शं॥तथा गुणवल्लाभे विपर्यये च सन्तुष्टः। सततं योगी समाहितचित्तः। यतात्मा संयतस्वभावः। दृढनिश्चयः, दृढः स्थिरः निश्चयः अध्यवसायः यस्य आत्मतत्त्वविषये स दृढनिश्चयः। मय्यर्पितमनोबुद्धिः, सङ्कल्पविकल्पात्मकं मनः, अध्यवसायलक्षणा बुद्धिः, ते मय्येव अर्पिते स्थापिते यस्य संन्यासिनः सः मय्यर्पितमनोबुद्धिः। यः ईदृशः मद्भक्तः सः मे प्रियः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमे अध्याये सूचितं, तत् इह प्रपञ्च्यते ॥ १४ ॥

यस्मात् संन्यासिनः न उद्विजते न उद्वेगं गच्छति न संतप्यते न संक्षुभ्यति लोकः, तथा लोकात् न उद्विजते च यः, हर्षामर्षभयोद्वेगैः, हर्षश्च अमर्षश्च भयं च उद्वेगश्च तैः हर्षामर्षभयोद्वेगैः मुक्तः—हर्षः प्रीतिः अर्थलाभे अन्तःकरणस्य उत्कर्षः रोमा-

रा॥द्वेगकरं कर्म करोति, सर्वाविरोधित्वनिश्चयात्; अत एव कञ्चन प्रति हर्षेण, कञ्चन प्रत्यमर्षेण, कञ्चन प्रति भयेन, कञ्चन प्रत्युद्वेगेन मुक्तः; एवंभूतो यः, सोऽपि मम प्रियः ॥ १५ ॥

अनपेक्षश्शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥ १६

अनपेक्षः आत्मव्यतिरिक्ते कृत्स्ने वस्तुन्यनपेक्षः, शुचिः-शास्त्रविहितद्रव्यवर्धितकायः, दक्षः-शास्त्रीयक्रियोपादानसमर्थः, अन्यत्रोदासीनः, गतव्यथः - शास्त्रीयक्रिया-

ता॥वैषम्यज्ञापनायाह— अतएव कंचनप्रतीति।अतएवेति-उपकारापकारादिहेतुभेदाभावादित्यर्थः । कंचन प्रत्युद्वेगेनेति —भयादेः पृथगुक्तत्वाद्भयकार्यभूतं कर्म वा जुगुप्सा वाऽत्रोद्वेगः।'यस्मान्नोद्विजते' इत्यादिवाक्यत्रयार्थसङ्कलनेनाह —यएवंभूतइति । पूर्वश्लोकोक्तमैत्रत्वकरुणत्वादिगुणगणाभावेऽपि लोकोद्वेगकरकर्मनिवृत्तिमात्रेणापि प्रीतो भवामीति 'सच' इत्यादिनोच्यत इत्याह— सोऽपीति ॥१५॥

आत्ममात्रापेक्षत्वेन शास्त्रीयमात्रजागरूकत्वं तद्व्यतिरिक्तेष्वत्यन्तनिरीहत्वं चाह —'अनपेक्षः' इति श्लोकेन । प्रस्तुताधिकारविरोधव्युदासाय सामान्यं विशेषे नियमयति- -आत्मव्यतिरिक्तइति । अन्येषु संकोचकाभावात्—कृत्स्नइत्युक्तम् । फलीभूतस्य शुचित्वस्य स्वरूपेण विधातुमशक्यत्वात्तद्धेतौ तात्पर्यमित्याह—शास्त्रविहितेति । अन्यविषयसामर्थ्यस्यानुपयुक्तत्वात्तदुपयुक्तानुष्ठानसामर्थ्यं दक्षशब्देनाभिधीयत इत्याह—शास्त्रीयेति । विरोधपरिहारायौदासीन्यं विहितव्यतिरिक्तविषयमित्याह — अन्यत्रोदासीनइति । अविहिताप्रतिषिद्धेष्वित्यर्थः । अपक्षपातित्वमिहौदासीन्यं वदन्तः 'समश्शत्रौ च' इत्यादिवक्ष्यमाणपौनरुक्त्यान्निरस्ताः । निषिद्ध्यमानव्यथाप्रसङ्गं दर्शयति—शास्त्रीयक्रियानिर्वृ-

शं॥श्रनाश्रुपातादिलिङ्गः,अमर्षः असहिष्णुता, भयं त्रासः, उद्वेगः उद्विग्नता,तैः मुक्तः यः सः च मे प्रियः ॥ १५ ॥

अनपेक्षः देहेन्द्रियविषयसम्बन्धादिषु अपेक्षा यस्य नास्ति सः अनपेक्षः निस्स्पृहः शुचिः, बाह्येन आभ्यन्तरेण च शौचेन सम्पन्नः । दक्षः, प्रत्युत्पन्नेषु कार्येषु सद्यः यथावत् प्रतिपत्तुं समर्थः । उदासीनः, न कस्यचित् मित्रादेः पक्षं भजते यः स उदासीनः ।

आ॥'सर्वारम्भपरित्यागी' इत्यादेः सामान्यविशेषव्याख्यानव्याख्येयभावेनापुनरुक्तिः॥ हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति यो न हृष्यतीत्युक्तम्।उपचारपरिहारार्थं पूर्वम् आधिक्यज्ञानार्थं भक्त्यभ्यासः । 'येतु सर्वाणि कर्माणि' इत्यादेः प्रपञ्च एषः॥ १६॥

ज॥पुनरुक्तिदोषमाशङ्क्य परिहरति—सर्वेति । 'सर्वारम्भपरित्यागी' 'शुभाशुभपरित्यागी' इत्यादौ सामान्यविशेषभावेन । 'संतुष्टः सततं' 'संतुष्टो येनकेनचित्' इत्यादौ व्याख्यानव्याख्येयभावेन 'हर्षामर्षभयोद्वेगैर्मुक्तः' 'यो न हृष्यति' इत्यत्र नोक्तं प्रकारद्वयं संभवतीत्यत आह—हर्षादिभिरिति।निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीत्याशङ्क्य क्रियाप्रबन्धे विहितेन लटा प्रतिपादयतीत्यर्थः। तर्हीदमेवास्तु किं तेनेत्यत आह—उपचारेति । सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः। 'यो मद्भक्तः' इति भक्तिः पुनःपुनरुच्यते,तत्प्रयोजनमाह—आधिक्येति। 'अद्वेष्टा' इत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेषः।'अद्वेष्टा' इत्यादेः संगत्यदर्शनात्तामाह— येत्विति।प्रपञ्चस्तदुपलक्षितस्याभिधानम्। अक्षरोपासकानधिकृत्यैतदुच्यत इत्यसत्, सन्निहितसंबन्धे सति व्यवहितसंबन्धग्रहणायोगात्, 'यो मद्भक्तः स मे प्रियः' इत्यादिवचनाच्च ॥ १६ ॥

रा॥निर्वृत्तावश्यवर्जनीयशीतोष्णपरुषस्पर्शादिदुःखेषु व्यथारहितः ,सर्वारम्भपरित्यागी-शास्त्रीयव्यतिरिक्तसर्वकर्मारम्भपरित्यागी, य एवंभूतो मद्भक्तः, स मे प्रियः ॥ १६॥

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान् यस्स मे प्रियः ॥ १७**

**यो न हृष्यति** - यन्मनुष्याणां हर्षनिमित्तं प्रियजातं तत्प्राप्य यः कर्मयोगी न हृष्यति , यच्चाप्रियं, तत्प्राप्य न द्वेष्टि ; यच्च मनुष्याणां शोकनिमित्तं भार्यापुत्रवित्तक्षयादिकं, तत्प्राप्य न शोचति ; तथाविधमप्राप्तं च न काङ्क्षति ; **शुभाशुभपरित्यागी**

ता॥त्यक्ताविति।विहितयोगारम्भादिव्यवच्छेदायाह—**शास्त्रीयव्यतिरिक्तेति**।साभिसंधिकपरित्यागस्यात्र विवक्षितत्वात् माध्यस्थ्यरूपौदासीन्याद्भेदः। यद्वा निष्प्रयत्नतारूपोदासीनत्वफलं सर्वकर्मारम्भपरित्यागः। कर्मात्र वाक्कायव्यापारः। स एवारभ्यमाणत्वादारम्भः। तस्योपादानं वा। एतदखिलमपि मद्भक्तिविशिष्टतयैव प्रियत्वकारणमिति मद्भक्तशब्देन विवक्षितमित्याह—**य एवंभूतो मद्भक्त**इति ॥ १६ ॥

अथ दैवादागतेष्वपि प्रियाप्रियेषु शोकहर्षाद्यभावोऽनागतेषु निषिद्धव्यतिरिक्तेष्वपि वाञ्छारहितत्वं तत्कारणत्यागश्चोच्यते—'यो न हृष्यति' इति श्लोकेन । 'हर्षामर्ष' इति पूर्वं पुरुषविशेषनिमित्तं हर्षादिकं निषिद्धम् ; इह त्वर्थलाभादिनिमित्तमिति विशेष इत्यभिप्रायेणाह—**यन्मनुष्याणामिति** । यच्छब्दव्याख्यानरूपेण 'कर्मयोगी' इत्यनेन हर्षाभावहेतुस्सूचितः । आत्मव्यतिरिक्तनिस्स्पृहो ह्ययमिति भावः । 'अद्वेष्टा सर्वभूतानाम्' इत्युक्ताद्विशेषज्ञापनायाह—**यच्चाप्रियं तत्प्राप्येति** । हेत्वनागमने हर्षद्वेषशोकादेरभावस्य सर्वजनसाधारणत्वाद्विकारहेतौ सति निर्विकारत्वं ह्यस्य विधेयो विशेष इति ज्ञापनाय तत्तन्निमित्तकथनम्। [१] मिथिलाया प्रदीप्ताया न मे किंचन दह्यते' इतिवत् प्राप्तेः काङ्क्षणीयत्वाभावात्--**अप्राप्तमित्युक्तम्**।**तथाविधं**—यद्विनाशे शोकस्स्यात्,तथाभूतमित्यर्थः।एतेन शोकादिनिवृत्तौ हेतुस्सूचितः। यथोक्तं भगवता पराशरेण '[२]यावतः कुरुते जन्तुस्सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य

प्र-पा॥ १. भारते-शा. राज. १७ १९. मोक्ष.च. २८२-४'अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते ॥'—अत्रेयं कथानुसन्धेया-श्रीजनकराजं कश्चिदृषीश्चोद्दिश्य शुके ज्ञानोपदेशङ्कुर्वति सति श्रीजनकराजमुखमवलोक्यैवोपदिशति शुकः, तदा 'राजत्वात् दृष्टोपकारापेक्षया तन्मुखमवलोक्यैवोपदिशति' इति ऋषीणां विचारे सति, शुकः कयाचिन्मायया 'जनकपुरी आश्रमाश्च दह्यन्ते' इति तेषां प्रतिभां चकार ; तदा ऋषयः-'मम कृष्णाजिनन्दग्धं मम दग्धः कमण्डलुः' इति'कमण्डलुर्दग्धः, कृष्णाजिनं दग्धं, वल्कलं दग्धं, निष्टो दग्धः' इत्यतिपर्याकुलाः स्वाश्रमेषु गत्वा तत्र दाहमपश्यन्तः पुनरागत्य लज्जाविष्टाः स्थिताः; श्रीजनकराजस्तु नवनिधिपरिपूर्णस्वकोशगृहान्तःपुरादिदाहावभासेऽपि 'मिथिलायाम्प्रदीप्ताया न मे किञ्चित्प्रदह्यते' इति स्वस्थोऽवस्थितः; तदानीं 'वैराग्यातिशयरूपाधिकारिपूर्वाधिक्यात् तथाऽवोचम्' इत्युवाच शुकः-इति ॥

२. वि. पु. १-१७-६६ ॥ कलत्रपुत्रादिसम्बन्धो दुःखहेतुरेवेत्याह—यावत इति। शोकरूपाः शङ्कवः-कीलकाः,निखन्यन्ते-निपात्यन्ते तेषामपगमे तन्नाशादिशोकानपगमादित्यर्थः ॥

शं॥गतव्यथः गतभयः।सर्वारम्भपरित्यागी, आरभ्यन्त इति आरम्भाः इहामुत्रार्थानि कामहेतूनि कर्माणि सर्वारम्भाः, तान् परित्यक्तुं शीलम् अस्येति सर्वारम्भपरित्यागी यः मद्भक्तः सः मे प्रियः ॥ १६ ॥

किञ्च—यः न हृष्यति इष्टप्राप्तौ, न द्वेष्टि अनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न

रा॥पापवत्पुण्यस्यापि बन्धहेतुत्वाविशेषादुभयपरित्यागी;य एवंभूतो भक्तिमान् , स मे प्रियः ॥ १७॥

समश्शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥ १८
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित् ।
अनिकेतस्स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९

'अद्वेष्टा सर्वभूतानाम्' इत्यादिना शत्रुमित्रादिषु द्वेषादिरहितत्वमुक्तम् ; अत्र तेषु सन्निहितेष्वपि समचित्तत्वं ततोऽप्यतिरिक्तो विशेष उच्यते ; आत्मनि स्थिरमति-

---

ता॥निखन्यन्ते हृदये शोकशङ्कवः'इति।शुभाशुभशब्दयोर्मङ्गलतदितरमात्रविषयतया प्रयोगेऽपि मङ्गलत्वाद्याकारतापि पुण्याद्याकाररूपत्वेनैवेति तन्निषेधे तात्पर्यम्।तत्र पापस्य दूरनिरस्तत्वात् दृष्टान्तार्थे तदुपादानमित्यभिप्रायेणाह—**पापवत्पुण्यस्यापी**ति । स्वर्गादिहेतोः पुण्यस्य विधिविषयस्यापि तत्साधनत्ववेषेण त्याज्यत्वे हेतुमाह—**बन्धहेतुत्वाविशेषा**दिति । एतेन स्वर्गादिहेतोः पुण्यस्यापि मुमुक्ष्वपेक्षया पापत्वमेवेति सूचितम् । शास्त्रवेद्यमनिष्टसाधनं हि पापम् । श्रुतिश्च १'न सुकृतं न दुष्कृतम्' इत्युक्त्वा 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति निगमनेन सुकृतस्यापि पाप्मतामाह ॥ १७ ॥

'समश्शत्रौच' इत्यादिना श्लोकद्वयेन बहुविधं सहेतुकं साम्यमुच्यते; तत्र पुनरुक्तिमाशङ्क्य परिहरति—**अद्वेष्टे**ति । सन्निहितस्वरूपमानावमानादिद्वन्द्वान्तरसहपाठवशादत्र शत्रुमित्रयोरपि सन्निहितयोर्विवक्षा । सन्निधिर्हि विकारमतिशयेन जनयति। **ततोऽप्यतिरिक्त**इति दूरस्थासन्नसाधारणात् अद्वेषमात्रादतिरिक्त इत्यर्थः।क्वचिदपि सङ्गवर्जितत्वाच्छीतोष्णादिषु समत्वम्।निन्दास्तुत्योः फलभूतामर्षानुरागादिरहितत्वान्निष्फलत्ववेषेण तुल्यत्वम् । 'मौनी' इति नात्र मननं विवक्षितम् , 'स्थिरमतिः'

---

**प्र-पा॥**१.छा.उप-८-४-१॥'अथ य आत्मा ससेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृत न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' ॥ —उक्तलक्षण आत्मा सेतुरिव विधारकः,किमर्थं सेतुर्विधृतिरित्यत्राह—एषां लोकानामसंभेदायेति । असम्भेदः-असङ्करः, यद्ययम्परमात्मा स्वशासनेन जगन्न धारयेत्, सर्वधर्माणां साङ्कर्यमेव स्यात् । पृथिव्या गन्धो जलस्य शैत्यं तेजस औष्ण्यमित्यादयो हि धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति । तरतिः प्राप्तिवचनः। वेदान्तन्तरतीतिवत् । सेतुं-परमात्मसेतुम्, अहोरात्रे परिच्छेदकत्वेन न प्राप्नुतः,जरादिकमपि न प्राप्नोति । सर्वेपाप्मा न इति--शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोरलौकिकमुमुक्ष्वनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तसद्भावात् । पापशब्दो मुख्य इतिव्यासार्यैर्लघुसिद्धान्ते उक्तम् । तत्र हेतुमाह—अपहतपाप्मेति। ब्रह्मलोकः ब्रह्मरूपो लोकः, एषः अपहतपाप्मा हि । हिर्हेतौ । यस्मात् अपहतपाप्मा, तस्मात्सर्वे पाप्मानोऽतो निवर्तन्ते इत्यर्थः। पापहेतुकर्माचरणेऽपि तदुत्पत्तिप्रतिबन्धकशक्तियोगित्वमेव अपहतपाप्मत्वम्। तस्मान्न पापशब्दमुख्यार्थसुकृतदुष्कृतयोस्तत्फलभूतजरारोगादीनाञ्च प्रसक्तिरित्यर्थः ॥

---

शां॥अप्राप्तं काङ्क्षति, शुभाशुभे कर्मणी परित्यक्तुं शीलम् अस्य इति शुभाशुभपरित्यागी भक्तिमान् यः सः मे प्रियः ॥ १७ ॥

समः शत्रौ मित्रे च, तथा मानापमानयोः पूजापरिभवयोः, शीतोष्णसुखदुःखेषु

रा॥ त्वेन निकेतनादिष्वसक्त इत्यनिकेतः ; तत एव मानावमानादिष्वपि समः ; य एवंभूतो भक्तिमान् , स मे प्रियः ॥ १८ ॥ १९ ॥

**अस्मादात्मनिष्ठाद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन् यथोपक्रममुपसंहरति—**

ता॥इत्यनेनैव सिद्धत्वात्, मुनिर्मननशीलः, तस्य भावो मौनमित्यप्रसिद्धार्थता च स्यात्; नापि समस्तशब्दानुच्चारणं, तस्यात्यन्तापेक्षाभावात्, सङ्कीर्तनादिविधेश्च ; नच कालविशेषादिनियतमौनव्रतं, तस्योपयुक्तत्वेऽपि पूर्वोत्तरसंगत्यभावात्;निन्दन्तं हि निन्दन्ति लौकिकाः,स्तुवन्तं च स्तुवन्ति;ततः प्रसक्तनिन्दास्तोत्रप्रतिक्षेपपरत्वमेवोचितम् । 'सन्तुष्टो येनकेनचित्' इति मौनित्वे हेत्वन्तरपरम् ; अन्यथा 'संतुष्टस्सततं योगी, इति पूर्वोक्तत्वेन पुनरुक्तिप्रसङ्गात्।यदृच्छयागतैर्यत्किञ्चिद्द्रव्यैरसंतुष्टो हि सापेक्षतया स्तुतिपूर्वं कञ्चन याचते, अदातारं च द्विष्यात्। यद्वा अन्यस्तुतितात्पर्येण वा निन्दन्ति । स्थिरमतित्वस्य प्रकरणविशेषितं विषयं दर्शयन् सर्वस्योपरि निर्दिष्टस्य तस्य साक्षात्परंपरया वा पूर्वोक्तसमस्तहेतुत्वंच दर्शयति—**आत्मनी**ति।निकेतननिषेधस्य क्षेत्रादिनिषेधोपलक्षणतया आदिशब्दः।अत्र 'समः' इति द्वौ परिव्राड्विषयाविति यादवप्रकाशोक्तस्य न लिङ्गं पश्यामः। शत्रुमित्रसाम्यादिगुणानां मुमुक्षौ गृहस्थेऽप्यवश्यंभावादनिकेतत्वस्य च 'नैचापि रम्यावसथप्रियस्य' इत्यादिन्यायेन निस्सङ्गतयापि निर्वाहात्, गृहस्थादिषु निकेतसद्भावनिषेधस्यानुपकारकत्वात् , तत्सद्भावस्य क्वचिद्योगाद्युपकारकत्वसंभावनयाच तत्सङ्गमात्रमेव निषेध्यतया विवक्षितमिति दर्शयितुम्—**असक्त**इत्युक्तम् । अत एव 'अद्वेष्टा' इत्यादीनां सर्वेषामप्यक्षरोपासकसंन्यासिविषयत्वं शंकरोक्तं निरस्तम् । क्वचित्सक्तस्य हि स्वरूपतस्तु खत्वरहितैर्मानादिभिः प्रीत्यादिकम् ; अतः क्वचिदपि सङ्गाभावान्मानादिषु समत्वमित्याह —**तत एवे**ति । पूर्वश्लोकेष्विवात्रापि यत्तच्छब्दाध्याहारेणोद्देश्यविधेयांशविभागं दर्शयति—**य एवंभूतो भक्तिमान्स मे प्रिय** इति ॥ १८ ॥ १९ ॥

अध्यायोपक्रमे प्रश्नपूर्वकं भक्तियोगनिष्ठस्य अक्षरनिष्ठाच्छ्रैष्ठ्यं ह्युक्तम्; भक्तियोगाशक्तिप्रसङ्गेन अक्षरयोगस्य परंपरया भक्तियोगसाधनत्वं तदपेक्षितगुणाश्चोक्ताः ; अथाध्यायारम्भगतप्रश्नस्योत्तरं प्रपञ्चितं निगमयतीत्याह —**अस्मा**दिति । 'मय्यावेश्य मनो ये माम्' इति श्लोकोऽयं चैकार्थ एव ह्युपलभ्यत इत्यभिप्रायेण —**यथोपक्रम**मित्युक्तम्। तत्र 'नित्ययुक्ताः' इत्युक्त एवार्थोऽत्र 'मत्परमाः' इत्युच्यते। तत्र 'श्रद्धया परयोपेताः' इत्युक्तम्; अत्र तु 'श्रद्दधानाः' इति । तत्र 'ते मे युक्ततमा

**प्र॰पा॥** १. गी. १२. १४ ॥

२. वासिष्ठस्मृतौ-१०-अ-७. आपस्तम्बस्मृतौच १० अ-६-७. श्लोकौ ॥ नशब्दशास्त्राभिरतस्य मोक्षो नचापि रम्यावसथप्रियस्य । नभोजनाच्छादनतत्परस्य नलोकचित्तग्रहणेरतस्य ॥ एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रियप्रीतिनिवर्तकस्य । अध्यात्मविचारतमानसस्य मोक्षो ध्रुवो नित्यमहिंसकस्य ॥

३. गी. १२-२ ॥

**शं॥समः, सर्वत्र सङ्गविवर्जितश्च ॥ १८ ॥**

**किञ्च—तुल्यनिन्दास्तुतिः निन्दा च स्तुतिश्च निन्दास्तुती तुल्ये यस्य सः तुल्यनिन्दास्तुतिः । मौनी मौनवान् संयतवाक् । सन्तुष्टः येनकेनचित् शरीरस्थितिहेतुमात्रेण ; तथा च उक्तं—'येनकेनचिदाच्छन्नो येनकेनचिदाशितः । यत्र क्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः' इति । किञ्च—अनिकेतः निकेत आश्रयः निवासः नियतः न विद्यते यस्य सः अनिकेतः, 'अनागारः' इत्यादिस्मृत्यन्तरात् । स्थिरा परमार्थवस्तुविषया यस्य मतिः सः स्थिरमतिः । भक्तिमान् मे प्रियः नरः ॥ १९ ॥**

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २०

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

श्रीकृष्णाय परब्रह्मणे नमः.

---

रा ॥ धर्म्यं चामृतं चेति धर्म्यामृतं, ये तु प्राप्यसमं प्रापकं भक्तियोगं, यथोक्तं—'मय्यावेश्य मनो ये माम्' इत्यादिनोक्तेन प्रकारेण, उपासते; ते भक्ताः अतितरां मम प्रियाः ॥ २० ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

श्रीमते रामानुजाय नमः.

---

ता॥ मताः' इत्युक्तम्;अत्र तु तत्फलित्वेन 'भक्तास्तेऽतीव मे प्रियाः' इत्युच्यते। अतस्स एवार्थोऽत्रोपसंह्रियते। अस्य चाधिकार्यन्तरपरत्वे तुशब्दविशेषणादयो हेतवः पूर्वमेवोक्ताः। अनेनैव च श्लोकेन मध्यमषट्कप्रधानार्थभक्तियोगोपसंहारश्च कृतो भवति। 'धर्म्यामृतम्' इत्यनेन विवक्षितमाकारद्वयं वक्तुं तदुपयुक्तं कर्मधारयत्वं दर्शयति—धर्म्यंचामृतंचेति । धर्मादनपेतं धर्म्यम् । अतोऽत्र धर्म्यशब्देन साधनत्ववचनादमृतशब्देनामृतसाधनत्वस्याविवक्षितत्वात्फलवदेव भोग्यत्वं विवक्षितमित्याह· -येतु प्राप्यसममिति । यथोक्तमिति व्याख्येयपदोपादानम् । प्रसङ्गागतकर्मयोगोक्तेर्व्युदासाय मय्यावेश्येत्यादिकमुक्तम्। पूर्वोक्तानामन्येषामपि भक्तत्वमस्तीति तद्व्यवच्छेदाय ·ते भक्ताइति विशेष्यते। पूर्वेषु प्रियत्वमुदारत्वप्रयुक्तम्; अस्मिंस्तु स्वाभिमतान्तरात्मत्वप्रयुक्तम् । अतो ह्यतीव प्रियत्वमिहोक्तम् । उक्तं च प्रागेव—'उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इत्याद्युपक्रम्य 'स महात्मा

प्र-पा ॥ १. गी. ७ १८ ॥ | २. गी. ७-१९ ॥

---

शां॥'अद्वेष्टा सर्वभूतानाम्'इत्यादिना अक्षरोपासकानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तम् उपसंहरति—ये तु संन्यासिनः धर्म्यामृतं धर्म्यंश्च तत् अमृतं च तत्, अमृतत्वहेतुत्वात्, इदं यथोक्तम्'अद्वेष्टा सर्वभूतानाम्'इत्यादिना पर्युपासते अनुतिष्ठन्ति, श्रद्दधानाः सन्तः मत्परमाः यथोक्ताः अहम् अक्षरात्मा परमः निरतिशया गतिः येषां ते मत्परमाः, मद्भक्ताः च उत्तमां परमार्थज्ञानलक्षणां भक्तिम् आश्रिताः ते अतीव मे प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति यत् सूचितं तत् व्याख्याय इह

---

आ॥पिण्डीकृत्योपसंहरति—ये तु धर्म्यामृतमिति । धर्मो विष्णुस्तद्विषयं धर्म्यम्। अमृतं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रद्धास्तिक्यम्। 'श्रन्नामास्तिक्यमुच्यते,

---

ज॥'येतु'इत्युक्तमेव किमर्थमुच्यत इत्यत आह—पिण्डीकृत्येति । धर्म्यामृतमित्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति—धर्मइति । तद्विषयं तदुपासनाङ्गत्वात् धर्मादनपेतं धर्म्यम्; धर्मश्च विष्णुः; नादृष्टम्,प्रवृत्तस्यासंभवात्, निवृत्तस्यैतत्साधनत्वात्।इदानीममृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह—धर्म्यमिति। न मृतम् अमृतम्। नञ्विरुद्धार्थे; मृतशब्दश्चोपलक्षक इत्यर्थः। श्रद्धाना इत्येतद्व्युत्पादयति—श्रदिति। 'श्रच्छब्दस्योपसंख्यानम्'इत्युपसर्गत्वेनोपसंख्यायमानस्याप्यस्य

ता॥सुदुर्लभः' इति। एतेन 'अद्वेष्टा'इत्यादिना प्रक्रान्तं धर्मजातं 'ये तु धर्म्यामृतम्' इति श्लोकेनोपसंह्रियत इति परोक्तं निरस्तम्, भिन्नाधिकारविषयत्वस्य व्यञ्जितत्वात् ॥ २० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीगीताभाष्यटीकायां तात्पर्यचन्द्रिकायां द्वादशोऽध्यायः ॥ १२ ॥

---

शं॥उपसंहृतं'भक्तास्तेऽतीव मे प्रियाः' इति।यस्मात् धर्म्यामृतम् इदं यथोक्तम् अनुतिष्ठन् भगवतः विष्णोः परमेश्वरस्य अतीव प्रियः भवति, तस्मात् इदं धर्म्यामृतं मुमुक्षुणा यत्नतः अनुष्ठेयं, विष्णोः प्रियं परं धाम जिगमिषुणा ; इति वाक्यार्थः ॥ २० ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ
श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥
द्वितीयं षट्कं समाप्तम् ॥ २ ॥

---

आ॥इत्यभिधानम् । तद्धानाः श्रद्धानाः ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

---

जा॥सत्त्ववाचित्वमविरुद्धम्, उपसर्गत्वस्य कार्यविशेषार्थत्वात् ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥



श्रीः

श्रीमते रामानुजाय नमः

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

---

भक्तेश्श्रैष्ठ्यमुपायोक्तिरशक्तस्यात्मनिष्ठता ।
तत्प्रकारास्त्वतिप्रीतिर्भक्ते द्वादश उच्यते ॥ १६ ॥

श्रीमद्यामुनमुनये नमः ॥

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्रच भाष्यम् —'अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनाद्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुसुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्ते' इति। अत्र —अतिप्रीतिर्भक्तइत्यस्योपादानमुपसंहारमात्रताव्यञ्जनार्थम्। उपायोक्तिः— 'अथ चित्तं समाधातुम्' इत्यादिश्लोकद्वयेन कृता । भगवति चित्तं समाधातुमशक्तस्य भगवद्गुणाभ्यासः, तत्राप्यशक्तस्य प्रीतिपूर्वकभगवदसाधारणकर्मकरणम्, तस्मिन्नप्यसमर्थस्यात्मनिष्ठेति क्रमः।तत्प्रकाराः —कर्मयोगाद्यपेक्षिताः 'अद्वेष्टा सर्वभूतानाम्' इत्यादिनोक्ताः उपादेयगुणप्रकाराः । तथाच तत्र भाषितम् 'अनभिसंहितफलकर्मनिष्ठस्योपादेयान् गुणानाह ' इति । अतिप्रीतिर्भक्ते 'ये तु धर्म्यामृतमिदं यथोक्तम्' इत्यादिना अध्यायान्तिमश्लोकेनोक्ता। तदभिप्रेतं चैवमुक्तम् —'अस्मादात्मनिष्ठाद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन्यथोपक्रममुपसंहरति'—इति ॥ १६ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

